संस्कृत संशोधन संसत् ग्रन्थमाला - ३७

श्रीशठकोपमुनीन्द्रविरचिता

'तिरुवाय्मोळि'

इति प्रथिता

# स ह स्र गी तिः

महामहिमोपाध्याय-प्रतिवादिभयङ्करम्-अण्णङ्गराचार्यस्वामिविरचित-संस्कृतव्याख्यया
यादवाद्रि-अक्कारक्कनि-सम्पत्कुमाराचार्यस्वामिलिखित-हिन्दीव्याख्यया च समेता

प्रथमः सम्पुटः

प्रायोजकः
**भारतीय - उच्च - अध्ययन - संस्थान**
शिम्ला - १७१ ००५

संयोजिका
**संस्कृत - संशोधन - संसत्**
यादवाद्रिः (मेलुकोटे)-५७१ ४३१

**सहस्त्रगीतिः**
प्रथमः सम्पुटः
संस्कृत हिन्दी व्याख्या समेता

प्रमुख सम्पादकः
**श्री. एम्.ए.एस्. राजन्**
अध्यक्षः

प्रधानसम्पादकः
**प्रा. विनोद चन्द्र श्रीवास्तवः**
निदेशकः, भारतीय-उच्च-अध्ययन-संस्थान, शिम्ला

**प्रायोजकः**
भारतीय-उच्च-अध्ययन-संस्थान
राष्ट्रपति निवास, शिम्ला - १७१ ००५

प्रथमसंस्करणम् - २००३
प्रतयः - १०००
मूल्यम् -

अक्षरसंयोजनं मुद्रणञ्च
**संस्कृत - संशोधन - संसत्**
यादवाद्रिः (मेलुकोटे) - ५७१ ४३१

*Academy of Sanskrit Research Series - 37*

"Tiruvaymoḷi"

# *SAHASRA GĪTIḤ*

Sri Śaṭhakopasūriḥ

with

*Sanskrit Commentary*

Mahāmahimopādhyāya P.B. Annangaracharya swamy

*Hindi Commentary*

T. A. Sampathkumaracharya swamy

Volume - I

***Published***

by

INDIAN INSTITUTE OF ADVANCED STUDY

Shimla - 171 005

*Prepared*

*by*

ACADEMY OF SANSKRIT RESEARCH

Melkote-571 431

SAHASRAGĪTIḤ
I - Volume
With Sanskrit and Hindi commentary

General Editor
Sri. M.A.S. Rajan
President

Chief Editor
Prof. Vinod Chandra Srivastav
Director, Indian Institute of Advanced Study, Shimla

Sponsored by
Indian Institute of Advanced Study
Rashtrapati Nivas, Shimla - 171 005

First Edition - 2003
Copies-1000

PRICE:

Typeset by DTP System
Academy of Sanskrit Research
Melkote - 571 431

## कार्यनिर्वाहकमण्डली

ग्रन्थमालासम्पादकः

**श्री. एम्.ए.एस्. राजन्** एम्.एस्सि

प्रधानसम्पादकः

**प्रा. विनोद चन्द्र श्रीवास्तवः**

निर्देशकः, भारतीय - उच्च - अध्ययनसंस्था, शिम्ला

सम्पादकाः

**विद्वान् श्री. एम्.ए. लक्ष्मीताताचार्यः**

**विद्वान् श्री. एम्बार् वरदाचार्यः,**

**विद्वान् श्री. एस्. नारायणः.**

संशोधनसहायकः

**विद्वान् श्री. एस्.कृष्णन्,**

तान्त्रिकसहायकाः

**श्रीमती रेणुका वि.**

**श्री. जवरेगौडः**

**कुमारि. श्रीमति**

**श्रीमती सरस्वती. एम्.एन्**

**श्री. बेट्टस्वामिगौडः के.एस्.**

# Executive committee

Editor of series
**Sri. M.A.S. Rajan,** M.Sc

Chief Editor
**Prof. Vinod Chandra Srivastav**
Director, Indian Institute of Advanced Study, Shimla

Editors
**Prof. Sri. M.A. Lakshmithathachar**
**Vidvan Sri. Embar Varadhacharya**
**Vidvan Sri. S. Narayana,**

Research Assistant
**Vidvan Sri. S.Krishnan**

Technical Assistants
**Smt. Renuka V.**
**Sri. Javare Gowda**
**Kum. Srimathi**
**Smt. Saraswathy M.N.**
**Sri. Bettaswamy Gowda K.S.**

# पुरोवाक्

## श्रीमते रामानुजाय नमः

भारतीयसंस्कृतिप्रतीकेषु वेदेषु, अनल्पेषु इतिहासपुराणादिषु च अनेकदेवानां प्राधान्यं दरीदृश्यते । एकत्र ब्रह्मणः, अन्यत्र शिवस्य, अपरत्र इन्द्रस्य, पुनरन्यत्र श्रीमन्नारायणस्य च प्राधान्यं समालक्ष्यते । प्रधानं अधिदैवतं किम् इति सुदृढाध्यवसायशून्याः सन्ति सन्तो महान्तः वेदपारगाः । परन्तु **'द्रमिडोपनिषत्'** इति समाम्नाता चतुस्सहस्री तु युक्तियुक्ताभिः वाग्भिः 'पुण्डरीकाक्षः नित्यसूरिसनाथः श्रीमन्नारायणः एव सः नाथः अस्माकम् इति दृढाध्यवसायेन प्रदर्शयति । नान्यः देवः समाश्रयणीयः' इति उद्घोषयति च। पञ्चसहस्रवर्षेभ्यः प्रागेव दक्षिणभारते श्रीमन्नारायणसेवाहेवाकाः भागवतोत्तमाः न्यवसन् इति द्रमिडोपनिषत्प्रबन्धस्य अध्ययनेन ज्ञायते । 'तिरुवाय्मोळि' इत्यस्य, शठकोपसूरेः श्रीमुखकमलात् विनिस्सृता दिव्या वाक् इत्यर्थः । षोडशसङ्ख्याकासु आळवारपङ्क्तिषु मूर्धन्यभूतः अयं भागवतोत्तमः **'नम्माळवार्'** इति नाम्ना प्रथितः वर्तते ।

'भगवता श्रीमन्नारायणेन स्वनाभिकमले प्रथमं चतुर्मुखः ब्रह्मा उत्पादितः । तदनु तेन ब्रह्मणा रुद्रपुरंदरादयः विसृष्टाः । यः कृष्णरूपेण भुवि अवतीर्य पूतनास्तन्येन साकं तस्याः प्राणानपि अचूचुरत् तमद्भुतचरितं सेवध्वम्' इति उपदिशति जनान् अयं नम्माळवार् स्वकीयदिव्यप्रबन्धे तिरुवाय्मोळि इति विश्रुते ग्रन्थे ।

भगवतः श्रीमन्नारायणस्य दिव्यतुलसीमालाविलसत्कन्धरस्य उद्धृतभूधरस्य संश्लेषं काङ्क्षमाणः, तस्मै जननीवाचा, स्त्रीवाचा च मयूर-शुक-पिक-हिमांशु- सागर-पवमानान् दूत्यकर्मणि नियुज्य साह्यं कर्तुं अश्रुपूर्णनयनः प्रार्थयति । तेन सह लब्धसमाश्लेषः शठकोपसूरिः भगवन्तं 'बहु दिवसानन्तरं मया सह संश्लिष्टोऽसि । विहाय मां कुत्रापि विहायसि मा गच्छ त्वमितः परं' इति सदैन्यं याचते ।

'क्षोणीकोणशतांशस्य प्रदेशस्य राजानः भूत्वा कतिपयदिवसानन्तरं करतलधृतकपालाः निशीथे भिक्षां याचमानाः अन्धकारे कृष्णशुनकेन संदष्टचरणाः भूत्वा महान्तं क्लेशमनुभवन्ति । अस्मिन् क्षणे महीपालाः । ऊर्ध्वक्षणे ते एव याचकाः भूत्वा महीम् अटन्ति । अतः श्रीमन्नारायणं निखिलजगदीश्वरं अनश्वरं सेवध्वम्' इति भक्तजनवृन्दं उपदिशति सहस्रगीतेः चतुर्थशतकस्य प्रथमदशकस्य प्रथमेन अनवद्येन पद्येन ।

शठकोपसूरिरिव अनेके आळवारमहानुभवाः द्रमिडदेशेषु अवतीर्य वैष्णवघण्टापथं पादन्याससुलभम् कण्टककलङ्करहितम् अकुर्वन् ।

अस्याः सहस्रगीतेः अनेकानि व्याख्यानानि सन्ति । अथापि भावार्थसुबोधिन्या संस्कृत हिन्दी टीकया विरहिता एव सा आसीत् एतावत्कालम्। तामेतां न्यूनताम् अपनेतुकामया भारतीय-उच्च-अध्ययनसंस्थया संप्रार्थिता, मेलुकोटे संस्कृत संशोधन संसत् इमां सहस्रगीतिं काञ्चीनगरनिवासिभिः प्रतिवादिभयङ्करम् अण्णङ्गराचार्यैः विरचितेन संस्कृतव्याख्यानेन तथा यदुगिरिनिवासिभिः अक्कारक्कनिसम्पत्कुमाराचार्यवर्यैः विरचितया हिन्दीटीकया च सह संमुद्रय जनोपकारं कृतवती ।

अस्यां सहस्रगीत्यां प्रथमशतकस्य प्रथमदशकेन भगवतः स्वरूपरूपादिगुणान् मुनिवरः प्रस्तौति । द्वितीयदशके सर्वसङ्गपरित्यागपूर्वकं भगवन्तम् आश्रयध्वम् इत्युपदिशति । तृतीये दशके रामकृष्णाद्यवतारेषु निषादनायक - सुग्रीव-कुब्जा-मालाकारादिषु प्रदर्शितं सौलभ्यगुणं विशिनष्टि । चतुर्थे दशके भगवतः विश्लेषदुःखेन उन्मत्त इव भूत्वा स्वस्य भगवता सह संश्लेषसुखं काङ्क्षते । पञ्चमे दशके शठकोपसूरिः नैच्यानुसन्धानं कुर्वन् स्वसमीपम् आगच्छन्तं भगवन्तमालोक्य कुत्रचित् धावितुम् ईहते; परन्तु भगवता निरुद्धः तस्य संश्लेषसुखम् अनुभवति । षष्ठे दशके भगवान् केवलं पत्र-पुष्प-फल-तोयेन स्वाराध्यः इति स्तौति । सप्तमे दशके भगवच्चरणारविन्दमकरन्दास्वादनेन अमन्दम् आनन्दम् अनुभवति मुनिवरः । अष्टमे दशके भगवतः सर्वत्र प्रसृमरम् आर्जवगुणं प्रस्तौति । नवमे दशके भगवतः सम्पूर्णगुणानुभवं शनैः शनैः मुनिवरः अनुभवति । अन्तिमे दशके भगवतः निर्हेतुककृपाविशेषः वर्ण्यते ।

इमां सहस्रगीतिं मेलुकोटे संस्कृत संशोधन संसदा शिम्लास्थ भारतीयोन्नताध्ययनसंस्था साह्येन प्रकटितां संस्कृत-हिन्दी व्याख्याभ्यां विराजमानां सम्यक् अधीत्य मानवाः सर्वे श्रीशठकोपसूरेः श्रीमन्नारायणस्य च अनल्पकृपाकटाक्षलक्ष्याः भवन्तु इति प्रार्थये ।।

मकर-पुष्य-कृष्ण एकादशी
शिम्ला
२८, जनवरि २००३

**विनोद चन्द्र श्रीवास्तवः**
निदेशकः
भारतीय-उच्च-अध्ययन-संस्थान
शिम्ला

# *Preface*

Nammāḷvārs Tiruvaimozhi is a devotional lyric par excellence. The mellifluous poetry of Nammāḷvārs is a spontaneous outflow of his divine experience an expression of his enjoying the divine union with Lord Krishna. He is considered to be the very personification of the yearning of Krishna. Hence he is called Krishna Trishna Tattva (Skt.)

This poetic composition viz. Tiruvaimozhi is comparable to the Sāmaveda. Ācārya Rāmānuja in the 12th century, made it compulsory that, this divine song should be recited in all the Śrīvaiṣṇava shrines. In fact even now, this secular literature in the form of panegyrics is sung in front of the sanctum sanctorum by devout Śrīvaiṣṇavas every day. It is astonishing to see that a secular literature was given the status of a Veda that too to be sung in front of all the holy shrines.

Nammāḷvārs, 'Tiruvaimozhi' is a soliloquy delineating his divine experience in various ways. Many a times in the samādhi state, he could experience God intuitively as a heroin enjoying her hero. God appears and disappears for a while to increase the thirst of Nammāḷvārs for the divine communion. Afflicted by the pangs of separation Nammāḷvārs cries and cries aloud that he has also been cheated by the elusive hero Lord Krishna who has cheated many of his lovers and landed them in a sea of suffering due to separation in the past

Finally God appears before him and says, 'O Nammāḷvārs, I have granted thee my divine abode namely Vaikuṇṭha where you can enjoy me forever; there will be no question of separation in that case." Then Nammāḷvārs asks him "have you granted me that divine abode, for my sake or for your sake." God answers him immediately and says, "It is for your sake" then Nammāḷvārs refuses to accept the offer and says "if my presence in the divine abode is conducive and useful to your bliss then I am prepared to come to the divine abode. On the other hand if my presence is for my own enjoyment of the Supreme soul I am not prepared to come as it is tinged with selfishness. Hence I am not ready to go over there," that was the type of selfless devotion

that Nammāḷvārs had towards the Lord. This is considered the height of Parārtha Kainkarya or Selfless service to the Lord.

This Tiruvaimozhi in the form of psalms in Tamil with its Sanskrit verse translation along with the word to word translation in Sanskrit and Hindi and elaborate Sanskrit and Hindi commentaries is published by the Academy. Indian Institute of Advanced Study, Shimla, which has an eye for poetic excellence thought of bringing out this valuable addition providing financial assistance to the Academy. Rising to the expectations and confidence reposed in the Academy, by the Shimla Institute it has brought out this publication. This publication will go a long way in bringing together the South and the North. The Academy of Sanskrit Research is deeply indebted to the Indian Institute of Advanced Study, Shimla for fully financing this project in bringing out the complete Tiruvaimozhi with Sanskrit and Hindi commentaries.

Many of the Śrīvaiṣṇavas of the North who are daily chanting this divine lyric would be greatly benefited by these two commentaries. Apart from these, people interested in devotional literature can also study and enjoy this Tamil literature through the medium of Hindi and Sanskrit. Once again I thank Dr.Vinod Chandra Srivastav, Director of Indian Institute of Advanced Study, Shimla, for his generous help to publish this unique work blending the North and South. I am also thankful to my crew consisting of research scholars, Vid. Embar Varadachar, Vid. S. Narayana, Vid. S. Krishnan and other staff who have toiled day and night to bring out this publication. I will be failing in my duty if I don't pay my respects to Prof. M.A.S. Rajan, IAS, (Retd.) President of the Academy, Sri B.P. Kaniram, I.A.S. Secretary ASR and members of the Managing Committee for their unstinted support in bringing out this publication. I am sure that this publication will go a long way in bringing out the excellence of the devotional literature irrespective of the fact that it has emerged from the South.

January 2003 M.A. Lakshmithathachar
Melkote Director

# *Foreword*

The Bhakti movement in South India came to the fore during sixth to ninth century A.D. This was the period in which many mystic poets, both Nayanmars of Śaivism and Āḻvārs of Śrīvaiṣṇavism roamed about in the region, singing the praises of the Lord. As they moved from place to place they composed hymns of praise around the deity of that place. The Vaiṣṇavite Āḻvārs put forward Bhakti, which is intense devotion, not so much in the imagery of man and God, as of man and his beloved, be it a child or a lover.

While the devotional hymns were chanted in the temples over the centuries, they remained without codification until the advent of Nambi Antar Nampi in the case of Śaivite hymns, and Nāthamuni for the Śrīvaisnavite hymns, around the end of ninth and the beginning of tenth century.

Tiruvaimozhi is a hymn sung first by a celebrated seer who was given the title of Śrī Nammāḻvar. It is regarded as divinely inspired. Nāthamuni codified it at a later date having heard it in an episode of paranormal experience in which Nammāḻvār and his disciple Madhurakavi appeared before him and imparted knowledge of the works of all Āḻvārs including Nammāḻvār.

Upto the time of Śrī Rāmānuja devotees and disciples learnt the subtlety and meaning of Tiruvaimozhi by word of mouth in the Ācārya-Śiṣya tradition. The first recorded commentary on the work was by a disciple of Sri Rāmānuja.

The Vedāntic philosophy of the Rāmānuja school has two facets. One is the Sanskritic Vedānta and the other is the Drāviḍa Vedānta comprising the outpourings of the Āḻvārs. Both need to be grasped to gain a comprehensive understanding of the Rāmānuja school of thought. The

Academy of Sanskrit Research has brought out many publications based on critical research into the works of Śri Rāmānuja. Thus far, all of them (except one in Kannada) belong to the Sanskritic category. Recently the Indian Institute of Advanced Study, Shimla, came out with assistance for the publication of one of the master-works of the Drāviḍa Vedānta, the 'Bhagavadviṣayam', a collection of commentaries on Tiruvaimozhi. This publication has the "Īḍu" commentary transcreated into Sanskrit by Śrī Mahāmahimopādhyāya P.B.Annangracharya Swamy of Kānci along with a Hindi commentary by T.A.Samapathkumarcharya. The other special feature is the inclusion of the translation of the Tamil verses into Sanskrit verses by the poet scholar Sri. Kalki Narasimhacharya. The whole work will consist of 4 volumes running to about 1,700 pages

Tiruvaimozhi is an exquisite song with 1,102 stanzas. The title means literally 'the melodious emanation from divine lips'. This work has the spontaneity of the outpouring of the experience of the waves of divine bliss. Works like the Śrībhāṣyam, Vedārthasaṅgraha and so on expound the rational and logical bases of Vedānta. Their appeal to the logical mind is a complement to the work of Āḷvārs, and Tiruvaimozhi in particular. The out-pourings of divine experience have remarkable power to melt and thrill the hearts of one and all.

I feel proud to present a work which brings before a wider circle of readership, be it in Sanskrit, Tamil or Hindi, the soul stirring and melodious expressions of divine bliss which have been enjoyed and devotedly preserved by the Tamil knowing people.

Junuary 2003
Melkote

M.A.S.Rajan
President

# उपोद्धातः

## श्रीमते रामानुजाय नमः

प्रपन्नजनकूटस्थानां पराङ्कुशदिव्यसूरीणां (नम्माळ्वार् - इति प्रथितानां ) दिव्यमुखकमलात् स्वानुभवपरीवाहरूपतया स्वयमेव निस्सृता इयं सहस्रगीतिः तिरुवाय्मोळीति प्रथिता गङ्गादिनदीनिर्विशेषा काव्यवाहिनी यस्याम् अवगाह्य नाथमुनिप्रभृतयः आनन्दसागरान्तर्निमग्नाः अभूवन् । श्रीमद्रामायणग्रन्थरचनायाः पूर्वं यथा वल्मीकजन्मा भगवान् महर्षिः वाल्मीकिः प्राचीनाग्रेषु दर्भेषु निषण्णः **'हसितं भाषितं चैव गतिर्या यच्च चेष्टितं । तत्सर्वं धर्मवीर्येण यथावत् संप्रपश्यति' ।** इत्याद्युक्तप्रकारेण यथा श्रीरामचन्द्रस्य हसितादिकं अपश्यत् तथैव मुनिवरोऽयं ध्यानारूढः संसारदावानलदन्दह्यमानजनसुधासंदोहदैः पद्यैः मनोहारिभिः भगवतः कल्याणगुणगणान् अगायत् ।

अयं मुनिवरः अम्लानतुलसीमालासमलङ्कृतदिव्यमङ्गलविग्रहं वक्षस्स्थलोपनिषण्ण-लक्ष्मीसमन्वितं शङ्खचक्रादिसुशोभितं भगवन्तं श्रीमन्नारायणं दिव्यतिंत्रिणीवृक्षस्य अधस्तात् छायायाम् उपविश्य परोक्षचक्षुषा विलोक्य तदीय स्वरूपरूपगुणविभवादीन् अन्वभवत् ।

श्रीमति पाण्ड्यदेशे उत्तुङ्गगिरिशृङ्गलतामहीरुहविहङ्गममञ्जुलारावाभिरामे वहति शुभ्रजला ताम्रपर्णी नाम नदी ।

**'कलौ खलु भविष्यन्ति नारायणपरायणाः ।**
**क्वचित्क्वचिन्महाभाग द्रमिडेषु च भूरिशः ।।**
**ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।**
**कावेरी च महाभागा प्रतीची च महानदी' ।।**

इति हि पुराणवचनम् । ताम्रपर्णीनद्याः समीपे कुरुकापुरी नाम सर्वसम्पत्समृद्धा नगरी विलसति । तां नगरीम् अधिवसन्ति नारायणैकदैवताः भागवतोत्तमाः 'कारि'नाम्ना विश्रुताः । तद्धर्मपत्नी 'उडैयनङ्गैयार्' इति नाम्ना विश्रुता पतिव्रतोत्तमा । **तिरुक्कुरुङ्गुडि** नाम्ना प्रसिद्धदिव्यदेशे विराजमानस्य अर्थिजनमन्दारस्य श्रीमन्नारायणस्य अनुग्रहबलेन सत्पुत्रसन्तानानुग्रहं संप्रापतुः तौ दम्पती । अर्चकसकाशात् तीर्थप्रसादं भक्त्या स्वीकृत्य स्वनगरीं आजग्मतुः । अन्तर्वत्नी च सा महाभागा कारिसहधर्मिणी, श्रीमति वृषभमासे शुभविशाखानक्षत्रे दिव्यशिशोः तेजःपुञ्जविग्रहस्य कुरुकेशः इति प्रतीतस्य जन्म प्रायच्छत् । सामान्यस्तनंधयः इव जातमात्रः एव अयं शिशुः न रुरोद ! अन्तरङ्गे भगवन्तं नारायणं ध्यायन् न जहास ! न स्तन्यपाने आशां प्राचीकशत् ।

लोकविलक्षणं शिशुम् अवलोक्य मातरपितरौ नितान्तं चिन्तार्णवे निमग्नौ भीतिदन्तुरितस्वान्तौ इतिकर्तव्यतामूढौ द्वादशदिनपर्यन्तं निरीक्ष्य आदिदेवः एव नौ आधिपरिहारकः इति निश्चीय शिशुं तं दोळिकायां शयानं कुशेशयोपमितशरीरं, प्रच्छाद्य वस्त्रैः देवालयसमीपस्थस्य प्रागेव विश्वक्सेनाधिष्ठितस्य श्रीमतः तिन्त्रणीवृक्षस्य अधस्तात् छायायां अधिशाय्य प्रतिनिववृताते ।

जननीजठरे एव शयानं शिशुसामान्यमावृत्य अहङ्कारममकारजनकः भयानकः शठो नाम वायुः तमेतं शिशुं नातिचक्राम । येन हुंकारमात्रेणैव शठं वायुं दूरम् अपसारितवान् तेनैव कारणेन अयं कारिसूनुः **शठारिः, शठरिपुः** इति नाम्ना भुवने प्रख्यातः अभवत् ।

शोडशवर्षपर्यन्तम् अवधूतबाह्यप्रपञ्चज्ञानस्य निमीलितलोचनयुगळस्य ध्यानावस्थितमानसस्य शठारेः, भगवतो नारायणस्य दिव्याज्ञया विश्वक्सेनः समागम्य रहसि जातकर्मादिसंस्कारम् आततान । तदनु ध्यानासक्तः करकमलाञ्चितव्याख्यामुद्रासुशोभितः मनसि भगवन्तं नारायणं साक्षात्कृतवान् अयं कारिसूनुः ।

**मधुरकविरिति** प्रतीतः द्विजोत्तमः उत्तरभारते दिव्यक्षेत्रपुण्यतीर्थवनविचारमनुविचरन् अयोध्यानगरीम् अधिगच्छन् निशीथे दक्षिणदिशातः प्रसृमरं तेजोराशिमवलोक्य तं जिज्ञासमानः अतित्वरयोपेतः तस्मिन्नेव ज्योतिषि संघटितलोचनः शठारेः समीपम् आससाद । शिशोः तनौ चैतन्यम् अस्ति वा न वा इति चिन्तापरिक्रान्तः तज्जिज्ञासुः एकं शिलाखण्डं शिशोः समीपे महति प्रस्तरे विचिक्षेप । तदा सञ्जातेन महता घोषेण चक्षुषी उन्मील्य शठरिपुः मधुरकविं कृपार्द्रया दृष्ट्या अपश्यत् । सन्तोषपारावारनिमग्नः मधुरकविः कतिपयप्रश्नान् आपृच्छ्य दत्तेनोत्तरेण सन्तुष्टः तच्चरणारविन्दयोः निपत्य आत्मानं किङ्कररूपेण स्वीकर्तुं ययाचे ।

तथेति तस्य वचनमुररीकृत्य मधुरकवये तत्त्वहितपुरुषार्थान् उपदिदेश सोऽयं मुनिवरः । तदा तदा दिव्यदेशाधिनायकाः श्रीरङ्गनाथ - श्रीवेङ्कटाद्रीश श्रीहस्तिगिरीशप्रभृतयः शठकोपसूरये आत्मशरीरम् तुलसीमालाशङ्खचक्रादिभिः अलङ्कृत्य दर्शनं प्रदाय आत्मनः स्तुतिं तन्मुखेन काङ्क्षितवन्तः। ऋग्यजुस्सामाथर्वणसारभूताः चत्वारः प्रबन्धाः **'द्राविडाम्नायाः'** इति प्रसिद्धाः शठकोपसूरेः मुखकमलात् विनिस्सृताः । **१. तिरुविरुत्तम् २. तिरुवाशिरियं ३. पेरियतिरुवन्दादि ४. तिरुवाय्मोळि** इति हि ते प्रबन्धाः । इतरैः आळ्वारमहाशयैः गीतानि पद्यानि शठकोपसूरिगीतपद्यैः सह मिलित्वा चतुस्सहस्री इत्याख्यया समाख्यायन्ते । तामेतां चतुस्सहस्रीं श्रीनाथमुनयः शठकोपसूरेः सन्निधानात् योगदशायाम् अवधारितवन्तः । सुधारसस्यन्दिभिः गाथाभिः युक्ता इयं तिरुवाय्मोळिः यामुनार्यरामानुजार्यप्रभृतिभिः स्वकीयग्रन्थेषु चारुतरं विवृता ।

अम्लानवकुलमालया समलङ्कृतः इति, अयं शठकोपसूरिः **'वकुलभूषणः'** **'वकुलाभरणः'** इत्यभिधानेनापि विश्रुतः । सेयं तिरुवाय्मोळिः उपनिषत्सदृक्षा इति **'द्रमिडोपनिषत्'** इति प्रसिद्धिं प्राप । अत एव वेदान्ताचार्याः -

**'यत्तत्कृत्यं श्रुतीनां मुनिगणविहितैः सेतिहासैः पुराणैः तत्रासौ सत्वसीम्नः शठमथनमुनेः संहिता सार्वभौमी'।।** इति द्रमिडोपनिषत्तात्पर्यरत्नावल्यां अस्य प्रबन्धस्य विषये अस्तौषीत् । श्रुतयः, इतिहासपुराणादीनि मानवानां यमर्थं उद्बोधयन्ति तमर्थं अनायासेन अक्लिष्टमार्गेण उपदिशति मुनिवरस्य शठरिपोः द्रमिडोपनिषदियम् इति तदर्थः ।

मुनिवरस्यास्य कालः कलियुगस्य आविर्भावानन्तरं पञ्चत्रिंशत् वर्षेभ्यः अनन्तरमिति गुरुपरम्पराप्रभावमनुभावयतां प्राचामाचार्याणां अभिप्रायः ।

अस्यां सहस्रगीत्यां दश शतकाः वर्तन्ते । एकैकस्मिन् अपि शतके दश दशकाः विद्यन्ते । प्रतिदशकं एकादश पद्यानि सन्ति । परन्तु द्वितीयशतके सप्तमदशके १३ पद्यानि सन्ति । आहत्य अस्यां सहस्रगीत्यां ११०२ पद्यानि अनवद्यानि विलसन्ति । इयं द्रमिडोपनिषत् श्रीवैष्णवदेवालयेषु गीयते । अस्याम् उपनिषदि विद्यमानानां पद्यानाम् अर्थं सम्यक् विज्ञाय ये भगवन्मन्दिरेषु गायन्ति ते इह लोके सकलभाग्यभाजो भूत्वा अन्ते श्रीवैकुण्ठसाम्राज्यसार्वभौमाः भवन्ति इति स्वयमेव मुनिवरोऽयं चतुर्थशतके तृतीयदशकस्य अन्तिमपद्ये उद्घोषयति । अस्याः सहस्रगीतेः प्रतिदशके विद्यमानानां पद्यानां सारं सङ्गृह्य वेदान्ताचार्याः, **'द्रमिडोपनिषत्तात्पर्यरत्नावली '** इति संस्कृतश्लोकनिबद्धं ग्रन्थं विरचयामासुः । एवं वादिकेसरी सुन्दरजामातृमुनिवराः दशकानां सारबोधिनीं **द्रमिडोपनिषत्सङ्गतिरिति** ग्रन्थं ग्रथ्नाति स्म या किल अस्मिन् प्रबन्धे सम्मुद्रिता दरीदृश्यते । श्रीमतः नारायणस्य परात्परत्ववर्णनं प्रथमशतकस्थेन प्रथमदशकेन क्रियते। यः निरतिशयकल्याणगुणाकरः यः अज्ञानगन्धशून्यः, यः भक्तेः ज्ञानस्य च प्रदाता, नित्यसूरीणामपि यः नाथः, तस्य भगवतः दिव्यपादारविन्दं प्रणम अयि मे मनः इति स्वान्तरङ्गं प्रार्थयति शठारिः मुनिवरः प्रप्रथमम् **'उयर्वर'** इति पद्येन । द्वितीयदशके संसारमहासागरान्तर्निमग्नान् जनान् विलोक्य 'विद्युच्चञ्चलं विषयसुखं परित्यज्य ज्ञानानन्दस्वरूपिणं भगवन्तं निषेवध्वम्' इत्युपदिशति । **'एकः स्वादु न भुञ्जीत भुञ्जीत बहुभिस्सह'** इति श्लोकार्थं मनसि अनुसन्धधानः मुनिवरः भगवद्गुणाः भक्तगणैः मिलित्वा अनुभूयन्ते चेत् अमन्दानन्दसन्दोहः भविष्यति इति आकलय्य 'गोष्ठ्यां भगवन्तं लक्ष्मीपतिं भजध्वम्' इत्युपदिशति ।

सः भगवान् चिदचित्पदार्थेभ्यः विभिन्नः, अतीन्द्रियज्ञानग्राह्यः ज्ञानानन्दस्वरूपः समाभ्यधिकरहितः पृथिव्यादिपञ्चभूतानां तदारब्धसमस्तवस्तु- जातस्य च स्रष्टा, नियन्ता, संहारकः, सर्वव्यापी, इति शङ्काकळङ्करहिताभिः उक्तिभिः उद्घोषयति । प्रथमशतकस्य प्रथमदशकस्य नवमगाथया निरीश्वरवादं खण्डयित्वा ईश्वरसद्भावं संस्थापयति । अस्याः सहस्रगीतेः प्रथम-द्वितीय-तृतीय-शतकेषु द्वयमन्त्रस्य उत्तरार्धार्थः, चतुर्थ-पञ्चम-षष्ठशतकेषु पूर्वार्धार्थः प्रतिपाद्यते इत्याचार्याणाम् अभिप्रायः ।

**'प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।**
**प्राप्त्युपायं फलं प्राप्तेः तथा प्राप्तिविरोधि च' ।।**

इत्युक्तप्रकारेण अर्थपञ्चकमपि प्रपञ्च्यते अस्यां सहस्रगीत्याम् । **'नळिनीदळगतजलमतितरलं तद्वज्जीवितमतिशयचपलम्'** इति श्लोकार्थम् ज्ञापयतीव मुनिवरोऽयं प्रथमशतक-द्वितीयदशकस्य द्वितीयेन पद्येन । आत्मानुभवरूपकैवल्यमोक्षापेक्षया परमभोग्यभगवच्चरणानुभवः एव गरीयान् । अतः भगवदनुभवैकप्रवणाः भवन्तु भवन्तः इत्युपदिशति मुनिवरोऽयं तत्रैव पञ्चमेन पद्येन ।

अथ चतुर्थे दशके परमात्मनः विश्लेषदुःखम् असहमानः श्रीशठकोपसूरिः आत्मानं वधूं मन्यमानः भगवतः दिव्यमङ्गलविग्रहस्य संश्लेषं काङ्क्षमाणः बलाकां, शुकं, पिकं, जलधरं च दयां स्वस्मिन् प्रदर्श्य स्वस्य भगवतः च मध्ये दूतकार्यं कर्तुं प्रार्थयते ।

भगवतः विश्लेषदुःखेन अत्यन्तं खेदमनुभवन् मुनिवरोऽसौ पथि नयनगोचरतामागतान् मृगपक्षिणः प्रति 'किं यूयमपि अहमिव तस्य मिथ्यावादिनः शेषशायिनः विप्रलम्भकस्य वचनमाकर्ण्य विरहवेदनाम् अनुभवन्तः शरीरे कार्श्यं, शरीरे पाण्डुताम् वहथ इति अनुयुङ्क्ते' । एवमेव सहस्रगीतिरियं एकैकस्मिन्नपि पद्ये सुन्दरालङ्कृतिं भावं च प्रदर्शयन्ती पाठकान् अमन्दानन्दक्षीरसागरनिमग्नान् करोति इति निश्चप्रचम् ।

**'तिरुवाय्मोळि'** ग्रन्थे विद्यमानानां रसपरिपाकानां द्रमिडभाषानभिज्ञानामपि सुखाववबोधार्थं सुन्दरमृदुमधुरपदगुम्भितया टीकया गीर्वाणवाण्याम् तत्र भवद्भिः नानाशास्त्रविशारदैः **उभयवेदान्तप्रवर्तकैः अण्णङ्गरार्यमहाशयैः** अनूदिता **'सहस्रगीतिः'** इति नाम्ना विद्योतते । एतैः महानुभावैः अपूर्वाणि अप्रकटितताळपत्रपुस्तकानि प्रकटीकृतानि । अनेकानि प्राचाम् आचार्याणाम् स्तोत्राणि, प्रबन्धादीनि स्वकीये मुद्रणालये मुद्रितानि प्रकाशं नीतानि । वैदिक-मनोहरादिमासिकपुस्तकानां प्रकाशकाः एते काञ्च्यां 'श्रीवेदवेदान्त-वैजयन्ती' पाठशालाध्यक्षपदवीं समलञ्चक्रुः । एतैः महाशयैः विलिखितया व्याख्यया च समलङ्कृतः वर्तते अयं ग्रन्थः ।

इयं सहस्रगीतिः **श्रीमद्भिः उ.वे.अक्कारक्कनि सम्पत्कुमाराचार्यवर्यैः** यदुशैलवासिभिः विपश्चितामपश्चिमैः विरचितया सर्वजनावगाहनप्रगल्भया अतिललितया हिन्दी भाषाटीकया समलङ्कृता च विद्योतते । एते पण्डिततल्लजाः श्रीमतां प्रतिवादिभयङ्करम् अण्णङ्गरार्यवर्याणां जामातृवर्याः आसन् ।

आत्मानं श्रीहरेः कल्किनः अवतारं मन्यमानैः यदुशैलनित्यवासरसिकैः श्रीमद्भिः कल्कि नरसिंहाचार्यवर्यैः प्रणीता संस्कृतश्लोकमयी **'सहस्रगाथारत्नावली'** च आभ्यां टीकाभ्यां सह संयोजिता चकास्ति । अनया संस्कृत संशोधन संसदा प्रकटिताम् इमां सहस्रगीतिमधीत्य सर्वे शठकोपसूरिणः भगवतो लक्ष्मीवल्लभस्य च अनुग्रहपात्रताम् आप्नुवन्तु इति आशास्महे ।

एतादृशमहत्कार्यं कर्तुं साह्यं कृतवत्याः शिम्लानगरस्थायाः भारतीय उन्नताध्ययनसंस्थायाः (Indian Institute of Advanced study, shimla)नमोवाकं आचक्ष्महे। विशेषतः सकलगुणगणपरिपूर्णेभ्यः विद्वज्जनपक्षपातिभ्यः विनोद चन्द्र श्रीवास्तवमहोदयेभ्यः एतादृशसाह्यस्य कृते कार्तज्ञ्यम् आविष्कुर्मः। अस्मिन् ज्ञानसत्रे उपकृतवद्भ्यः संस्कृतसंशोधनसंसदः सर्वेभ्योऽपि कार्यकर्तृभ्यः हार्दानि अभिनन्दनानि ।

मकर-पुष्य-कृष्ण एकादशी | इति
यादवाद्रिः | संपादकाः
२८, जनवरि २००३

# विषयसूचनी

** ** **

।। श्रीरस्तु ।।

श्रीहस्तिशैलशिखरोज्वलपारिजाताय नमः ।।

श्रीयदुशैलदीपाय नमः ।।

श्रीपराङ्कुश-परकाल-यतिवर-वरवरमुनीन्द्रेभ्यो नमः ।।

द्राविडाम्नायदिव्यप्रबन्धविवर्ते चतुर्थसहस्रम्

# ति रु वा य्मो ळी ति प्र थि ता

## सहस्रगीतिः

[प्रपन्नजनकूटस्थश्रीशठकोपमुनीन्द्रदिव्यसूक्तिः]

(श्रीकाञ्चीप्रतिवादिभयङ्कर-अण्णङ्गराचार्यकृत-अनुवाद-तद्विवरणसमेता)

[सर्वदिव्यप्रबन्धसाधारणमुखपद्यानि]

[भगवता श्रीरङ्गनाथेन अनुगृहीतं श्रीवरवरमुनीन्द्रस्तुतिपद्यम्]

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ।।

[श्रीकूरेशगुरुवरानुगृहीतं गुरुपरम्परास्तुतिपद्यम्]

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ।।

[श्रीकूरेशगुरुवरानुगृहीतं भगवद्रामानुजस्तुतिपद्यम्]

**यो नित्यमच्युतपदाम्बुजयुग्मरुक्म**
**व्यामोहतस्तदितराणि तृणाय मेने ।**
**अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः**
**रामानुजस्य चरणौ शरणं प्रपद्ये ।।**

[भगवद्यामुनमुनीन्द्रैरनगृहीतं श्रीशठकोपमुनीन्द्रस्तुतिपद्यम्]

**माता पिता युवतयस्तनया विभूतिः**
**सर्वं यदेव नियमेन मदन्वयानाम् ।**
**आद्यस्य नः कुलपतेर्वकुलाभिरामं**
**श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ।।**

[श्री पराशरभट्टार्यानुगृहीतं सकलदिव्यसूरिस्तुतिपद्यम्]

**भूतं सरश्च महदाह्वय-भट्टनाथ-**
**श्रीभक्तिसार-कुलशेखर-योगिवाहान् ।**
**भक्तांघ्रिरेणु परकाल यतीन्द्रमिश्रान्**
**श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ।।**

**।। सर्वदिव्यप्रबन्धसाधारणस्तुतिपद्यानि समाप्तानि ।।**

** ** **

**[सहस्रगीतेरसाधारणमुखपद्यानि]**

(संस्कृतपद्यमेकम्, द्राविडपद्यानि पञ्चेति षट् पद्यानि प्रथन्ते ; तत्र प्रथमं संस्कृतपद्यम् ।)

**[सहस्रगीतेः सागरत्वेन रूपणम्]**

**भक्तामृतं विश्वजनानुमोदनं**
**सर्वार्थदं श्रीशठकोपवाङ्मयम् ।**
**सहस्रशाखोपनिषत्समागमं**
**नमाम्यहं द्राविडवेदसागरम् ।। १ ।।**

**विवरणम् -** सहस्रगीतिः सागरत्वेन रूप्यत इह । सागरसाधर्म्यमस्याः पञ्चभिर्विशेषणैः उपपाद्यते । प्रसिद्धः सागरस्तावत् भगवति भक्तानाम् अमराणाम् अमृतप्रदायकोऽभूत् इति हेतुना भक्तामृतमयः आसीत् सः । सहस्रगीतिस्तावत् वस्तुतः भक्तानां श्रीवैष्णवाग्रेसराणां भौमम् अथापि दिव्यम् अमृतम् इति नातिशयोक्तिः । **विश्वजनानुमोदनम् -** जगति सागरदर्शनेन अप्रहृष्यन् जनः न कोऽप्यस्ति । सागरं सर्वेऽपि असकृदवलोक्य मोदन्ते । सहस्रगीतिरपि भक्तिभाजां, गानकलाकुशलानां, नित्यमुक्तानां, किं बहुना ? सर्वेश्वरस्यापि च संतोषप्रदा इति विश्वजनानुमोदनत्वम् अस्याः अव्याहतम् । **सर्वार्थदम् -** सागरो हि रत्नाकरस्सन् सर्वार्थदानसमर्थः । सहस्रगीतिश्च वेदार्थरत्ननिधिः इति श्रीवत्साङ्कमिश्रोपश्लोकितमुनिवरदिव्यमुखारविन्दविनिर्गतत्वेन सर्वार्थदा । तदिदम् अनुभवैकवेद्यं विदुषाम् । **श्रीशठकोपवाङ्मयम्** सागरः कदाचित् अगस्त्यमहामुनिमुखं प्रविश्य विनिर्गतः इत्यतो मुनिवरवाङ्मयः प्रथितस्सः । सहस्रगीतिस्तु श्रीशठकोपदिव्यसूरिवरवाङ्मयी । उभयोरपि अनयोः मुनिवरयोः द्राविडवाक्प्रवर्तकत्वेन साधर्म्यं बोध्यम् । **सहस्रशाखोपनिषत्समागमम् -** सागरस्तावत् **'नदीनां सागरो गतिः'** इत्युक्तरीत्या स्वात्मनि प्रविशन्तीभिः नदीभिः उत्खाताहृतानां शाखिशाखानां समागमविशिष्टस्स्यात् । सहस्रगीतिस्तु **'सहस्रशाखोपनिषत्'** इति प्रसिद्धेन सामवेदेन सह समः आगमः इति प्रथितम् । एतादृशं द्राविडवेदसागरं विगाहे इत्यनुक्त्वा 'नमामि' इति कथनम् **'वन्दे रामायणार्णवम्'** इति वचनं स्मारयति । विश्वपुमर्थसार्थसंभृते सुमहति दिव्यशास्त्रेऽस्मिन् अवगाहनाधिकारिणः अत्यन्तदुर्लभाः ; श्रीकोशनमस्कारे केवलम् अधिकारिणः अस्मादृशाः इति स्फोर्यत इव ।।

**[श्रीमद्यादवाद्रि अक्कारक्कनि - संपत्कुमाराचार्यवर्य विलिखित हिन्दीटीका]**

श्रीमन्नाथमुनिस्वामीजी से अनुगृहीत इस पद्य में सहस्रगीति को द्राविडवेदसागर बताने में आया है । लौकिक सागर के सभी धर्म सहस्रगीति में भी दिखाये जाते हैं, भक्तामृतम्

इत्यादि पांच विशेषणो से । तथाहि - भक्तामृतम् - प्रसिद्ध सागर, एक समय भगवद्भक्त देवताओं को अमृतप्रद रहा ; सहस्रगीति तो भक्ताग्रेसर श्री वैष्णवों के लिए परमभोग्य अमृत-सदृश रहती है, और साक्षात् अमृत कहलानेवाली मुक्ति का भी प्रदानकरती है । विश्वजनानुमोदनम् - सागर, देखनेवालों को नित्य आनंद ही आनंद दे रहा है ; समुद्र कौन न देखना चाहता ? सहस्रगीति भी भक्त, गायक, नित्य व मुक्तगण तथा स्वयं सर्वेश्वर को भी असीम आनन्दप्रद होता है । सर्वार्थदम् - रत्नाकर होने से सागर रत्न मुक्तादि समस्तद्रव्यों का दाता है ; श्रीकूरेशस्वामीजी से 'वेदार्थरत्ननिधि' कहलानेवाले श्री शठकोपसूरी के मुखारविंद से विनिस्सृत सहस्रगीति तो, वेद प्रतिपाद्य समस्त अर्थों की प्रदात्री है ; इसका ठीक अध्ययन करने से यह अंश विदित होता है । श्रीशठकोप वाङ्मयम् - एक समय अगस्त्य जी ने सारा समुद्रजल अपने मुख से पी लिया ; अतः सागर उनका वाङ्मय कहला सकता है । सहस्रगीति तो श्रीशठकोपमुनीन्द्र के मुखारविंद से विनिस्सृत होने के कारण आपका वाङ्मय है ही । ये दोनों मुनि अगस्त्यमुनि व शठकोपमुनि - द्राविडशास्त्र के प्रवर्तक ठहरे । सहस्रशाखोपनिषत्समागमम् - 'नदीनां सागरो गतिः' इत्याद्युक्त प्रकार समस्त नदियों का प्राप्यस्थान सागर, उन उन नदियों से उखाडाजाकर लाये जानेवाले बडे बडे वृक्षों की हजारों शाखाओं का समागमस्थान है । सहस्रगीति तो सहस्रशाखोपनिषत् कहलानेवाले सामवेद के सम आगम है अर्थात्, सामवेद-सार है । सामवेद सहस्रशाख कहलाता है । द्राविडवेदसागरम् अहं वन्दे - ऐसे द्राविडवेदरूपी सागर का मैं नमस्कार करता हूं । कहना था कि 'द्राविडवेदसागरं विगाहे' अर्थात् सहस्रगीति में उतरूं । परंतु सागर में उतरना अशक्य हैं ; तटपर खडे होकर उसको नमस्कार करते ही हम अपने को धन्य मान लेते हैं । इसी तरह इस द्राविडवेद सागर में उतरकर गोता मारना भी हमारे सरीक अल्पज्ञों की शक्ति से बाहर है । अतः उसको साष्टांग प्रणाम हीं करेंगे । 'वन्दे रामायणार्णवम्' इत्यादि का भी यह अर्थ है ।।

**[शठकोपमुनेः पादद्वयमेव सततमनुचिन्तनीयम्]**

**तिरुवळुदिनाडेन्त्रुम् तेन्कुरुहूरेन्त्रुम्**
**मरुविनिय वणूपोरुनलेन्त्रुम्-अरुमरैहळ् ।**
**अन्दादि शेय्दानडियिणैये येप्पोळुदुम्**
**शिन्दियाय् नेञ्जे तेळिन्दु ।। २ ।।**

**छाया** - 'पाण्ड्यमण्डलम्' इति मण्डलं ध्यात्वा, 'श्रीकुरुकापुरी' इति दिव्यदेशमनुसन्धाय, 'स्पृहणीयोदारताम्रपर्णी' इति दिव्यनदीम् अनुचिन्त्य च, सुदुर्लभवेदार्थप्रकाशकशठकोपमुनीन्द्रस्य पादद्वन्द्वमेव सततम् अनुचिन्तय भो हृदय !

**विवरणम्** - श्रीशठकोपमुनीन्द्रपादारविन्दचिन्तनात् प्राक् तदवतारस्थलभूतकुरुकापुर्याः, तन्मण्डलस्य, शठकोपमुनेः पौराणिकनिरूपकभूतताम्रपर्णीसरितश्च अनुसन्धानं कर्तव्यम् इति शिक्षितं भवति पद्येन अनेन ।

**हिन्दी** - हे मन! पांड्यदेश कहकर आळवार के जन्म देश का ध्यानकर, श्री कुरुकापुरी कहकर आपके अवतार स्थल का ध्यान कर और मनोहर व उदार ताम्रपर्णी कहकर उधर बहनेवाली दिव्यनदी का स्मरण कर, सुदुर्लभ वेदार्थों का अंतादिप्रबंधों से प्रकाशन करनेवाले श्रीशठकोपसूरि के उभयपादारविंन्दों का ही सर्वदा ध्यान करो ।

इस पद्य से यह शिक्षण दिया जाता है कि श्री शठकोपसूरि के पादारविंदों का ध्यान करने के पहले आपके अवतार से धन्य हुए पांड्यदेश का एवं श्री कुरुकापुरी का, तथा पुराणों में आपके निरूपकत्वेन उपवर्णित, परमपवित्र ताम्रपर्णी नदी का स्मरण करना आवश्यक है । 'ताम्रपर्णी नदी यत्र' यह श्रीभागवत का प्रसिद्ध वचन है ।।

**[शठकोपमुनिपादद्वयमेव शरणम्]**

**मनत्तालुम् वायालुम् वणूकुरुहूर् पेणुम्**
**इनत्तारैयल्लादिरैञ्जेन्-धनत्तालुम् ।**
**एदुम् कुरैविलेन् एन्दै शठकोपन्**
**पादङ्गळ् यामुडैय पत्तु ।। ३ ।।**

**छाया** - मनसा वाचा च श्रीकुरुकापुरीप्रशंसनैकनिरतानां गोष्ठीषु अन्तर्गतेभ्यः व्यतिरिक्तान् अहं नैव नमस्कुर्याम् । धनेनापि अहं पुष्कलो भवामि, यतो हि अस्मत्स्वामिनः शठकोपमुनेः दिव्यपादौ मम मदन्वयानां च शरणम् ।।

**विवरणम्** - श्रीशठकोपमुनीन्द्रावतारस्थलभूतकुरुकापुरीप्रशंसनैकनिरतकरणग्रामानेव अहं प्रणमेयं ; नान्यान् इति कथनेन भगवति श्रीशठकोपमुनौ भक्त्यतिशयः प्रकाशितो

भवति । अस्यैव मुनेः पादारविन्दे एव स्वस्य सर्वस्वम् इति प्रख्यापितं भवति उत्तरार्धेन ।
'धनं मदीयं तव पादपङ्कजम्' इति स्तोत्ररत्नगीः हइ अनुसन्धेया ।।

**हिन्दी** - अपने मन से एवं वचनसे सुंदर कुरुकापुरी की प्रशंसा करनेवालों की गोष्ठी में मिलनेवालों को छोडकर दूसरों का मैं नमस्कार न करूंगा । मैं धनसे भी पूर्ण हूँ ; क्यों कि हमारे स्वामी श्री शठकोपसूरि के पादारविंद मेरी और मेरी संतान की शरण है ।

यों कहने से कि श्री शठकोपमुनींद्र के अवतारस्थल श्री कुरुकापुरी की प्रशंसा करनेवाले महात्माओं का ही मैं नमस्कार करता हूं, न कि दूसरों का ; श्री शठकोपसूरि के प्रति भक्ति प्रकाशित की जाती है । उत्तरार्ध का यह तात्पर्य है की, 'धनं मदीयं तव पादपङ्कजम्', 'माता पिता युवतयस्तनया विभूतिः सर्वम्' इत्याद्युक्त प्रकारसे प्रपन्नजनकूटस्थ श्री शठकोपसूरि के पादारविंद ही श्री वैष्णवों के सर्वस्व है ।।

**[श्री शठकोपमुनीन्द्रदित्यसूक्तिधारणार्थं रामानुजमुनीन्द्रपादप्रणमनम्]**

**एय्न्द पेरुङ्कीर्ति इरामानुशमुनितन् वाय्न्द**
**मलर्प्पादम् वणङ्गुहिन्रन्-आय्न्दपेरुम् ।**
**शीरार् शठकोपन् शेन्दमिळ् वेदम्**
**धरिक्कुम् पेराद वुळ्ळम् पेर ।। ४ ।।**

**छाया** - (संप्रतिपन्नमहायशसो भगवतो रामानुजमुनीन्द्रस्य दिव्यपादारविन्दे प्रणमामि ; (किमर्थमिति चेत्) निरवद्यमहागुणनिधेः शठकोपमुनीन्द्रस्य दिव्यसूक्तीनां धारणे समर्थं सुदृढं हृदयं लब्धुम् ।।

**विवरणम्** - भगवद्रामानुजार्यपादारविन्दपरिसरे तद्भक्ताग्रेसरेण श्रीशैलानन्तार्यनाम्ना प्रार्थना काचन क्रियते गाथया अनया । श्रीमत्पराङ्कुशमुनीन्द्रप्रख्यापितायाः द्रमिडोपनिषदः ग्रहणं यद्यपि सुशकं भवति, तथाऽपि धारणं दुष्करमेव भृशम् ; हे रामानुजमुने ! तस्या दृढधारणसामर्थ्यं भवदनुग्रहभूम्ना भूयात् इति । वस्तुतः एषा प्रार्थना श्रीशठकोपमुनेः पादारविन्दयोः अथवा सकलफलप्रददिव्यदम्पतिपादयोर्वा कर्तव्या । तद्विसृज्य भगवद्रामानुजमुनीन्द्रपादारविन्दयोः प्रकृतप्रार्थनाकरणेन तस्य मुनीन्द्रस्य सुदृढकण्ठगृहीतद्रमिडोपनिषत्कत्वं व्यञ्जितं भवति । आचार्यानुग्रहबलादेव दिव्यप्रबन्धानां

धारणं शक्यम् इति च सूचितं भवति । श्रीपरकालमुनीन्द्रानुगहीतबृहत्सूक्तस्य मुखपद्येषु अन्तिमेनापि पद्येन श्रीगोविन्दभट्टारकप्रणीतेन एवमेव प्रार्थना कृता विराजत इति प्रतिपत्तव्यम् ।।

**हिन्दी -** निर्दुष्टकल्याणगुणनिधि श्री शठकोपमुनींद्र की दिव्य श्रीसूक्तियों का धारण करने समर्थ सुदृढ मन पाने के लिए मैं संप्रतिपन्न विशाल यशवाले श्रीरामानुजाचार्य स्वामीजी के पादारविन्दों का प्रणाम करता हूं ।

भगवद्रामानुजमुनींद्र के पादारविंदों में, आपके भक्ताग्रेसर श्रीशैलानंतार्यस्वामीजी (अनंदाळ्वान) इस पद्य से यह प्रार्थना करते हैं कि, 'आप कृपाकर मुझे सहस्रगीति का धारण करने अपेक्षित सामर्थ्य का प्रदान कीजिए' । यह प्रार्थना वास्तव में श्रीशठकोपस्वामी जी से करनी थी; अथवा महालक्ष्मीजी से करनी थी; अथवा सकलफलप्रद खुद भगवान से करनी थी । इन सबको छोडकर श्री रामानुजस्वामीजी से करना कुछ विचित्र जैसा दीखेगा । इस का यह तात्पर्य है कि श्रीरामानुजस्वामीजी सहस्रगीति का धारण व प्रवचन करने में बडे निपुण थे, और उनकी विशेषकृपा के विना कोई भी इसका धारण नही कर सकता है । श्रीपरकालसूरि से अनुगृहीत बृहत्सूक्त का भी ऐसा ही एक तनियन है ।।

**[सहस्रगीतेः माता पराङ्कुशः उपमाता श्रीरामानुजः]**

**वान् तिहलुम् शोलै मदिळरङ्गर् वण् पुगळमेल्**
**आन्र तमिळ् मरैहळ आयिरमुम्-ईन्र ।**
**मुदल् ताय् शठकोपन्**
**मोय्म्बाल् वळर्त्त हितत्ताय् इरामानुशन् ।। ५ ।।**

**छाया -** व्योमतलव्यापिभिः महोद्यानैः प्राकारैश्च परिवृतस्य श्रीरङ्गक्षेत्रस्य अधीशितुः श्रीरङ्गिणः कल्याणगुणकीर्तनवैयग्र्येण अवतीर्णायाः द्राविडश्रुतिरूपसहस्रगीतेः प्रसवित्री माता श्रीपराङ्कुशमुनिवरः, महता समारोहेण तद्वर्धननिरता उपमाता भगवान् रामानुजः ।।

**विवरणम् -** अधस्तनस्तुतिपद्यस्यैव विवरणात्मकम् इदं स्तुतिपद्यम् इति प्रतिपत्तव्यम् । भगवतो रामानुजमुनेः द्रमिडोपनिषदा सह कीदृशोऽनुबन्धो वर्तते इति सुगमम् अनेन पद्येन । लोके शिशूनां द्वे मातरौ प्रसिद्धे-जननी, धात्री च इति । जननी

तावत् प्रसवमात्रमेव जानाति । धात्री तु नक्तंदिवं परिश्रम्य सर्वविधान्यपि पोषणानि आतनोति । कृष्णकिशोरस्य मातरौ देवकीयशोदे अत्र स्मर्तव्ये । एवं सहस्रगीत्याख्यप्रजायाः प्रसवमात्रम् अतनुत शठकोपमुनीन्द्रः । भगवान् रामानुजस्तु तदध्यापन-तद्व्याख्यानावतारणाज्ञापनादिभिः उच्चावचैः प्रयत्नैः अतितराभिवर्धनम् आतनोत् इति सोऽयं धात्रीपदे न्यधीयत इति सुसमञ्जसमेतत् ।

ननु सहस्रगीत्यां श्रीरङ्गक्षेत्रमिव अन्येऽपि बहवो दिव्यदेशाः कीर्तिताः सन्ति । एकमेव दशकम् अत्र श्रीरङ्गस्थलप्रशंसापरम् अवतीर्णम् अवलोक्यते । तत्कथं "श्रीरङ्गनाथगुणकीर्तनव्यग्रायाः सहस्रगीतेः" इति कथ्यते ? इति केचिदाशङ्केरन् । श्रीशठकोपमुनीन्द्रहृदयमर्मविदां पूर्वाचार्याणाम् एवं तावत्सिद्धान्तः - श्रीशठकोपमुनीन्द्रो रङ्गनाथमुद्दिश्यैव सहस्रगीतिं समर्पितवान् ; ततः अन्येभ्योऽपि दिव्यदेशाधिपतिभ्यो भगवद्भ्यः काश्चन गाथाः समुद्धृत्य समार्पिपत् - अतो नात्र काचिदनुपपत्तिः ।।

**हिन्दी** - आकाशतक बढनेवाले महोद्यान एवं प्राकारों से परिवृत श्रीरंगक्षेत्र के स्वामी श्रीरंगनाथ भगवान के शुभगुणों का वर्णन करने के लिए ही अवतीर्ण द्राविडवेद रूप सहस्रगीति की, जन्मदेनेवाली माता श्रीशठकोपसूरि हैं और बडे समारोह के साथ पालनेवाली उपमाता श्रीरामानुजस्वामी हैं ।

श्री पराशरभट्टार्य स्वामीजी से अनुगृहीत यह पद्य पूर्वपद्य का व्याख्यानरूप है । इस में सहस्रगीति से श्रीरामानुजस्वामीजी का संबंध बताया जाता है । लोक में धनी बच्चों की दो माताएं होती हैं - जन्मदेनेवाली जननी और पालन पोषण करनेवाली धात्री ; यथा श्रीकृष्ण की माताएं देवकीजी और यशोदाजी थीं । एवं सहस्रगीतिनामक बच्ची की भी दो माताएं होती हैं । अपने मुख से उसकी रचना करनेवाले श्रीशठकोपसूरि जननी हैं । और अध्ययन, प्रवचन, व्याख्यानावतारण, प्रचार इत्यादि नानाप्रकारों से उसे बढानेवाली उपमाता श्रीरामानुजस्वामीजी हैं ।

यहां पर एक शंका है कि इस सहस्रगीति में रंगनाथ भगवान की तरह दूसरे भी अनेक दिव्यदेशों की स्तुति की गयी है ; फिर यह कैसे कहा जा सकता है कि श्रीरंगनाथ भगवान की ही स्तुति करने के लिए यह ग्रंथ अवतीर्ण हुआ है । इसका

समाधान इतना ही है कि हमारे पूर्वाचार्यों के मतानुसार, श्रीरंगनाथ भगवान को लक्ष्य कर ही श्रीशठकोपमुनींद्र ने सहस्रगीति रची ; बाद में उनमें से कतिपय दशकों उठाकर दूसरे दिव्यदेशके भगवानों को उन्होंने अर्पण किया । यह अर्थ स्वयं श्री शठकोपसूरि से ही सूचित किया गया है । तथाहि श्रीरंगनाथ भगवान की स्तुतिरूप दशक में (७-२) आप स्पष्ट कहते हैं कि, 'सहस्रगीति में अमुक भगवान का स्तोत्र यह दशक' इत्यादि । इससे श्री शठकोपसूरि का हृदय जाना जाता है ।।

**[सहस्रगीतिः अर्थपञ्चकप्रतिपादिका]**

**मिक्कविरै निलैयुम् मेय्यामुयिर् निलैयुम्**
**तक्क नेरियुम् तडैयाहित्तौक्कियलुम् ।**
**ऊऴ्विनैयुम् वाऴ् विनैयुमोदुम् कुरुहैयर्**
**कोन् याऴिनिशै वेदत्तियल् ।। ६ ।।**

**छाया** - श्रीकुरुकानगरनिवासभाजां श्रीवैष्णवानां स्वामिनां मुनीन्द्रेण अनुगृहीता वीणागानसनाभिगानविशिष्टा सहस्रगीतिः प्राप्यस्य ब्रह्मणो रूपं, प्राप्तुः प्रत्यगात्मनो रूपं, प्राप्त्युपायस्वरूपं, प्राप्तिविरोधिस्वरूपं, प्राप्तिफलस्वरूपं प्रतिपादयति ।।

**विवरणम्** - सहस्रगीत्यां प्रतिपाद्यमानानाम् अर्थविशेषाणां प्रकाशनमपि मुखपद्यकर्तृणां कर्तव्यं भवतीति तदत्र निबद्धम् । इदमेव ह्यर्थपञ्चकं सेतिहासपुराणकानां वेदानां प्रमेयम् आमनन्ति महर्षयः ।।

**।। इति तनियन्नामक मुखपद्यविवृतिस्समाप्ता ।।**

**हिन्दी** - श्री कुरुकापुरी के निवासी श्री वैष्णवों के स्वामी श्री शठकोपसूरि से अनुगृहीत वीणागान सदृश गान विशिष्ट सहस्रगीति, प्राप्य भगवान का स्वरूप, प्राप्ति करनेवाले जीव का स्वरूप, प्राप्ति के उचित उपाय का स्वरूप, प्राप्ति विरोधि का स्वरूप एवं प्राप्ति फल का स्वरूप - इन अर्थपञ्चकों का प्रतिपादन करती है ।

इस पद्य में सहस्रगीति प्रतिपाद्य विषयों का संग्रह किया जाता है । वेदादि सकल शास्त्रों के सारत्वेन महर्षियों से उपवर्णित, अर्थपञ्चक कहलानेवाले, मुमुक्षुओं

के अवश्यज्ञातव्य - स्वस्वरूप-परस्वरूप-उपायस्वरूप-विरोधिस्वरूप-फलस्वरूप - नामक पांच अर्थ ही सहस्रगीति से भी प्रतिपादित किये जाते हैं । यह अर्थ इस ग्रंथ के अध्ययन से स्पष्ट होगा ।।

**।। मुखपद्यों का विवरण समाप्त ।।**

## [श्रीशठकोपमुनीन्द्रवैभवम्]

**वृषे मासि विशाखर्क्षेऽवतीर्णस्य महात्मनः।**
**शठरातिमुनीन्द्रस्य वैभवं प्रतिपाद्यते ।।**

पाण्ड्यमण्डले गङ्गायमुनासरस्वतीप्रभृतिसकलसरिदपेक्षयाऽपि समुत्तुङ्गवैभवशालिन्याः ताम्रपर्णीसरितः तटे कुरुकापुरी नाम विलसति महानगरी । तत्र च वंशपरम्परया श्रीमन्नारायणैकसमाराधनसंसक्तचेतस्कपरमभागवतमहाकुले कारिनामा महनीयो महाभागवतः समुत्पन्नो व्यराजत । केरलमण्डलीये 'तिरुवण्परिशारम्' इति नाम्ना सुप्रसिद्धे दिव्यदेशे उडैयनङ्गैयार नाम्नीं सहधर्मचरीम् उपयेमे स महान् । तत्रैव कियन्तञ्चन कालमतिपात्य अथ सह च दयितया कुरुकापुरीम् अधिगत्य यथाविधि गृहस्थाश्रमधर्मनिर्वर्तनधुरन्धरो विरेजे । सोऽयं सह दयितया कदाचित् तिरुक्कुरुङ्गुडिनामकं दिव्यदेशमुपेत्य तत्र भगवतः प्रार्थितार्थपरिदानदीक्षितत्वभूमानम् अवगत्य तस्य सन्निधाने सप्रश्रयं प्रार्थयते स्म स्वस्य पुत्रसन्तत्यनुग्रहम् । प्रार्थितश्च भगवान् परमकृपापेशलहृदयः सुप्रसन्नवदनस्सन् "अहमेव समागत्य युवयोस्तनयात्मना । प्रादुर्भवेयमचिराद्विषादो वां विलीयताम्" ।। इत्यर्चकमुखेन अनुगृह्य तीर्थमालादि च प्रासादयत् । एवमनवधिकातिशयम् अप्रमेयम् अनुग्रहमासादयन् कारिर्महात्मा यथापुरं कुरुकापुरमुपेत्य निवसन्, कालक्रमेण पत्नीमन्तर्वत्नीम् अद्राक्षीत् । सा च समये प्रासूत दिव्यं शिशुं वृषभमासि विशाखोडुनि शुभे । दिव्यशिशोरस्य प्रभावातिशयः सर्वथा वाचां दवीयान् । 'अयं साक्षाद्भगवतः एवावतारभूतो वा ! नित्यमुक्तेष्वन्यतमस्य, तेषां बहूनां मिलितानां वा, अवतारभूतो वा ! विलक्षणभगवत्कृपाभूम्ना निस्समाभ्यधिकं वैभवं प्रापितः संसारिष्वन्यतम एव वा ! इत्येवं बहुधा शङ्कितुं योग्योऽयं व्यलसत् अप्रमेयप्रभावभासुरः । निर्दिष्टपूर्वतिरुकुरुङ्गुडि-दिव्यदेशाधिपतिभगवत्सूक्त्यनुरोधेन स एव भगवानेवम् अवततारेति ग्रहीतुं योग्यम् ।

यत्र भगवान अवतरितुमिच्छति, तत्र पुरस्तादेव निवासशय्यासनपादुकांशुकोपधान-वर्षातपवारणादिभिः शरीरभेदैः विविधवरिवस्याविरचनविशारदः आदिशेषः स्वयमुपसर्पतीति

खलु संप्रदायः । अत एव सोऽयं फणिपुङ्गवः भगवदवतारभूतस्यास्य दिव्यशिशोः वर्षातपादि-वारणमुखेन परिरक्षणाय दिव्यतिन्त्रिणीवृक्षात्मना प्रागेवावतीर्णः आसीत्तत्रैव ।

आप्रसवात् रोदनस्तन्यपानादिलौकिकव्यापारगन्धविरहेण विराजमानस्य म्लानिलेशविधुरस्य चास्य शिशोरतिशयं प्रेक्षमाणौ मातरपितरौ विस्मयप्रकर्षाविवशान्तरङ्गौ सर्वथा भगवति न्यस्तभरौ निर्विचारौ द्वादशे वासरे श्रीनगरीदिव्यदेशाधीशस्य भगवतः आदिनाथस्य सन्निधानं प्रापय्य शिशुं तद्दर्शनधन्यमाधाय सन्निहितस्य दिव्यतिन्त्रिणीतरोर्मूले सौवर्णडोलिकातलिममधिशाय्य समभ्यवर्धयताम् ।

गर्भवासावसरे ज्ञानशालिनोऽपि शिशून् जननसमनन्तरक्षणे एव स्वस्पर्शेन अज्ञानभागिनः कृत्वा रोदनक्रन्दनादिलौकिकव्यापारपरवशान् कर्तुं प्रभविष्णुः शठो नाम वायुः एनमपि दिव्यशिशुं जननकाले स्वयमभिभवितुम् अयतत, तदात्वे तम् असौ हुंकारेण प्रसह्य निरस्यति स्म इति हेतुना शठकोप इति नाम्ना पप्रथे । शठरिपुः, शठारिः, शठारातिः इत्यादीन्यपि नामानि तत्पर्यायभूतानि प्रथन्ते ।

तिन्त्रिणीमूलधामा मुनिवरोऽसौ आषोडशात् वयसो नयनोन्मीलनविरहित एव सन् मौनावलम्बी विश्वतो विसृत्वरविलक्षणतेजःपुञ्जः अवर्तत । पितरौ तु किमेतत् ? कथमेवमभूत् ? इति विमृशन्तौ, आवयोः प्रामादिकेन केनापि भगवदपचरितेन किमेवं समभूत् इति चिन्ताविह्वलौ विषण्णावास्ताम् । तदा परमपदनाथस्य शासनेन विष्वक्सेनोऽत्र रहसि समागत्य मुनिवरं पञ्चभिः संस्कारैः संस्कृत्य सकलार्थांश्चोपदिश्य प्रययौ । षोडशकलापरिपूर्णचन्द्रवत् परिपूर्णषोडशहायनोऽसौ मुनिसार्वभौमः तिन्त्रिणीतरुच्छायायां पद्मासनोपविष्टः परतत्त्वैकनिध्यानतत्परो ज्ञानमुद्राञ्चितपाणिपद्मः प्रचकाशे ।

तदात्वे मधुरकविर्नाम महीसुरोत्तमो महान् क्षेत्रतीर्थयात्राकुतूहलेन पर्यटन् उत्तरभारते, शठकोपमुनेरस्य प्रभावम् आकर्ण्य दिव्यतेजःप्रसरम् अभिवीक्ष्य च श्रीमदयोध्यानगरीतः सजवम् उपगम्य तमिमम् आसेवत । अस्य चैतन्यमस्ति वा इति शोधयितुमिच्छन् स एष मधुरकविः कञ्चित् अश्मखण्डं चिक्षेप समया मुनिवरम् । तन्निनदनिशमनेन चक्षुषी समुदमीलयत् शठारिः । अथ च व्यवहारशक्तिः अस्य विद्यते न वा इति विज्ञातुकामस्सः कमपि अनुयोगम् आततान । सद्यः प्रत्युत्तरं च लेभे समञ्जसम् । अथ मधुरकविः महानन्दसागरसंमग्नस्वान्तः सर्वज्ञम् अमुं मुनिवरमेव आश्रित्य कृतार्थो भूयासम् इत्यभिनिवेशमुद्वहन् साष्टाङ्गं तस्य पादारविन्दे प्रणिपत्य भृशमभिष्टूय बद्धाञ्जलिपुटः

प्रार्थयते स्म 'भगवन् मुनिसार्वभौम ! तत्त्वहितपुरुषार्थेषु वैशद्यमुत्पादयतु कृपया दासस्यास्य तत्रभवान्' इति । स च करुणया स्वीचकार एनम् अन्तरङ्गकिङ्करम् ।

अथ कदाचित् श्रीवैकुण्ठनाथो भगवान् सह च श्रीभूमिनीलाभिः विहगाधिराजमधिरुह्य समागत्य मुनेरस्य ज्ञानसाक्षात्कारगोचरो भूत्वा सर्वज्ञतां द्रढयतिस्म । एवमन्ये च सर्वे दिव्यदेशाधीशाः भगवतः श्रीरङ्गनाथ - श्रीवेङ्कटाद्रिनाथ - श्रीहस्तिगिरिनाथादयः स्वयमुपगम्य दिव्यदर्शनं प्रदाय स्वस्वदिव्यगुणगणान् अन्वभावयन् । तदनु तादृशानुभवपरीवाहरूपतया दिव्यसूक्तीः बहिराविर्भावयितुम् आवश्यकता समजनि तत्त्वविदग्रेसरस्य अस्य । ऋग्यजुस्सामाथर्वणाख्यवेदचतुष्टयपर्यायभूताश्चत्वारो दिव्यप्रबन्धाः द्राविडब्रह्मसंहितासमाख्याः (१) तिरुविरुत्तम्, (२) तिरुवाशिरियम्, (३) पेरियतिरुवन्दादि, (४) तिरुवाय्मोळि नामभिः प्रथिताः क्रमेण अवतरितुम् आरभन्त । मधुरकविरेव पार्श्वे निषण्णस्सन् परमया भक्त्या प्रबन्धान् इमान् दिव्यतालपत्रारूढान् अकार्षीत् ।

एतेषु चतुर्षु दिव्यप्रबन्धेषु चरमस्य सामवेदसारभूतस्य सहस्रगीतिसमाख्याविख्यातस्य प्रबन्धरत्नस्य सततगानमेव मधुरकवेः नित्यकालक्षेपपर्याप्तम् आसीत् । श्रीमन्नाथमुनि श्रीयामुनमुनि - श्रीरामानुजमुनि - श्रीवत्साङ्कमिश्रभट्टपादप्रभृतयो वेदवेदान्तवेदाङ्गसागरपारदृश्वानः विद्वन्मणयः महान्तोऽपि तयैव द्रमिडोपनिषदा तत्त्वहितपुरुषार्थेषु विमलं विशदं विपुलं विज्ञानमुपलभ्य स्वयमाचार्यपदवीं निरवहन् ।

दिव्यवकुलमालाभूषणभूषितत्वेन हेतुना मुनिवरोऽयं वकुलाभरणो वकुलबूषण इत्यपि नाम बिभर्ति स्म । परमतस्थरूपमत्तमातङ्गानाम् असौ अङ्कुशात्मा विरराज इति हेतुना पराङ्कुशः इत्यप्यप्रथत। 'शठरिपुरेक एव कमलापतिदिव्यकविः' इत्युक्तरीत्या भगवद्भक्तेष्वयमेव मुनिराट् अग्रगण्यः अभूदिति आचन्द्रार्कं विश्वतः प्रसिद्धये भगवतः पादुका सर्वेष्वपि देवालयेषु अस्यैव नाम्ना व्यपदिश्यमाना विलसतीति यत्तदिदमेकमेव पर्याप्तं महामुनेः अस्य वैभवम् असमाभ्यधिकम् इत्यवबोधयितुम् ।।

**इत्थं शठकोपमुनेर्वैभवमतिभोग्यमप्रमेयं च ।**
**अनुसंदधतां सुधियामत्रामुत्र च भवेन्महानन्दः ।।**



**[श्रीशठकोपमुनींद्र का दिव्यवैभव]**

पांड्यदेश में, गंगायमुनासरस्वती इत्यादियों से भी विशेष वैभववाली ताम्रपर्णी नामक दिव्यनदी के तटपर विराजमान कुरुकापुरी में, जो हाल में आळवार् तिरुनगरी कहलाती है, परंपरासे श्रीमन्नारायण की सेवा करने में निरत परमभागवतों के महाकुल में अवतीर्ण 'कारि' नामक एक महात्मा विराजमान थे । केरळदेशके 'तिरुवण्परिशारम्' नामक दिव्यदेश में अवतीर्ण 'उडैयनङ्गैयार्' आपकी धर्मपत्नी थी । कदाचित् इन्होने तिरुक्कुरुङ्गुडि दिव्यदेश की यात्रा करते हुए वहां पर विराजमान भगवान को सकलफलप्रद जानकर आपने संतान मांगी । तब भगवान ने प्रसन्न होकर अर्चक के द्वारा आज्ञा दी कि, 'हम ही तुम्हारे पुत्र के रूप में अवतार करेंगे ; चिंता मत करो' । यह वरदान पाकर वे दंपती अपने घर लौटे और यथापूर्व भगवत्सेवा में निरत हुए । कुछ समय के वाद उडैयनङ्गैयार् गर्भवती हुईं और वृषभमास (वैशाख) के विशाखा नक्षत्र के दिन, आपने एक महानुभाव का जन्म दिया । इस दिव्यशिशु का वैभव वाचामगोचर है । उसका निष्कर्ष करने में प्रवृत्त ज्ञानी लोग ऐसी चिंता में मग्न होते हैं कि, 'यह महात्मा साक्षात् भगवान का ही अवतार होगा ; अथवा किसी नित्य अथवा मुक्तपुरुष का अवतार होगा ; अथवा उन सबका मिलकर एक अवतार होगा ; अथवा परमविलक्षण भगवान की विशेष कृपा से अज्ञाननिवृत्ति पूर्वक दिव्यज्ञान प्राप्त हुआ एक संसारी चेतन होगा' इत्यादि । वस्तुतस्तु पूर्वोक्त तिरुक्कुरुङ्गुडि दिव्यदेशाधिपति भगवान के अनुग्रह के अनुसार, उनका ही यह अवतार हुआ, ऐसा मानना उचित होगा । अस्तु ।

यह तो संप्रदाय सिद्ध वाद है कि जहां भगवान अवतार लेते हैं, वहां पर 'निवासशय्यासन......' इत्यादि स्तोत्ररत्न पद्य के अनुसार, अनेक दिव्यशरीरों का धारण कर आपकी सेवा करनेवाले शेषजी स्वयं तत्कालोचित अवतार लेकर उपस्थित होते हैं । इस न्याय से, हाल में भी भगवदवतार इस दिव्य शिशु का छत्र बन कर वर्षा धूप आदि रोकने के लिए, आपने एक दिव्य इमली का पेड बनकर उधर, अर्थात् श्री कुरुकापुरी में भगवन्मंदिर के पास उपस्थित रहे ।

यह शिशु तो जन्म लेते ही, दूसरे बच्चों की तरह रोना, दूध पीना, मलमूत्र छोडना इत्यादि लौकिक कार्यों से दूर रहकर, तथापि अकृश व तेजोमय विराजमान था । इससे माँ बाप बहुत आश्चर्यमग्न हो गये, परंतु किसी प्रकार इसका परिहार करने में अशक्त होने से, वे भगवान पर भरोसा करते चुप रह गये । अवतार से बारहवां

दिन, उन्होंने दिव्यशिशु को मंदिर लेकर, आदिनाथ भगवान के दर्शन कराकर, स्वप्रलब्ध उनकी आज्ञानुसार, पूर्वोक्त इमली के पेड के नीचे ही एक पालने में उनसे छोड दिया । शिशु भी उधर ही बढता गया ।

शास्त्र बताता है कि गर्भस्थ शिशु अपने पूर्वजन्मवृत्तांत आदि जानने समर्थ ज्ञानी होता है, परंतु इस भूतल पर गिरते ही 'शठ' नामक एक वायु से आक्रांत होकर एकदम अज्ञानी बनकर रोने लगता है । जब इस वायु ने माताके गर्भ से भूस्पर्श करनेवाले प्रकृत शिशु को भी घेरना चाहा, तब इस दैवशिशु ने उसे हुंकार से दूर कर दिया । इस कारण से उसके स्वाभाविक ज्ञान नष्ट न हुआ और खाना रोना इत्यादि लौकिक अज्ञान कार्यों से वह बच गया । एवं इसी निमित्त उसका शुभनाम भी हुआ 'शठकोप' (शठवायु पर कोप करनेवाला) । शठारि, शठरिपु, शठाराति इत्यादि सभी इसके पर्याय शब्द हैं । एवं लोकविलक्षण होने से उसका 'मारन्' भी नाम हुआ ; महात्मा कारि के पुत्र होने से कारिसूनु, कारिसुत इत्यादि भी नाम हुए ।

इस प्रकार इमली के पेड के नीचे छोडा गया हुआ यह दिव्य शिशु, महात्मा शठकोप, सोलह-वर्ष तक आँखें भी खोले बिना उधर ही विराजमान था ; उसका दिव्यविग्रह तो क्रमशः बढता ही रहा । यह विशेष देखकर चकित उसके माँ बाप चिंता में पड गये और इसे अपने किसी प्रारब्ध पाप का फल समझने लगे ; परंतु बेचारे इसका कोई प्रतीकार न कर सकते थे । अतः भगवदिच्छा मानकर वे भगवान के भजन में निरत हुए । उतनें में भगवान की विशेष दिव्याज्ञा पाकर श्री विष्वक्सेनजी रहस्य में कुरुकापुरी पधारे और श्रीशठकोपजी को पंचसंस्कारों से संस्कृत कर, तत्वहितपुरुषार्थों का ठीक ठीक उपदेश कर, परमपद लौट गये । इससे विशेष ज्ञानी बने हुए श्री शठकोप स्वामीजी भी इमली के पेड के नीचे ही पद्मासन लगाकर बैठकर, भगवान का ध्यान करते हुए सोलह कलापूर्ण चंद्रमा की तरह विराजमान रहे ।

उस समय श्री मधुरकविस्वामी नामक ज्ञान भक्ति संपत्समृद्ध एक महात्मा, क्षेत्रतीर्थों की यात्रा करने के उद्देश्य से इधर उधर घूमते श्रीमदयोध्याजी के पास विराजमान थे । एक दिन रात को आपने श्रीशठकोपस्वामीजी का, आकाश तक व्याप्त विशेष दिव्य तेज देखकर, उससे आकृष्ट होकर, वहां से प्रस्थित होकर शीघ्र लंबा रास्ता पारकर, कुरुकापुरी पर पधारें, श्री स्वामीजी आँख मिचकर ध्यानमग्न बैठे थे । तब श्रीमधुरकवि ने आपके सामने एक पत्थर डाल कर उससे आवाज निकाली, जिसे सुनते ही शठकोपस्वामी ने आँखें खोलीं । फिर श्रीमधुरकविस्वामी से कृत एक प्रश्न का भी

आपने सुंदर उत्तर दिया । इससे प्रसन्नचित्त होकर श्रीमधुरकवि स्वामीजी ने आपको सर्वज्ञ जानकर साष्टांग प्रणामपूर्वक आपसे विनती की, कि 'भगवान ! इस दासको अपना शिष्य बनाकर, तत्व हित पुरुषार्थों का उपदेश देकर, धन्य बना दीजिए' । भगवत्संकल्प से प्रेरित श्री शठकोप स्वामीजीने भी यग बात स्वीकार की । अत: उस दिन से ये विलक्षण आचार्य-शिष्य मिलकर भगवद्भजन-निरत हुए ।

ऐसी अवस्था में, एक दिन श्री भूनीलासमेत परमपदनाथ भगवान ने श्री शठकोपसूरि को अपने दिव्य दर्शन देकर, आपका ज्ञान और विशद बना दिया । तथा श्रीरंगनाथ, श्री वेंकटाद्रिनाथ इत्यादि समस्तदिव्यदेशों के अधिपति अर्चारूपी भगवानने भी आपके सामने प्रकट होकर, अपने अपने विशेष कल्याणगुण भी आपके साक्षात्कार के विषय बना दिया । ऐसे परम विलक्षण भगवदनुभव करने पर श्रीशठकोपसूरि के हृदय में सीमातीत आनंद का प्रवाह उमडने लगा और अंदर न समा सकता हुआ आपके श्रीमुख से दिव्यवाणी के रूपमें बाहर निकलने लगा । अर्थात् पूर्वोक्त भगवदनुभव-जनित आनंद से प्रेरित श्रीशठकोपसूरी के श्रीमुख से दिव्यवाणी निकलने लगी, जिसने (१) तिरुविरुत्तम्, (२) तिरुवाशिरियम्, (३) पेरिय तिरुवन्दादि और (४) तिरुवाय्मोळि नामक चार दिव्यप्रबंधों का रूप धारण किया । उस समय में आपके पास ही विराजमान मधुरकविसूरि ने इन ग्रंथों को तालपत्र पर लिखकर सुरक्षित किया ।

इन चार दिव्यप्रबंधों में चौथा, सहस्रगीति सब से बडा है । इसका गान करते करते ही श्रीमधुरकविसूरि ने अपना सारा जीवित समय बिताया । और श्रीमन्नाथमुनि स्वामी, श्रीयामुनाचार्यस्वामी, श्रीरामानुजाचार्यस्वामी इत्यादि वेदवेदान्तपारदर्शी हमारे पूर्वाचार्य भी इस महान ग्रंथ के अध्ययन से ही तत्व हित पुरुषार्थों के अच्छे ज्ञाता बनकर आचार्यगद्दी संभालने में समर्थ हुए ।

दिव्यवकुलमाला का धारण करने से श्री शठकोप सूरी को वकुलाभरण, वकुळभूषण इत्यादि नाम हुए । मत्तगजसमान दुर्मतवालों को अंकुश की तरह सन्मार्ग में लाने से आप परांकुश कहलाते हैं । श्रीरंगनाथ भगवान की विशेष कृपा का पात्र बनकर आपसे, यह तो 'नम् आळवार' (हमारा आळवार) संबोधित होने से आप नम्माळवार् पुकारे जाते हैं । इसी कारण से आप आळवारों की गोष्ठी में प्रधान माने जाते हैं । 'प्रपन्नजनकूटस्थ' आपका एक बिरुद है । सब दिव्यदेशों में विराजमान भगवान की पादुका आपके नामसे 'श्रीशठकोप' पुकारी जाती है । इन सब प्रकारों से आपका वैभव सीमातीत जाना जा सकता है ।।

**[श्री शठकोप सूरी का वैभव समाप्त हुआ]**

**[एकेन्द्रियग्राह्यत्वरूपसाम्यमपि न इत्युद्देशः]**

अथ, यदि चेतनाचेतनविलक्षणत्वमेवात्र परमपुरुषस्य प्रतिपिपादयिषितम्, तर्हि तत् कण्ठत एव वक्तुं योग्यं शक्यं च । किमर्थमेवं आभ्यन्तरबाह्येन्द्रियापरिच्छेद्यत्वकथनमुखेन तदवबोधनप्रयास ऊरीकृत इति केचिदाशङ्केरन् । अत्रोच्यते । काञ्चनकरीषयोः पिपीलिकापञ्चाननयोः महति वैषम्ये सत्यपि एकेन्द्रियग्राह्यत्वेन साम्यमप्यस्ति । करीषं पिपीलिकां च येन चक्षुषा पश्यामस्तेनैव हि चक्षुषा काञ्चनं पञ्चाननं च पश्यामः ; एवंविधमेकेन्द्रियग्राह्यत्वरूपं साम्यमपि चिदचितोरीश्वरस्य च नेति प्रतिपादनार्थमेव एवं कथितमिति वेदितव्यम् ।।

**[साम्याभावेन अनवद्यत्ववैलक्षण्यसिद्धिः]**

ननु एकेन्द्रियग्राह्यत्वरूपसाम्याभावेन परमात्मनः क उत्कर्षः ? तादृशसाम्यवतोः काञ्चनकरीषयोश्च तावता का क्षतिः ? न खलु तावता तयोस्स्वाभाविकावुत्कर्षापकर्षौ हीयेते ! एवं च भगवत एकेन्द्रियग्राह्यत्वरूपसाम्याभावकथनं विफलमिति शङ्का जायेत । अत्रोच्यते । एकेन्द्रियग्राह्यत्वाभावकथनेन तन्निमित्तस्य साजात्यस्य द्रव्यैक्यस्य वा अभावः फलति । सजातीययोर्हि पदार्थयोः केनचिदाकारेण सुमहति वैषम्ये सत्यपि आकारान्तरेण साम्यं च संभवति । यथा पिपीलिकापञ्चाननयोः लघिष्ठत्वगरिष्ठत्वाभ्यां महति वैषम्ये सत्यपि जन्ममरणादिभाक्त्वेन साम्यम् । यथा च काञ्चन करीषयोरनर्घत्वाल्पत्वाभ्यां वैषम्यसत्त्वेऽपि क्रयलभ्यत्वादिना साम्यम् । एवं भगवतोऽपि तत्त्वान्तरेण साम्ये सति तद्गतकतिपयस्वभावानां वा तस्मिन् प्रसञ्जनं भवेत् । तच्चावद्ये पर्यवस्येत् । तादृशावद्यप्रसक्तिसहसाजात्यनिषेधेन भगवतोऽतिविलक्षणं वैलक्षण्यं सिध्यतीति बोध्यम् । 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' (भ.गी.२-२५) इत्यत्र गीताभाष्यश्रीसूक्तिरिह अनुसन्धेया । 'छेदनादियोग्यानि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते तैः अयं आत्मा न व्यज्यत इत्यव्यक्तः । अतः छेद्यादिविसजातीयः । अचिन्त्यश्च - सर्ववस्तुविसजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः । अतश्च अविकार्यः - विकारानर्हः' इति ।।

[ईश्वरस्वरूपस्य अपरिच्छिन्नत्वात् नान्तःकरणग्राह्यत्वम्]

ननु, यद्यपि भगवतो बाह्येन्द्रियग्राह्यत्वमसंभवीति सुवचं; तथाऽपि निष्कल्मषान्तःकरणग्राह्यत्वमपि नेति, दुर्वचं खलु । सर्वथा ज्ञानस्यैव अगोचरस्स इति सिद्धे वन्ध्यासुतशशविषाणादिवत् तुच्छता खलु प्रसज्येत । बहवो महायोगिनो भगवन्तमन्तः-करणेन वीतकल्मषेण प्रेक्षमाणाः श्रूयन्ते च । सोऽयं शठकोपसूरिश्च तादृशेष्वग्रगण्यो हि विराजते । एवं च सति कथं परस्य पुंसो वीतकलुषेणान्तःकरणेनाप्यग्राह्यत्वमभिधीयते ? इति चेत्, उच्यते; 'दृश्यते त्वग्र्यया बुद्ध्या,' (कठ.उ.३-१२) 'मनसा तु विशुद्धेन' इत्यादिप्रमाणप्रतिपन्नं विशुद्धमनोग्राह्यत्वं परमात्मनो नापलप्यते । ईदृक्तया, इयत्तया ग्राह्यत्वासंभवमात्रमिहाभिप्रेतमिति वेदितव्यम् । एतदुक्तं भवति - परमात्मनश्शुद्धमनोग्राह्यत्वेऽपि तत्स्वरूपस्यापरिच्छिन्नत्वात् शुद्धमनसाऽपरिच्छिन्नत्वमेव तस्येति वैलक्षण्यसिद्धिरिति । 'नित्यमिन्द्रियपथातिगं महो योगिनामपि सुदूरगं धियः' (व.स्त.३) इति श्रीकूरनाथसूक्तिरिहानुसन्धेया ।

[आत्मस्वरूपविसजातीयत्वे दृष्टान्तः]

'पोरियुणर्ववैयिलन्' इत्यनेन बाह्येन्द्रियजन्यज्ञानविषयादचेतनवस्तुनो वैलक्षण्यमुच्यते । जीवात्मवैलक्षण्यकथनेन अचिद्वैलक्षण्यस्य स्वतस्सिद्धत्वात् पुनरस्य पृथक्कथनमनपेक्षितमेव । अथापि कथनं स्फुटत्वाय । अथवा, बाह्येन्द्रियगोचरादचित्तत्त्वात् यथा विलक्षणः परः पुमान्, तथा परिशुद्धान्तःकरणज्ञानैकविषयात् परिशुद्धात्मस्वरूपादपि विसजातीय इति दृष्टान्तविधयोपादानमित्यपि सुवचम् । 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे.उ.६-८) इति श्रुति-वाक्यनिर्वाहे, यथा तस्मादभ्यधिको नास्ति, तथा तत्समोऽपि नास्तीति योजना स्मर्तव्याऽत्र । ननु, रामकृष्णादिविभवावतारेषु अर्चावतारेषु च बाह्येन्द्रियग्राह्यत्वं भगवतोऽस्त्येव खलु, कथं तदभाव इहोच्यत इति चेत्, तत्र दिव्यमङ्गलविग्रहस्यैव बहिरिन्द्रियग्राह्यता, न दिव्यात्मस्वरूपस्य; दिव्यात्मस्वरूपमधिकृत्यैवात्रोच्यत इति समाधेयम् ॥

[वैधर्म्यदृष्टान्ताभाववत्त्वप्रतिपादनम्]

तृतीयपादादौ इनन् इत्यस्य इत्थंभूत इत्यर्थः । उक्तस्यानुभाषणमिदम् । अनुभवाम्बुधिमग्नानां विस्मयविवशानामयं व्याहारः । उणर्मुळुनलम् - अथ कार्त्स्न्यवाचकं मुळु इत्येतन्मध्यवर्ति पदं काकाक्षिन्यायेन पूर्वत्रोत्तरत्र चान्वितं सत् ज्ञानघन

आनन्दघनश्चेत्यर्थमभिदधाति । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.२-१) 'आनन्दो ब्रह्म' (तै.उ.भृ.६-१), इत्यादि प्रमाणजालमिहानुसन्धेयम् । एदिर्निहल् कळिविनुम् इननिलन् - कालत्रयेऽपि स्वसदृशरहित इत्यर्थः । ननु अस्मदीये सिद्धान्ते तत्वत्रयमेव स्वीकृतम् । चिदचिद्वैसादृश्यं प्रथमद्वितीयपादाभ्यामुक्तमेव । सादृश्यशङ्कास्पदवस्त्वन्तराभावात् पुनरपीह स्वसदृशरहित इति कथनं निरर्थकमेव खलु इति चेत्, उच्यते । सामान्यतस्सदृशराहित्यं पूर्वमुक्तम् । इह तु विशिष्य कालत्रयेऽपि तद्राहित्यमुच्यत इति भेदोऽवसेय इति केचिदाचार्या ऊचुः । भट्टपादास्तु 'साधर्म्यदृष्टान्ताभावः पूर्वमुक्तः, वैधर्म्यदृष्टान्तस्याप्यभाव इहोच्यत' इत्याहुः । तदिदं विव्रियते । मुखं न कमलसदृशमित्युक्ते मुखस्य साधर्म्यदृष्टान्तवत्त्वं सिध्यति; मुखं न कमलसदृशमित्युक्ते साधर्म्यदृष्टान्तविरहेण सह वैधर्म्यदृष्टान्तसद्भावस्सिध्यति। कमलस्य न साधर्म्ये दृष्टान्तता, अपि तु वैधर्म्ये इति । अथ प्रकृतेऽवतरामः । भगवान् चिदचित्सदृश इत्युक्ते भगवतस्साधर्म्यदृष्टान्तवत्त्वं सिद्ध्येत् । भगवान् न चिदचित्सदृशः, अपि तु तद्विसजातीय इत्युक्ते वैधर्म्यदृष्टान्तसत्ता सिध्येत् । तादृशवैधर्म्यदृष्टान्तसत्ताऽपि चतुर्थपादे इननिलन् इत्यनेन अपनुद्यत इति भट्टपादानां सूक्तिः । अनया किमुक्तं भवतीति विमर्शनीयम् । भगवान् चिदचिद्विलक्षण इति कथनमप्यसाधु इत्युक्तं भवति । तर्हि स, चिदचिद्विलक्षणो न, चिदचित्सदृश एव इति खलु साधितं भवेदिति नाशङ्कनीयम् । प्रसज्यप्रतिषेधमात्रमपि अस्थाने इत्येव कथितं भवेत् । बुद्ध्यारोहार्थं पुनरुपपाद्यते 'वसिष्ठो न चण्डालतुल्य' इति कश्चिदाह । अपरः कश्चिदाह - मूर्ख! मैवं वादीरिति । किमेतावता वसिष्ठं चण्डालतुल्यं ब्रूहीति कथितं सिध्येत्? नैष सिध्येत् । वसिष्ठो न चण्डालतुल्य इति प्रतिषेधोऽप्यत्यन्तमचारुरिति हि सिध्येत् । एवम्, ईश्वरश्चित्सदृशो नेति कथनमप्यवद्यावहम् इत्येव भट्टपादहृदयमवसेयम् । यत्र साम्यप्रसक्तिस्तत्रैव खलु तत्प्रतिषेध उपपद्येत । सर्वथाऽपि तदप्रसक्तिस्थले तत्प्रतिषेधोऽनुपपन्नः अवद्यावहश्चेति विपश्चितो विदन्ति इत्यलम् ।

चतुर्थपादे एननुयिर् इत्यस्य ममान्तरात्मा इत्यर्थः । तथा च चिदचिद्विलक्षणः समाधिकरहितश्च परमपुरुषः ममात्मा इति समापनं बोध्यम् । अथवा, समाधिकरहितो ममात्मा च यः परमपुरुषः, तस्य पादौ नमस्कृत्य समुज्जीव भो मम मानसेति पूर्वगाथया संयोज्यतामित्यप्याचार्या व्याचख्युः ।।

### [प्रतिपदार्थ]

**हिन्दी** - मन में होनेवाले (कामक्रोधादिरूप) मल के निकल जाने पर, खिलकर उत्तरोत्तर बढते मानसज्ञानरूपी योगज्ञान से जाने जानेवाले (जीवात्मा) से अतिरिक्त

है, चक्षुरादि पाँच इंद्रियों के गोचर (अचित्पदार्थ) से भी अतिरिक्त है, इस प्रकार के परिपूर्ण ज्ञान व आनंद रूपी, भविष्यत्, वर्तमान व भूत रूपी तीनों कालों में भी अपने सदृश दूसरे पदार्थ से विरहित, अपने से भी अधिक वस्तु से भी शून्य भगवान मेरे अंतरात्मा हैं ।।

**[सारार्थ]**

मानसज्ञान के विषय होनेवाले जीवात्मा से एवं बाह्येन्द्रिय के विषय होनेवाली अचिद्वस्तु से विजातीय, अपने समान अथवा अधिक वस्तु से विरहित, ज्ञानानंद घन भगवान मेरे अंतरात्मा हैं ।।

**[चिदचिद्वैलक्षण्य अर्थ ही उद्दिष्ट है]**

यद्यपि मूलगाथा में भगवान को स्पष्टतः चेतनाचेतन विलक्षण नहीं बताया गया है; शब्दार्थ इतना ही होगा कि भगवान मानससाक्षात्कार के अथवा बाह्येंद्रिय साक्षात्कार के विषय नहीं होते । तथापि मर्मज्ञ हमारे आचार्य, उक्त वाक्य से भगवान के चिदचिद्वैलक्षण्य का ही अर्थ निकालते हैं । ऐसे करने में किसी प्रकार का क्लेश भी नहीं है । जीवात्मा तो दोषमुक्त परिशुद्ध योगियों के मानस साक्षात्कार का विषय होता ही है । भगवान के ऐसे न होने का कारण उन का जीव से वैलक्षण्य ही हो सकता है । अर्थात्, अगर भगवान भी दूसरे जीवों के समान ही होते, तो उन की तरह वे योगज्ञान के विषय भी होते । ऐसे न होने से वे जरूर उन से विलक्षण हैं । एवं अचित्पदार्थों की तरह वे बाह्येंद्रियों के विषय भी न होते हैं; इस से उन का अचिद्वैलक्षण्य सिद्ध हुआ ।

**[भगवान का चिदचितों के साथ साम्य का अभाव]**

'भगवान चिदचिद्विलक्षण हैं' - ऐसा संक्षिप्त कथन छोडकर एक गाथा के दो पादों से इस के विस्तार करने की यह विशेषता बतायी जाती है कि भगवान सर्वथा अतींद्रिय हैं, एकेंद्रियग्राह्यत्व इत्यादि किसी प्रकार से भी वे चिदचितों के सदृश नहीं हैं । अर्थात्, कांचन व कोयलों की श्रेष्ठता में विशेष अंतर जरूर रहता है; तथापि दोनों नेत्ररूप एक इंद्रिय के विषय बनते हैं । इस प्रकार से, चिदचितों से अत्यंत श्रेष्ठ होने पर भी क्या भगवान उन के ग्राहक इंद्रियों से ग्राह्य होंगे ? इस शंका की

निवृत्ति भी प्रकृत लंबे वर्णन से की जाती है । तथा च इन दो पादों से भगवान सर्वथा अतींद्रिय, समस्त चेतनाचेतन पदार्थों से सर्वथा सादृश्य रहित, यानी उन से परमविलक्षण एवं उन से बहुत श्रेष्ठ बताये गये । यथा श्रीरामानुजाचार्य स्वामीजी ने गीताभाष्य में 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' (भ.गी.२-२५) इत्यादि पद्यभाष्य में जीवात्मा के बारे में लिखा - 'छेदनादियोग्यानि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते, तैः अयम् आत्मा न व्यज्यत इत्यव्यक्तः । अतः छेद्यादिविसजातीयः । अचिन्त्यश्च - सर्ववस्तुविसजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः, अतश्च अविकार्यः - विकारानर्हः' । इन वाक्यों का यह तात्पर्य है - काटना तोडना इत्यादि व्यापारों के लक्ष्य पदार्थ जिन प्रमाणों के गोचर होते हैं, उन का यह जीवात्मा गोचर न होगा ; अतः यह शंका भी न की जा सकती है कि क्या यह भी कदाचित् उक्त पदार्थ जैसा ही होग्गा । (अर्थात् क्या यह भी उन छेद्यपदार्थों का सजातीय होगा ।) एवं इस के दूसरे समस्तपदार्थों से विजातीय होने के कारण, यह शंका तक न की जा सकती है कि क्या यह जीव भी उन पदार्थों के जैसे स्वभाववाला है । इसी कारण से यह विकारशून्य भी होता है ।।

**[भगवान अन्तःकरण के विषय नहीं]**

यहां पर दूसरी एक शंका हो सकती है कि यद्यपि भगवान को चक्षुरादि बाह्येंद्रिय के अविषय बताना ठीक है ; क्यों कि अनेक प्रमाणों में उन को अतींद्रिय बताया गया है ; तथापि उन को परिशुद्ध मानसज्ञान के भी अविषय बताने में प्रमाण क्या है ? ऐसे कहने पर उन को सर्वथा ज्ञान के अविषय (अर्थात प्रमाणागोचर) शशशृंगादि के समान तुच्छ वस्तु ही कहना पडेगा । एवं 'दृश्यते त्वग्र्यया बुद्ध्या,' 'मनसा तु विशुद्धेन' इत्यादि, उन को परिशुद्ध मनोग्राह्य बतानेवाले, श्रुतिवाक्य भी बिगड जायंगे । ऐसा विरुद्ध अर्थ यहां पर कैसे बताया गया ? इस का यह समाधान है - हम यह दावा नहीं कर रहे हैं कि भगवान परिशुद्ध मन के भी सर्वथा अविषय हैं ; परंतु हमारा कहना है कि यह समझना परिशुद्ध मन के लिए भी अशक्य है कि भगवान का वैभव ऐसा है या इतना है । यह तात्पर्य है - परिशुद्ध योगज्ञान के विषय होने पर भी भगवान अपरिच्छेद्यस्वरूप होते है ; अतः यह मन भी उन को पूर्णतया साक्षात्कार करने में अशक्त है । यथा श्रीकूरेशस्वामीने श्रीवरदराजस्तव में अनुगृहीत किया - 'नित्यमिन्द्रियपथातिगं महो योगिनामपि सुदूरगं धियः' (अर्थात् भगवान बाह्येंद्रिय के अविषय, एवं योगियों के मन से भी दूर हैं) ।।

**[भगवान समाधिकरहित हैं]**

पोरियुणर्वैयिलन् - भौतिक पदार्थ चक्षुरादि इन्द्रियों के गोचर होते हैं । इन से विलक्षण भगवान तो इंद्रियगम्य न होते हैं । यद्यपि भगवान को परिशुद्ध मन के अविषय बताने के बाद, उन को बाह्येन्द्रियों के अविषय कहने की आवश्यकता नहीं हैं; तथापि स्पष्टता के लिए यह पुनरुक्ति की गयी है । अथवा यह दृष्टांत के रूपमें कहा गया है; अर्थात इस का यह तात्पर्य है कि भगवान जैसे बाह्येंद्रियों के अविषय हैं, इसी प्रकार परिशुद्ध मन के भी अविषय हैं । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादि श्रुतिवाक्य में तथा भगवद्गीता के 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादि वचन में भगवान के सदृश व्यक्ति के निषेध करने के बाद उन से अधिक के निषेध करने की आवश्यकता नहीं रहती । अतः इस का ऐसा अर्थ होता है कि उन के सदृश ही नहीं है तो अधिक कहां से होगा ? अथवा जैसे उन के सदृश कोई नही है, वैसे उन से अधिक भी कोई नहीं है । यह न्याय यहां भी लगेगा । यद्यपि रामकृष्णादि विभवावतार एवं अर्चावतार बाह्येंद्रिय के विषय हैं; अतः उन को अतींद्रिय कहना अनुचित प्रतीत होगा; तथापि यहां पर भगवान के दिव्यात्मस्वरूप का ही वर्णन किया जा रहा है; न तु दिव्यमंगल विग्रह का; अवतार में प्रत्यक्ष होनेवाली वस्तु तो दिव्यमंगलविग्रह ही है; अतः विरोध नहीं है ।।

**[वैधर्म्यदृष्टांत का भी अभाव]**

तीसरे पाद में इनन् का अर्थ है ऐसा रहनेवाला । पूर्वोक्त भगवान के अनुभव में मग्न होकर, आश्चर्य परवश होनेवालों का यह उद्गार है । उणर्मुळुनलम् - उणर् - ज्ञान, मुळु - परिपूर्ण, नलम् - आनंद । बीच में होनेवाला मुळु शब्द अपने आगे से तथा पीछे से भी संबद्ध होता है । तथा च यह अर्थ निकलता है कि भगवान परिपूर्ण ज्ञान रूपी (ज्ञानघन) तथा आनंदरूपी (आनंदघन) हैं । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्म' इत्यादि इस विषय में प्रमाण हैं । अर्थात भगवान ज्ञानवान व आनंदवान बताये जाने के अतिरिक्त, ज्ञानस्वरूपी व आनंद स्वरूपी भी बताये गये हैं । उपरोक्त श्रुतियों का यही तात्पर्य है । एदिर्निहळ् कळिविनुम् इननिलन् - तीनों कालों में भी अपने सदृश व्यक्ति से विरहित । जब पहले दो पादों से भगवान समस्त चेतनाचेतन विलक्षण बताये गये, फिर उन के सदृश दूसरा कोई कहां से मिलेगा, जिस का निषेध करने की अब आवश्यकता आ पडी ? इस का यह समाधान है कि

पूर्व में भगवान की सामान्यतः चिदचिद्विलक्षणता कही गयी ; अब तो विशेष रूप से उन के सदृश दूसरे किसी व्यक्ति का तीनों कालो में स्पष्ट अभाव कहा जाता है ; अर्थात पूर्व में एक सामान्य अर्थ बताया गया ; प्रकृत में तो एक विशेष अर्थ बताया जाता है ; अतः पुनरुक्ति नहीं है । श्री पराशरभट्टार्यस्वामीजी कहते हैं कि पूर्व वाक्य में भगवान साधर्म्यदृष्टांतशून्य बताये गये और इस वाक्य में वैधर्म्यदृष्टांतशून्य बताये जाते हैं, अतः पुनरुक्ति नहीं है । यह तात्पर्य है - काव्यों में किसी वस्तु का दृष्टांत दो प्रकारों से दिया जाता है - साधर्म्य से अथवा वैधर्म्य से । तथाहि - भगवान के पाद कमल के समान हैं - इस वाक्य का यह तात्पर्य है कि कमल का जो सौंदर्य है, वही भगवत्पादों में भी है । तथा च यह साधर्म्य-दृष्टांत हुआ । वैधर्म्य-दृष्टांत का यह उदाहरण है - महात्मा लोग चोर के सदृश न होते हैं । इस का यह तात्पर्य है कि जैसे चोर दूसरों से ठगना सताना इत्यादि दुर्व्यवहार करते हैं, वैसे महात्मा लोग नही करते हैं, अर्थात चोर का वैधर्म्य महात्माओं से कहा जाता है ; अतः यह वैधर्म्य दृष्टांत कहा जाता है । परंतु कभी कभी ऐसा प्रसंग बनता है कि वैधर्म्य दृष्टांत बताना भी अनुचित होगा । यथा, यह वाक्य कहना भी अनुचित है कि वसिष्ठ भगवान चंडाल के सदृश नहीं है । क्यों कि ऐसे कहने का यह तात्पर्य होता है कि कभी किसी के मन में वसिष्ठ को चंडाल सदृश होने की शंका हुई होगी । शास्त्र का न्याय है कि 'प्रसक्तस्यैव हि प्रतिषेधः' (अर्थात किसी की प्रसक्ति होने पर ही उस का निषेध किया जा सकता है ; जिस की प्रसक्ति ही न होगी, इस का निषेध नहीं किया जाता ।) इस न्याय से यहां भगवान का वैधर्म्य दृष्टांत बताना भी उन के वैभव की हानि पहुंचाना है । अतः इस गाथा से उन का साधर्म्यदृष्टांताभाव, वैधर्म्यदृष्टान्ताभाव, ये दोंनों बताये जाते हैं ।

चौथे पाद में एननुयिर् का अर्थ है मेरे अंतरात्मा । पूर्वोक्त विशेषणविशिष्ट भगवान मेरे अंतरात्मा हैं - ऐसा अर्थ निकलता है । अथवा पूर्व गाथा से इस का एकान्वय कर, ऐसा अर्थ भी कर सकते हैं कि 'चिदचिद्विलक्षण, समाधिकरहित, मेरे अंतरात्मा भगवान के पादारविंदों का प्रणाम कर, हे मेरे मन ! तुम समुज्जीवित हो जाओ' ।।

**इलनदु वुडैयन् इदु एन निनैवु अरियवन् निलनिडै**
**विशुम्बिडै उरुविनन् अरुविनन्**
**पुलनोडु पुलनलन् ओळिविलन् परन्द अन्नलनुडै**
**ओरुवनै नणुहिनम् नामे ।। ३ ।।**

**(गाथा) - तस्यायं प्रभुरस्ति नास्य तु किलेत्येवं न वक्तुं स्वयं**
**शक्यो यः पृथिवीतले च गगने यद्रूप्यरूप्यस्ति च ।**
**तत्सर्वं च जडाजडं वहति यस्संयुक्त एवाखिलै-**
**स्सत्यं भाति पृथक्च विष्णुममितानन्दं तमेकं नुमः ।। ३ ।।**

**[प्रतिपदार्थः]**

**विवरणम् -** 'तद्वस्तुरहितः' 'एतद्वस्तुविशिष्टः' इत्येवं चिन्तयितुम् अशक्यः ; सर्वेषु अधोलोकेषु सर्वेषु चोर्ध्वलोकेषु वर्तमानानि अचिद्वस्तूनि चिद्वस्तूनि च स्वशरीरतया बिभ्राणः ; इन्द्रियग्राह्यवस्तुभिः सह वर्तमानोऽपि इन्द्रियैरग्राह्यः, कालपरिच्छेदरहितः देशपरिच्छेदरहितश्च (स परमात्मा) ; तत्तादृशकल्याणगुणविभूषितम् अद्वितीयं भगवन्तं वयम् आश्रिताः ।।

**[सारार्थः]**

परिच्छिन्नविभूतिकेषु वक्तव्यां वाचम् असहमानं, पृथिव्यन्तरिक्षादिसकललोकवर्ति-चेतनाचेतनात्मकसमस्तवस्तुशेषिणं सर्वजगदात्मभूतत्वेऽपि तद्गततदोषैः संस्पृष्टम् अद्वितीयं सर्वेश्वरमाश्रिता वयमित्युक्तं भवति ।

**[भगवतः अपरिच्छिन्नविभूतिकत्वं चिदचिच्छरीरकत्वं च]**

प्रथमपादेन सर्ववस्त्वाश्रयत्वम् अभिधीयते । लोके परिच्छिन्नविभूतिकव्यक्तिषु सर्वपदार्थवत्त्वं वक्तुं न शक्यम् । वस्तुतो यानि सन्ति कानिचन वस्तूनि, तान्युपादाय एतान्यत्र सन्तीति कथ्येत । वस्तुतो यानि न सन्ति तान्युद्दिश्य एतान्यत्र न सन्तीति कथ्येत । सतां वस्तूनाम् अत्यल्पत्वम् असतां वस्तूनाम् अल्पत्वं च भगवदितरव्यक्तिषु सिध्येत् । भगवति तु सर्ववस्त्वाधारत्वेन एतदस्त्यत्रेति नास्तीति वा कथनं चिन्तनं च नैव प्रसक्तिमदिति प्रथमपादतात्पर्यम् । अपरिच्छिन्नविभूतिको भगवान् इत्युक्तं भवति । अथ द्वितीयपादेन सर्वलोकवर्तिचिदचिच्छरीरकत्वमुच्यते । संस्कृते रूपि अरूपि इति पदद्वयं प्रथते। तदेव द्राविड्यां क्रमेण उरु, अरु इति संशब्द्यते । अचिद्वस्तूनां रूपित्वम् चिद्वस्तुनः अरूपित्वं च संप्रतिपन्नम् । अधोलोकेषु ऊर्ध्वलोकेषु च यावन्ति सन्ति चिदचिद्वस्तूनि, तानि सर्वाणि भगवति सन्तीति कथनं मूले वर्तते । एतेन चिदचिद्वस्तुशरीरकत्वं (सकलचेतनाचेतनान्तर्यामित्वपर्यवसितं) भगवतस्सिद्धम् । 'जगत्सर्वं शरीरं ते' (रामा.यु.११०-२५) इत्यादिभिः प्रमाणै उपबृंहितो ह्ययमर्थः ।।

**[इन्द्रियाग्राह्यः देशकालपरिच्छेदरहितः च ईश्वरः]**

अथ तृतीयपादे 'पुलनोडु' इत्यनेन 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' ।। (तै.ना.उ.११-५) इति श्रुत्यर्थोऽनुसन्धीयते । इन्द्रियग्राह्यैस्सर्वैरपि पदार्थैस्सह वर्तमानो भगवानित्युक्तं भवति; वर्तनं च व्याप्त्या । एवं सर्ववस्तुषु वर्तमानोऽयं किं तद्गतदोषैः संस्पृश्येत ? इत्यत्राह पुलनलन् इति । न तद्धर्मा । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्न्यो अभिचाकशीति' ।। (मुं.उ.३-१-१) इति श्रुतिरिह व्याख्याता भवति । शारीरकमीमांसायां 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.१-२-८) इति सूत्रम् इहानुसन्धेयम् । जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत्, तद्वदेव शरीरसंबन्धप्रयुक्तसुखदुःखोपभोगप्रसङ्ग इति चेन्न; हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगे हेतुः, अपि तु पुण्यपापरूपकर्मपरवशत्वम् । तत्तु अपहतपाप्मनः परमात्मनो न संभवतीति सूत्रार्थः ।।

**[प्रतिपदार्थ]**

**हिन्दी -** भगवान को फलानी वस्तु से विरहित और फलानी वस्तु से युक्त कहना अशक्य है, नीचे और ऊपर के समस्त लोकों में रहनेवाले अचित और चित पदार्थ उन के शरीर हैं, इंद्रियग्राह्य पदार्थों के साथ होते हुए भी वे स्वयं इंद्रियों के अविषय हैं, काल और देश परिच्छेद रहित हैं; ऐसे कल्याणगुणगणविभूषित अद्वितीय भगवान का हम ने आश्रय लिया है ।।

**[सारार्थ]**

सीमित वैभववाले पदार्थो के विषय में कहे जानेवाले, 'इस वस्तु में ये गुण विभूति आदि रहते हैं, न तु दूसरा' इत्यादि कथन के अविषय, भूम्याकाशादि समस्तलोकवर्ति चेतनाचेतनात्मक समस्त वस्तुओं के शेषी, सर्वजगद्रूपी होते हुए भी उस के दोषों से दूर, अद्वितीय भगवान के हम आश्रित हैं ।।

**[भगवान सर्ववस्त्वाश्रय और सर्वशरीरी हैं]**

पहले पाद में भगवान सर्ववस्तुओं के आश्रय बताये जाते है । लोक में, भगवान के सिवा, दूसरे देव मनुष्यादि व्यक्तियों का ऐश्वर्य सीमित रहता है; अर्थात् एकैक के पास कतिपय ऐश्वर्य (गुण विभूति आदि) होते हैं और दूसरे बहुत न होते हैं । भगवान तो

सर्वाधार हैं ; अतः उन को लक्ष्यकर यह कहना सर्वथा अप्रसक्त व अशक्य होता है कि उन में यह वस्तु है, अथवा यह नही है, । अर्थात् उन के बारे में यही कहा जा सकता है कि भगवान सर्वाश्रय हैं, न तु भगवान के पास फलाना नहीं है इत्यादि । तथा च यह तात्पर्य हुआ कि भगवान असीमित ऐश्वर्यवाले हैं । दूसरे पाद से भगवान का चेतनाचेतनरूप सर्वपदार्थ शरीरित्व बताया जाता है । रूपवाला अचेतनवस्तु उरु शब्द का अर्थ है ; नीरूप आत्मा अरु शब्द का अर्थ है । भगवान चतुर्दशलोकवर्ति समस्त चेतनाचेतनविशिष्ट बताये गये हैं ; अर्थात उन सब के अंतर्यामी अथवा शरीरी हैं । यथा ब्रह्मादि देवों ने श्रीरामचंद्र भगवान की स्तुति की - 'जगत्सर्वं शरीरं ते' (रामा.यु.१२०-२५) इत्यादि ।।

**[भगवान सर्वव्यापी परं तु दोषदूर हैं]**

तीसरे पाद में पुलनोडु शब्द से 'यच्च किञ्चित् जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.ना.उ ११-५) (इस प्रपंच में जो कोई पदार्थ देखा जाता है अथवा सुना जाता है, उन सब में, अंदर और बाहर, श्रीमन्नारायण व्याप्त हैं) इत्यादि श्रुति का अर्थ बताया गया है । इंद्रियों के विषयभूत समस्त पदार्थों के साथ (अर्थात् उन में व्याप्त होकर) भगवान विराजमान बताये गये । इस से यह शंका हो सकती है - 'इस प्रकार, सर्वत्र व्याप्त होने के कारण क्या भगवान को उन उन वस्तुओं के दोष भी लगेंगे' । अतः इस का प्रत्युत्तर दिया जाता है - पुलनलन् - उन के सदृश नहीं हैं । स्वयं श्रुति ने इस अर्थ का स्पष्ट वर्णन किया - 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' ।। (मुं.उ.३-१-१) इस का शब्दार्थ यह है - सुंदर पंखवाले, परस्पर मिलकर रहनेवाले मित्र दो पक्षी एक वृक्ष पर रहते हैं ; उन में से एक उस वृक्ष के मीठे फल खाता है ; परं तु दूसरा कुछ खाये विना ही प्रकाशमान रहता है । इस निगूढवाणी का यह तात्पर्य है कि जीवात्मा और परमात्मा दोनों इस देव मनुष्यादि शरीर में रहते हैं; जीव तो शरीर से सुखदुःख भोगता है और कृश बनता है ; परंतु भगवान भोगदूर और अत एव दोषदूर रहकर चमकते हैं । 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.१-२-८) इस ब्रह्मसूत्र में भी यह अर्थ बताया गया । यहां पर यह शंका की गयी कि अगर जीव की तरह भगवान भी शरीर में व्याप्त होते, तो उसी की तरह उन को भी सुखदुःख भोगना पडेगा । इस का प्रत्युत्तर यह दिया गया कि जीव के भी सुखदुःख भोगने का हेतु उस का शरीरप्रवेश मात्र नहीं,

परंतु पुण्यपापरूप उस के कर्म हैं । 'अपहतपाप्मा' इत्यादि बिरुदधारी, समस्तपापदूर भगवान तो चेतन के नियामक होकर उस के साथ शरीर में व्याप्त हैं, अतः इस से उन को किसी प्रकार का दोष न लगेगा ।।

**नामवन् इवनुवन् अवळिवळ् उवळेवळ्**
**तामवर् इवरुवर् अदुविदु वुदुवेदु**
**वीमवै यिवैयुवै अवै नलम् तीङ्ग्वै**
**आमवैयाय् अवैयाय् निन्न ववरे ।। ४ ।।**

**(गाथा) - सर्वं भाति स एव यद्वयमसावेषोऽप्ययं सा स्वयं**
**चैषेयं किल काऽपि च स्वयममी तेऽपीति चेमे तथा ।**
**तच्चेदं यददश्च किञ्च सकलं यन्नश्वराण्यप्यहो**
**तानीमानि तथाऽप्यमूनि सदसद्वस्तूनि भाव्यागतम् ।। ४ ।।**

**[प्रतिपदार्थः]**

**विवरणम् -** वयम्, दूरस्थः, सन्निहितः, अदूरविप्रकृष्टः, दूरवर्तिनी, सन्निकृष्टा, अदूरविप्रकृष्टा, का स्विदियमिति पृच्छ्यमाना पूज्यत्वविशेषिताः त एव (पूर्वोक्ताः) पदार्थाः पूर्वोक्तदूरस्थत्वादिगुणयुक्ताः अचित्पदार्थाः दूरस्थत्वादिगुणेन सह नश्वरत्वगुणेनापि युक्तास्त एव पदार्थाः समीचीना असमीचीनाश्च पदार्थाः भविष्यत्कालिकपदार्थाः भूतकालिकपदार्थाः वर्तमानकालिकपदार्थाश्च (इत्येतत्सर्वं) भगवदायत्तमेव ।।

**[शरीरनिर्देशपरशब्दानां शरीरिपर्यन्तत्वं उद्दिष्टम्]**

विविधैः निर्देशैर्निर्दिश्यमानानां समस्तानामपि वस्तूनां स्वरूपं भगवदधीनमेव इत्युक्तं भवति । अत्र नाम्, अवन् इत्यादयः शब्दाः तत्तच्छरीरकपरमात्मपराः; शरीरवाचिनां शब्दानां शरीरिपर्यन्तत्वस्य अपर्यवसानवृत्तिसिद्धत्वात् । 'सर्वेन्द्रियान्तःकरणपुरुषाख्यं हि यज्जगत् । स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' ।। (वि.पु.१-२-६८,६९) इति पराशरः 'यतोऽसौ विश्वशरीरकः ततो जगत् स एव' इत्युक्तवान् । तथा च सामानाधिकरण्यनिर्देशे शरीरात्मभावस्य हेतूकरणात् इहापि शरीरात्मभावनिबन्धनमेव सामानाधिकरण्यम्, न तु स्वरूपाभेदनिबन्धनमिति द्रष्टव्यम् । वक्ष्यते च सुस्पष्टमिदं मुनिवरेणैव उपरि सप्तमगाथायाम् 'उडन्मिशै उयिरेन' इति ।।

**[सर्वपदार्थप्रतिपादने अतिविलक्षणा रीतिरित्युक्तिः]**

जगति वर्तमानानि सर्वाण्यपि वस्तूनि भगवदायत्तस्वरूपाणीति विवक्षुः मुनिवरः जागतानां सर्वेषामपि वस्तूनां प्रत्येकश उपादानं दुश्शकमिति मन्यते स्म । विवेचनमन्तरेण 'सर्वाण्यपि वस्तूनि' इति संहत्य कथने रसो नास्तीति चामन्यत । सुबहु विमृश्य अतिचारुतरप्रक्रियया गाथाम् इमां निबबन्ध । लघीयस्यामपि गाथायाम् अस्यामेकस्यां लीलाविभूतिवर्तीनि सर्वाण्यपि पदार्थबृन्दानि चातुर्यभूम्ना निर्दिष्टानि अभूवन्निति पश्यत । उत्तमपुरुषनिर्देश्याः, प्रथमपुरुषनिर्देश्याः, एकवचननिर्देश्याः, बहुवचननिर्देश्याः, दूरस्थत्वेन निर्देश्याः, सन्निकृष्टत्वेन निर्देश्याः, अदूरविप्रकृष्टत्वेन निर्देश्याः, चित्त्वेन निर्देश्याः, अचित्त्वेन निर्देश्याः, पूज्यत्वेन निर्देश्याः, पुन्नपुंसकस्त्रीत्वैः निर्देश्याः, प्रष्टव्यत्वेन निर्देश्याः, भंगुरत्वेन निर्देश्याः, सद्गुणवत्त्वेन च निर्देश्याः, असद्गुणवत्त्वेन च निर्देश्याः, भूतभविष्यद्वर्तमानकालवर्तित्वेन निर्देश्याः पदार्था इति एवं नामकथनभिदया सर्वमपि पदार्थजातं संगृहीतमिह गाथायामहह । अतिविस्तारमतिसंक्षेपं च विहाय लघुशब्दशरीरेण जागतसर्वपदार्थप्रतिपादनफक्किका सैषा मुनिवरेऽस्मिन् असाधारणी दृश्यते । प्रदर्शितेषु एतेषु निर्देशेषु अन्तर्भावमनश्नुवानं वस्तु नैकमपि विद्यते लीलाविभूत्याम् । तथा च सर्वाण्यपि वस्तुजातानि निरवशेषं निर्दिष्टानि अभूवन् । निर्दिश्य किमुक्तम् अन्ततः ? **अवरे** - स एव - इत्युक्तम् । सर्वं स एव इत्यभेद उक्तः । 'सर्वं खल्विदं ब्रह्म' (छां.उ.३-१४-१) इत्यादिश्रुतिवाक्येषु अद्वैतिनां निर्वाहप्रकारोऽन्यः । श्रीशठकोपमुनीन्द्रसूक्त्युपजीवि - भगवद्रामानुजसंप्रदायस्थानां निर्वाहप्रकारस्तु अवन्यः । शरीरशरीरिभावनिबन्धन ऐक्यव्यपदेश इति अत्र संक्षेपः । 'तत्सर्वं वै हरेस्तनुः' (वि.पु.१-२२-३८) इत्युक्तमिति ध्येयम् ।।

**[प्रतिपदार्थ]**

**हिन्दी -** हम, दूर रहनेवाला, अतिसमीप रहनेवाला, बीच में रहनेवाला, दूर रहनेवाली, समीप रहनेवाली, बीच में रहनेवाली, 'यह कौन है' ? - ऐसे पूछी जानेवाली, हमारे पूज्य (वे ही पूर्वोक्त) परोक्ष में रहनेवाले, समीप में रहनेवाले, वह, यह, बीच में रहनेवाला और प्रश्न का विषय अचेतन पदार्थ, नश्वर (पूर्वोक्त) वे, ये बीच में रहनेवाले परोक्ष अचेतन पदार्थ, अच्छे और बुरे पदार्थ, भविष्यत्काल के पदार्थ, वर्तमान काल के पदार्थ (ये सभी पदार्थ) भगवदधीन ही हैं ।।

**[जगत और भगवान के बीच शरीरात्मभावसंबंध है]**

इस गाथा से लोकव्यवहार में नानाप्रकार के शब्दों से बताये जानेवाले सभी पदार्थ भगवदधीन बताये जाते हैं । मूल गाथा में इतना ही कहा गया है कि समस्त पदार्थ खुद भगवान ही हैं । इस का तात्पर्य तो यह है कि भगवान सब के अंतर्यामी (अथवा अंतरात्मा) होकर उन के नियामक हैं ; अतः सब उन के अधीन हैं । श्रुति में तत्र तत्र दूसरी वस्तुओं से भगवान का अभेद जो बताया गया है, तदनुसार यह भी गाथा गायी गयी है । अभेद शब्द सुनते ही, दूसरे लोग भगवान का सबसे स्वरूपतः जो अभेद मान लेते हैं, उस का अनौचित्य श्रीपराशरमहर्षि से श्री विष्णुपुराण में सुंदर प्रकार से दिखाया गया है - 'सर्वेन्द्रियान्तःकरणपुरुषाख्यं हि यज्जगत् । स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः' ।। इस का यह अर्थ है - समस्त इंद्रिय मन व जीवरूपी यह जगत् भगवान् ही है ; क्यों कि विनाशरहित वे सर्वशरीरक एवं सर्वभूतांतर्यामी हैं । अतः समझना चाहिए कि जगत व भगवान के बीच में रहनेवाले शरीरात्मभावरूप इस अंतरंग संबंध को बताने के लिए शास्त्रों में उन का अभेद बताया गया है । आळ्वार भी आगे सातवीं गाथा में इस अर्थ का सुस्पष्ट विवरण करेंगे ।।

**[इस गाथा में समस्तपदार्थो का उल्लेख अपूर्वप्रकार से हुआ है]**

संक्षेप में संसारवर्ति समस्त पदार्थो को भगवदधीन कह डालने पर सुननेवालों की तृप्ति न होगी ; सभी पदार्थो के अलग अलग नाम लेना अशक्य है ; क्यों कि ये पदार्थ अनंत होते हैं । अतः अत्याश्चर्यमय एक प्रकार से सब का उल्लेख कर, आळ्वार उन को भगवदधीन बताते है । तथा हि - संसार के सभी पदार्थो का इन श्रेणियों में विभाग किया जा सकता है - उत्तमपुरुष वाच्य, प्रथमपुरुष वाच्य, एकवचन वाच्य, बहुवचन वाच्य, परोक्ष, प्रत्यक्ष में परंतु बहुत दूर रहनेवाले, अति समीप रहनेवाले, बीच में रहनेवाले, चेतन, अचेतन, पूज्य कहलानेवाले, पुरुष, स्त्री, नपुंसक, 'यह कौन है' ? ऐसे प्रश्न के विषय, अनित्य, श्रेष्ठगुणवाले असद्गुणवाले और भूतभविष्यद्वर्तमानकाल से संबंधित पदार्थ, संसारस्थ सभी पदार्थ इन श्रेणियों में शामिल हो जाते हैं । आळ्वार इस प्रकार अतिसंक्षेप अथवा अतिविस्तार छोडकर, संग्रह से समस्तपदार्थो को बताकर, उन सब को अवरे - भगवान ही - कहते हैं । 'सर्वं खल्विदं ब्रह्म' इत्यादि श्रुतिवाक्य का अद्वैतियों से बताया जानेवाला अर्थ दूसरा है ; । श्रीशठकोपसूरि

के अनुयायी भगवद्रामानुज स्वामीजी से उपवर्णित अर्थ भिन्न है । अर्थात् पूर्वोक्त प्रकार से 'तत्सर्वं वै हरेस्तनुः' (वि.पु.१-२२-३८) इत्यादि प्रमाणप्रतिपन्न शरीरात्मभाव को स्पष्ट बताने के लिए यह अभेदवाद किया गया है ।।

**अवरवर् तमतमदु अरिवरि वहैवहै**
**अवरवर् इरैयवर् एन वडि यडैवर्हळ्**
**अवरवर् इरैयवर् कुरैविलर् इरैयवर्**
**अवरवर् विदिवळि अडैय निन्ननरे ।। ५ ।।**

**गाथा -** **ते ते स्वस्वमतिस्वभावमनुसृत्यैवेष्टदेवानुगाः**
**नानासाधनसंयुताः किल तथा देवाश्च तेऽपीश्वराः ।**
**तेषामीश्वर एव सर्वजगतामन्तर्नियन्ता स्वयं**
**विष्णुर्भाति फलप्रदोऽत्र सततं कर्मानुसारेण च ।। ५ ।।**

**[प्रतिपदार्थः]**

**विवरणम् -** सत्वरजस्तमःप्रकृतिकाः ते ते पुमांसः स्वस्वज्ञानानुकूलप्रकारभेदैः तांस्तान् देवताविशेषान् ईश्वरत्वेन मत्वा तत्तद्देवताचरणसमाश्रयणप्रवणाः भवन्तिः, तैस्तैराश्रिताः तास्ता देवताः फलप्रदानांशे सामर्थ्यविकला न भवन्ति ; (कुत इति चेत्) ते ते समाश्रयितारः स्वस्वभाग्यानुसारेण यथा फलं लभेरन्, तथा सर्वस्वामी भगवान् (तत्तद्देवतान्तर्यामी) तिष्ठति ।।

**[सारार्थः]**

अग्नीन्द्रादिदेवताशरीरकतया तत्तद्देवतोद्देश्यककर्मसमाराध्यः, तत्तत्कर्मफलप्रदाता च स एव परमः पुमानित्युक्तं भवति ।।

**[गाथावतरणं इतरदेवताराधनमपि भगवदाराधनमेवेति वक्तुमित्युक्तिः]**

भगवान् गीतायां 'देवान् भावयतानेन ते देवा भावयन्तु वः । इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः' । (३-११,२२) इत्याह । अयमर्थः - 'देवताराधनभूतेन कर्मणा मच्छरीरभूतान् मदात्मकान् देवान् आराधयत ; यज्ञेनाराधितास्ते देवा मदात्मकाः

स्वाराधनापेक्षितान्नपानादिकैः युष्मान् पुष्णन्तु । यज्ञेनाराधिता मदात्मकास्ते देवा इष्टान् भोगान् (उत्तरोत्तराराधनापेक्षितान् सर्वान् भोगान्) वो दास्यन्ती' ति । एवं नाम तृतीयाध्याये गूढमुक्तवान् असावेव उपरि नवमाध्याये 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।। अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (भ.गी.९-२३,२४) । इति सुस्पष्टमाचष्ट । 'मच्छरीरभूतानाम् इतरदेवतानाम् आराधनं तदन्तर्यामिभूत मदाराधनरूपमेव भवति । सर्वेषां यज्ञानां भोक्ता अहमेव - तैस्तैर्यज्ञैः आराधितोऽहमेव भवामि । प्रभुरेव चाहम् - तत्र तत्र फलप्रदाता चाहमेव' इत्यर्थः । एवंविधां भगवदुक्तिं हृदये कृत्वा गाथामिमाम् अन्वग्रहीत् मुनिवर इति ध्येयम् ।।

**[अपेक्षितफलप्रदातृत्वं परमपुरुषस्यैवेति प्रतिपादनम्]**

अधस्तनगाथया सर्वेषां स्वरूपं भगवदायत्तमिति कथितम् । अनया गाथया सर्वेषां स्थितिश्च भगवदधीनेति कथ्यते । स्थितिर्नाम रक्षणम् । तच्चापेक्षितफलप्रदातृत्वरूपम् । एवंविधं रक्षणं परमपुरुषादन्यत्र न संभवितुमर्हति । यदाहुर्महर्षयः - 'न संपदां समाहारे विपदां विनिवर्तने । समर्थो दृश्यते कश्चित्तं विना पुरुषोत्तमम्' ।। (पौ.सं.३-३४) 'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' । (वि.पु.१-२२-२१) इति । उपनिषच्च 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः' ।। (तै.ना.उ.१-६) इति । सैषा विव्रियते मनाक् । इष्टम् - यागादिलक्षणं श्रौतं कर्म ; पूर्तम् - खातादिलक्षणं स्मार्तं कर्म ; विश्वम् - अग्नीन्द्रादिदेवताकं कालत्रयवर्ति सर्वं बहुविधं कर्म ; विभर्ति - स्वीकरोति । सर्वकर्मसमाराध्यः स्वयं भवतीत्यर्थः । स क इति चेत्, भुवनस्य नाभिः - सर्वजगदीश्वरो यस्स एव इत्यर्थः । अथ तदेवाग्निरित्यादिकमुत्तरार्धम् एतत्समर्थनपरम् । ननु अग्नीन्द्रादिदेवतोद्देश्यककर्मसमाराध्यत्वम् अग्नीन्द्रादीनामेव युक्तम् ; कथं नु तत् परमात्मन इत्याशङ्क्य स एव अग्न्यादिशरीरकतया तत्तच्छब्दवाच्य इत्याह 'तदेवाग्नि' रित्यादिना ।।

**[परमपुरुषानुप्रवेशकृतं इतरदेवतानां फलप्रदातृत्वं इति कथनम्]**

इदमादिश्रुतिस्मृतिप्रथितोऽर्थः गाथयाऽनया सुस्पष्टं प्रतिपाद्यते । लोके तावदधिकारिण उच्चावचाः । प्रायः शुद्धसात्त्विका मृग्याः । राजसास्तामसा रजस्तमोमिश्रसत्ववन्तश्च बहुलाः । ते खलु स्वस्वरुच्यानुगुण्येन 'ममेयं देवता उद्देश्या, ममैषा देवता उद्देश्या' इत्याकलय्य,

तास्ता देवताः संश्रित्य आराधयन्ति । अथ तासां देवतानाम् उत्तमोत्तमफलदानशक्तिविरहेऽपि आश्रितसामान्याधिकारिकाङ्क्षितफलप्रदाने शक्तिः अक्षता । सा च शक्तिः परमपुरुषानुप्रवेशकृता इति तात्पर्यम् ।।

**[सङ्कल्पविशेषविशिष्टा व्याप्तिरत्र उक्ता]**

गाथा सैषा वाक्यत्रयात्मिका । ते तेऽधिकारिणः तास्ता देवता यजन्तीति प्रथमवाक्यम् । तेभ्यः ता देवताः फलप्रदानशक्ता भवन्तीति द्वितीयं वाक्यम् । तादृशफल-प्रदानौपयिकतया भगवांस्तासु देवतासु अन्तरात्मभावमधितिष्ठतीति चरमं वाक्यम् । ननु भगवान् सर्वदा सर्वत्रैव ह्यन्तरात्मा सन्नवतिष्ठते । अत्र विशिष्य कथनं किमर्थमिति चेत् ; सर्वदा सर्वत्र सती व्याप्तिः साधारणी ; अत्र तु 'समाश्रितजनकाङ्क्षितफलप्रदानं कारयेयम्' इति संकल्पविशिष्टा व्याप्तिरिति विशेषो वेदितव्यः । 'विष्णुरात्मा भगवतो भवस्यामिततेजसः' (महा.भा.क.प.३५-५१) इत्यत्रेव । यदि भगवान् देवतान्तरेषु अन्तरात्मा सन् फलं प्रददाति, तर्हि तद्देवताद्वारैव मोक्षमपि प्रदातुं प्रभवति खलु ? इति न मन्तव्यम् । तदनुकूलसंकल्पं तत्र न करोति स इति शास्त्रहृदयम् ।।

**[चरणसमाश्रयणवाक्प्रयोगः श्रीवैष्णवव्यपदेशः]**

अत्र द्वितीयपादे 'तत्तद्देवताचरणसमाश्रयणप्रवणा भवन्ति' इति यदुक्तम्, तत्रामुं विचारम् आचार्याः कुर्वन्ति - चरणसमाश्रयणमिति व्यवहारस्तावत् केवलं श्रीमति नारायणे ; 'श्रीमन्नारायणचरणौ शरणं प्रपद्ये' इति हि मन्त्ररत्नशरीरावतारः । देवतान्तराणि तु चरणसमाश्रयणं नैव कामयन्ते, तेन न तृप्यन्ति च । दुराराधदेवतास्ताः प्रजापशुहिंसाभिरेव ह्याराध्यन्ते । तत्कथमिह चरणसमाश्रयणवाक्प्रयोगः इति । समादधते चैवम् - नैतन्न जानाति शठकोपमुनिः ; 'तिरुवाशिरिय' नाम्नि द्वितीयप्रबन्धे षष्ठगाथायां कण्ठरवेण कथयति च देवतान्तरदुराराधत्वम् । अथापि चरणसमाश्रयणमात्रेण स्वाराधे भगवति लक्ष्मीनाथे स्वकीयप्रावण्यदार्ढ्यबलेन स्वगोष्ठीप्रसिद्धिमनुसृत्य अवशात् इदमुक्तवानिति । श्रीगोदाव्रतप्रबन्धे (तिरुप्पावै) चतुर्दश्यां गाथायां 'तङ्गळ् तिरुक्कोयिल्' इति यदुक्तं तदिह दृष्टान्ततया ध्येयम् । तत्र तावत् परमैकान्तिनाम् उत्तमाश्रमिणां चर्या निदर्श्यत इत्येको निर्वाहः । केवलं काषायवाससां शैवद्विजानां चर्या निदर्श्यत इत्यपरो निर्वाहः ; द्वितीये निर्वाहे 'तिरुक्कोयिल्' इति व्यवहृतः तेषां संप्रदाये विरहेऽपि स्वसंप्रदायवासनया तथा प्रोक्तमित्याचार्या उशन्ति । तथैव अत्रापीति ।।

**[इतरदेवतानां स्वयं फलप्रदातृत्वासामर्थ्ये दृष्टान्तः]**

एतद्गाथाव्याख्यानावसाने, 'शास्तृमन्दिरवर्तिगजानां युद्धसामर्थ्ये सति हि देवतान्तराणां स्वतः फलदानसामर्थ्यसंभवः' इत्यर्थकद्राविडसूक्तिरस्ति । अयं भावः - शास्तृमन्दिरं नामशास्तेति प्रसिद्धस्य देवतान्तरस्यालयः, तत्र द्वारे कुलालनिर्मिता महत्तरा गजाः तुरगाश्च स्थाप्यन्ते प्रतिदेशम् । तेषां कृत्रिमजन्तूनां केवलं दर्शनीयता, न तु युद्धादिरूपकार्योपयोगितेति सर्वे जानन्ति । यदि प्राणविधुराणां तेषां युद्धसामर्थ्यं स्यात्, तर्हि भगवदनुप्रवेशशून्यानां देवतान्तराणामपि फलप्रदानशक्तिः स्यादिति ।।

**[प्रतिपदार्थ]**

**हिन्दी** - (सत्त्व, रज और तम प्रकृतिवाले) वे वे लोग, अपने अपने ज्ञान के अनुरूप प्रकारों से, उन उन देवों को स्वामी मानकर (उन उन के) पादों का आश्रयण करते हैं, इस प्रकार उन से सेवित वे देव भी भक्तों से अपेक्षित फल देने में सामर्थ्यरहित न होते हैं क्योंकि पूजा करनेवाले उन उन के, अपने अपने भाग्य के अनुसार, फल प्राप्त करने के लिए सर्वस्वामी भगवान उन उन देवों के अंतर्यामी होकर विराजमान हैं ।।

**[सारार्थ]**

इस गाथा मे यह बताया जाता है कि भगवान अग्नि, इन्द्र इत्यादि अनेक देवों के अंतर्यामी रहकर, उन उन को लक्ष्य कर मानवों से किये जानेवाले पूजन से स्वयं पूजित होकर, उन उन से अपेक्षित फलों के प्रदाता भी होते हैं ।।

**[अन्य देवों की पूजा से भगवान ही पूजित होते हैं]**

गीता में भगवान ने कहा - 'देवान् भावयतानेन ते देवा भावयन्तु वः । ईष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः' ।। (३-११,१२) इत्यादि । इस का यह तात्पर्य है - 'हे मानव ! तुम देवपूजन नामक कर्म से मेरे शरीरभूत और मदात्मक देवताओं की पूजा करो ; उस पूजा से आराधित वे देव उत्तरोत्तर अपने आराधन के लिए अपेक्षित अन्नादि देकर तुम को पोसेंगे' । परंतु इन पद्यों में यह स्पष्ट नहीं बताया गया कि दूसरे देव भगवान के शरीर हैं और उन की पूजा वास्तव में भगवान की ही पूजा मानी जायगी । इस न्यूनता के परिहारार्थ आगे नौवें अध्याय में स्पष्ट कहा गया है कि 'येऽप्यन्यदेवाताभक्ताः यजन्ते

श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ।। अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' ।। (भ.गी.९-२३,२४) इत्यादि। इस का यह तात्पर्य है - 'मेरे शरीरभूत अन्यदेवों की पूजा, वास्तव में, उन के अंतर्यामी मेरी ही पूजा होती है । समस्तयज्ञों का भोक्ता (अर्थात् उन से आराध्य) मैं हूं ; उन का प्रभु (फल देनेवाला) भी मैं हूं' । इस अर्थ को मन में रखकर आळ्वार प्रकृत गाथा गाते हैं ।।

**[सब की स्थिति अर्थात् फल देने की शक्ति भगवदधीन है]**

पूर्व गाथा में सब का स्वरूप भगवदधीन कहा गया ; इस गाथा में सब की स्थिति भगवदधीन कही जाती है । स्थिति का अर्थ है - रक्षण ; यानी उन उन के अपेक्षित फल देना । भगवान को छोडकर दूसरा कोई यह रक्षण नहीं कर सकता । इस विषय में श्रुतिस्मृत्यादि बहुत प्रमाण हैं । तथा हि - 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चंद्रमाः' ।। यह श्रुतिवाक्य है । इस का यह अर्थ है - इष्ट - श्रुतिविहित यागादि कर्म ; पूर्त - स्मृत्युक्त वापी कूपतटाकादि निर्माण कर्म ; विश्वम् - और भी अग्नि वायु इन्द्र इत्यादि देवतापूजन रूपी सभी प्रकार के कर्म ; भुवनस्य नाभिः बिभर्ति - सर्वजगत के स्वामी भगवान उक्त समस्त कर्मों को स्वीकार करते हैं ; अर्थात् वे ही सर्वकर्मसमाराध्य हैं । इस पर शंका हुई कि अग्नींद्रादि देवताओं की पूजा तो उन उन देवताओं को मिलेगी ; यह भगवान को कैसे मिलेगी ? इस का समाधान किया जाता है 'तदेवाग्निः' इत्यादि उत्तरार्ध से । इस का यह अर्थ है कि अग्नि, वायु, सूर्य, चंद्र इत्यादि सभी देव वास्तव में भगवान ही हैं, माने भगवान के शरीर ही हैं । ऋषियों का वचन है - 'न संपदां समाहारे विपदां विनिवर्तने । समर्थो दृश्यते कश्चित्तं विना पुरुषर्षभम्' ।। (पौ.सं.३-३४) इस का यह अर्थ है कि पुरुषोत्तम भगवान को छोडकर दूसरा कोई (भक्तों के) दुःख दूर करने में अथवा अपेक्षित पुरुषार्थ देने में समर्थ नहीं होता । 'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' (वि.पु.१-२२-२१) - सर्वेश्वर भगवान को छोडकर दूसरे में रक्षण करने का सामर्थ्य नहीं रहता, इत्यादि ।।

**[अन्य देवों की पूजा का फल भगवान के विशेष अनुग्रह के कारण मिलता है]**

उक्त अनेक प्रकार के प्रमाणों से स्पष्ट प्रतिपादित अर्थ ही प्रकृत गाथा में बताया जाता है । इस संसार में रहनेवालों का स्वभाव बडा विचित्र होता है । यहां पर अकिंचन व अनन्यगति होकर, भगवान का आश्रय लेकर, केवल उन की ही पूजा करनेवाले

परमसात्विक जन बहुत कम मिलते हैं । क्यों कि सभी लोग प्रायशः राजसी, तामसी, अथवा रजस्तमोमिश्रित अल्प सत्ववाले ही होते हैं । ये तो भगवान तक पहुंचने में अशक्त होकर, अपनी अपनी रुचि के अनुसार दूसरे को ही अपना इष्टदेव मानकर उन की पूजा करते हैं । ऐसे पूजित वे देव स्वयं मोक्ष देने में अशक्त होते हुए भी, भगवान के विशेष अनुग्रह से अपने भक्त के अपेक्षित लौकिक क्षुद्र फल देने में समर्थ होते हैं । यह अर्थ इस गाथा में उपवर्णित है ।।

**[देवों के अन्तर्यामी भगवान विशेष संकल्प पूर्वक उन के द्वारा फल देते हैं]**

प्रकृत गाथा में तीन वाक्य हैं । (१) वे वे लोग अपने अपने इष्ट देव की पूजा करते हैं : (२) वे देव अपने भक्त के अपेक्षित फल देने में समर्थ होते हैं ; और (३) भगवान उन के अंतर्यामी होकर उन को उक्त फल देने की शक्ति का प्रदान करते हैं । इस पर एक प्रश्न उठता है कि उपनिषदादि से कथित प्रकार, जब भगवान समस्त चेतनों के अंतर्यामी होकर उन के सभी व्यापारों के प्रेरक होते हैं, फिर यह कहने की आवश्यकता क्या है कि वे देवता के अंतर्यामी होकर उस को भक्तापेक्षित फल देने की शक्ति देते हैं ? इस का यह समाधान है कि भगवान की साधारण व्याप्ति का प्रयोजन तो उस उस काम की सत्तामात्र है । उस से कोई विशेष कार्य सिद्ध न होगा । अतः यहां पर, 'मैं इस देवता का अंतर्यामी होकर, इस से भक्तापेक्षित अमुक अमुक फल दिलाऊँगा' इत्यादि विशेष संकल्पपूर्वक एकैक देवता में प्रवेश करके भगवान उन से जो लोकरक्षण कार्य कराते हैं, उस का कीर्तन अलग किया जा रहा है । जैसे एकैक विशेष जगद्रक्षण करने के लिए भगवान ने शिव, ककुत्स्थ, व्यास, पृथु इत्यादियों में अंतः प्रवेश किया था । त्रिपुरसंहारप्रसंग में वे शिव के विशेषतः अंतर्यामी हुए थे - 'विष्णुरात्मा भगवतो भवस्यामिततेजसः' (महा.भा.क.प.३५-३१) - इत्यादि ।।

**[चरणसमाश्रयण' पदप्रयोग वैष्णवों की परिभाषा है]**

दूसरे पादमें, 'उन उन देवताओं के पादों का आश्रयण' करने की बात जो की गयी है, वह विचारार्ह है । पादाश्रयण तो भगवान के विषय में ही किया जानेवाला काम है ; देवतांतर के विषय में नहीं । क्यों कि वे पादाश्रयण चाहते भी नहीं, उस से तृप्त होते भी नहीं, वे पशुवधादि को ही चाहनेवाले दुराराध हैं । स्वयं श्रीशठकोपसूरि ने ही तिरुवाशिरियम् नामक अपने प्रबंध में (गाथा - ६) इस का वर्णन किया है । अतः यहां पर समझना चाहिए

कि आळ्वार अपनी गोष्ठी में प्रसिद्ध परिभाषा 'चरणसमाश्रयण' का ही देवतांतर के विषयमें प्रयोग कर रहें हैं । अर्थात् इस शब्द का तात्पर्य यथोचित आराधन ही है, न तु पाद में नत होना । तिरुप्पावै दिव्यप्रबन्ध की चौदहवीं गाथा में प्रयुक्त 'तङ्गळ् तिरुक्कोयिल्' शब्द इस विषय का उदाहरण है । तथा हि - उस पद्य में उपवर्णित काषायधारी, जैसे परमसात्विक परम भागवत संन्यासी हो सकते हैं, वैसे ही राजसी तामसी देवतांतरोपासक नकली संन्यासी भी हो सकते हैं । ये लोग अपने मंदिर को 'तिरुक्कोयिल्' नहीं कहते हैं ; यह तो श्रीवैष्णव आचार्यों की ही परिभाषा है । तथापि आचार्यलोग कहते हैं कि आण्डाळ् अपने से अभ्यस्त परिभाषा से उन मतांतरस्थों के भाव का वर्णन कर रही हैं । यही न्याय प्रकृत स्थल में भी लागू होता है ।।

**[अन्य देवों के फल देने में असमर्थ होने में दृष्टांत]**

इस गाथा के व्याख्यान में हमारे आचार्यों का यह एक विलक्षण वाक्य है - 'शास्ता के मंदिर के बाहर रहनेवाले हाथी घोडा इत्यादि अगर लडने समर्थ होते तो, देवतांतर भी स्वतः फलदेने में समर्थ होते' । यह तात्पर्य है - प्रायः ग्राम के बाहर रहनेवाले शास्ता नामक क्षुद्र देवता के मंदिर के पास मिट्टी से अथवा चूने से बनाये गए बडे बडे गज तुरगादियों के पुतले रखे गये है । जैसे अचेतन होने के कारण ये हाथी और घोडे लडने में अशक्त होते हैं, इसी प्रकार भगवान के अनुप्रवेश के विना देवतांतर भी भक्तापेक्षित फल देने में अशक्त हैं । केनोपनिषत् में उपवर्णित कथा इस विषय का एक सुंदर दृष्टांत है ।।

**निन्रनर् इरुन्दनर् किडन्दनर् तिरिन्दनर्**
**निन्रिलर् इरुन्दिलर् किडन्दिलर् तिरिन्दिलर्**
**एन्रुम् ओरियल्विनर् एन निनैवु अरियवर्**
**एन्रुम् ओरियलूवोडु निन्र वेम् तिडरे ।। ६ ।।**

**(गाथा) -** **तिष्ठन्तोऽप्युपवेशिनोऽपि शयिताः सञ्चारशीलाश्च ते**
**नोत्तिष्ठन्ति च नोपवेशिन इमे सुप्ता न सञ्चारिणः ।**
**एवं नैकविधस्वभावसहितास्सर्वेश्वरो भात्यहो**
**नित्यं चैकविधस्वभाव इति यत्सत्यं प्रमाणैस्स्थिरैः ।। ६ ।।**

**[प्रतिपदार्थ]**

तिष्ठन्तः, आसीनाः, शयानाः, संचरन्तश्च, स्थित्युपवेशनशयनसंचरणविधुराश्च, अस्मदीयो दृढप्रमाणसिद्धो भगवानेव ; (स पुनः कीदृश इति चेत् ;) सततमेकप्रकारप्रकृतिक इति चिन्तनानर्हः ; सदैकस्वभावतया स्थितश्च ।।

**[सारार्थः]**

चेतनाचेतनात्मकसमस्तवस्तूनां समस्तप्रवृत्तिनिवृत्तयश्च परमपुरुषाधीना एवेत्युक्तं भवति ।।

**[सर्वव्यापारतादधीन्यं कथ्यते इति निरूपणम्]**

गाथायामस्यां प्रथमपादे स्थित्युपवेशनशयनसंचरणरूपकार्येषु प्रवृत्ताश्चेतना उक्ताः ; द्वितीयपादे तु तादृशप्रवृत्तितो निवृत्ताश्चेतना उक्ताः ; एते सर्वेऽपि भगवदधीना इति गाथावसानस्थितेन एम् तिडरे इत्यनेन सिध्यति । तदिदं सिद्धसाधनं भवति । कथमिति चेत् ; अधस्ताच्चतुर्थगाथायां नामवनिवनुवन् इत्यनेन सर्वमपि धर्मिजातं संगृहीतमभूत् ; सर्वस्यापि तस्य भगवदधीनता च तत्रैवोक्ता । अधुनाऽस्यां गाथायां प्रतिपाद्यमानाः तिष्ठन्तः आसीना इत्यादयः, अतिष्ठन्तः अनासीनाः इत्यादयश्च तस्यामेव चतुर्थगाथायामुक्तप्राया एव भवन्ति । अधुना किमपूर्वमभिधीयत इति द्रष्टव्यम् । एवं तावद्ग्रहीतव्यम् । यद्यपि गाथायामस्यां प्रवृत्तिशालिनो निवृत्तिशालिनश्चैव स्पष्टमुक्ताः ; तथापि तत्तद्व्यक्तिगताः प्रवृत्तयो निवृत्तयश्चात्र विवक्षिताः । तत्तद्वस्तुगतप्रवृत्तिनिवृत्तीनामपि तादधीन्यमुच्यतेऽनया गाथया । एतत्तु चतुर्थगाथया नैवोक्तमिति अपूर्वकथनमेव, न सिद्धसाधनम् । वेदे यागसाधनभूतायाः सोमलतायाः क्रयणं गवा कर्तव्यमिति 'गवा ते क्रीणानीत्येव ब्रूयात् गो अर्घमेव सोमं करोति' इति वाक्यतो विहितम् । अन्यत्र तु 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' (तै.सं.६-१-६) इत्याम्नातम् । अत्र तावदारुण्यगुणविशिष्टया गवा सोमक्रयणमुच्यते; तथा च आरुण्यविशिष्टबोधने सत्यपि आरुण्यमात्रे तात्पर्यं ग्राह्यम् । कुतः ? सोमक्रयणकरणभूतविशेष्यांशस्य (गोः) पूर्वमेव प्राप्तत्वात्, प्राप्तस्य पुनः प्रापणानवसरात्, अप्राप्तपूर्वे आरुण्यमात्रे इह विधितात्पर्यमिति गृह्यते । एवं 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती' ति अभिचारकर्मणि श्रूयत इदम् । ऋत्विजां सोष्णीषाणां संचरणस्य अन्यतः प्राप्तत्वात्, प्राप्ते तस्मिन्नंशे नात्र विधिः प्रवर्तते । अप्राप्ते (उष्णीष) लौहित्यमात्रे अत्र विधिगोचरता स्वीक्रियते । एवमेव प्रवृत्तानां निवृत्तानां च पुंसां भगवदधीनतायाः

प्रागेव प्राप्तत्वात्, अत्र प्रवृत्तिनिवृत्तितादधीन्यमात्रं तात्पर्यविषयभूतमिति ग्रहीतव्यम् । अत एव षट्सहस्रिकासूक्तिः - 'चेतनाचेतनात्मकसमस्तवस्तूनां समस्तप्रवृत्तिनिवृत्तयोऽपि परमपुरुषसंकल्पाधीना इत्युच्यते' इति । चिदचित्स्वरूपतादधीन्यस्य प्रागेवोक्तत्वात्, चिन्तितनिमिषितादिलक्षणसर्वव्यापारतादधीन्यमिह कथितं भवतीति संक्षेपः ।।

**[निवृत्तिरपि भगवत्सङ्कल्पाधीना एव]**

अत्र केषाञ्चिदाशङ्का समजनि - प्रवृत्तिस्तदधीना काममस्तु । किं निवृत्तिरपि तदधीनेत्यभ्युपगन्तव्यमिति । अत्र गोविन्दभट्टारक एवमूचे - 'स्वर्गात्पतन्तं त्रिशङ्कुमुद्दिश्य शक्तिमान् कश्चन मुनिरुवाच तत्रैवावतिष्ठस्वेति ; सद्य एव तथा स्थातव्यमभूत्तस्य । एवमेव निवृत्तावपि भगवत्संकल्पसापेक्षता' इति ।।

**[सततमेकविधस्वभाव इत्यस्य सामञ्जस्यम्]**

अथ तृतीयपादे - 'सततमेकविधस्वभाव इति परिच्छेत्तुमशक्य' इत्युक्त्वा, चतुर्थपादे सततमेकविधेन स्वभावेन समन्वित इति प्रोक्तम् । तदिदं व्याहतमेव ननु ? इति चेत्, नैव व्याहतम् । अत्र द्वेधा समाधेयम् । सततमेकविधस्वभाव इति परिच्छेत्तुमशक्यत्वरूपो योऽयं स्वभावो वर्तते, सोऽयं सततमेकविध एवेति चतुर्थपादतात्पर्यमिति समाधानप्रकार एकः । अथवा, 'समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम्' (व.स्त.१०१) इतिवत् अभक्तानामपरिच्छेद्यस्वभाव इति सुवचम् । 'नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये' (स्तो.र.२१) इत्यत्र, 'यद्वा स्वप्रसादभाजां गोपगोपिकादीनामपि वाङ्मनसयोरेकविषयभूतायेत्यर्थः' इति स्तोत्रभाष्योक्तमिह स्मर्तव्यम् ।।

**[भगवान् प्रमाणसिद्धः]**

गाथान्ते 'एम् तिडर्' इत्यनेन दृढप्रमाणसिद्धोऽस्मत्प्रभुरित्युच्यते । नित्यनिरवद्यापौरुषेयवेदप्रमाणं हि भगवतस्साधकम् ; तच्च सर्वथा सुदृढमिति ज्ञेयम् । अत्र प्रोक्तं सामानाधिकरण्यं वेदसिद्धमित्यपि सूचितं भवति ।।

**[श्रीशठकोपमुनीन्द्रसूक्तिवैखरी]**

भगवान् रामानुजः स्वकीयेषु श्रीभाष्यादिदिव्यग्रन्थरत्नेषु श्रीशठकोप-मुनीन्द्रदिव्यसूक्तिलब्धान् स्वादिष्ठान् भूयसोऽर्थविशेषान् न्यवीविशदिति पूर्वाचार्याः

प्रतिजानते । तस्याः प्रतिज्ञाया विपुलमुपपादनं 'द्रमिडोपनिषत्प्रभावसर्वस्व' नाम्नि अस्मदीये प्रबन्धे विशदम् । तत्रायमन्यतमो विषयः - अधस्तात् चतुर्थ पञ्चमषष्ठगाथाभिः सकलचेतनानां स्वरूपम्, स्थितिः (रक्षणम्), प्रवृत्तिभेदाश्च भगवदधीना इति तावत्प्रतिपादितम् । इदमेवानुसृत्य भगवान् रामानुजः, 'स्वाधीनत्रिविधचेतनाचेतन-स्वरूपस्थितिप्रवृत्तिभेदम्' इति श्रीसूक्तिं भगवद्विशेषणरूपां तत्रतत्र प्रयुङ्क्ते । (श्रीरङ्गगद्यश्रीवैकुण्ठगद्ययोरुपक्रमे सूक्तिरेषा दृश्यताम् ।) गाथात्रयेणापि क्रमेण योऽर्थस्सिद्धः स एव हि सूक्त्यामत्र निबद्धः । ननु अयमर्थ उपनिषदादिसिद्धश्च स्यादेव खलु । ग्रन्थान्तरेषु नास्त्ययमर्थ इति न हि प्रतिज्ञातुं शक्यम् । सहस्रगीतित एव भगवता रामानुजेन तद्विशेषणमुपनिबद्धमिति कथमिदमुच्यते ? इति चेत् ; उच्यते । नैष विषयः उपनिषदादिग्रन्थान्तरेषु एवं क्रमेण निबद्धः । चेतनाचेतनानां स्वरूपं भगवदधीनमिति क्वचित्कोणे कथितं स्यात् । तेषां स्थितिश्च तदधीनेति कोणान्तरे कथितं स्यात् । प्रवृत्तिनिवृत्तिविषयेऽपि तथा । त्रितयस्यापि क्रमेण चारुफक्किकया प्रतिपादनं सहस्रगीत्यामत्रैवेति प्रतिज्ञातुं शक्यम् । उपनिषत्सु प्रवीणा मतान्तरस्था अपि भगवते विशेषणानि निर्दिशन्ति खलु । तेष्वेवंविधं, एतत्समानाकारकं वा विशेषणं दृश्यते वेति विमृश्यताम् । कथं दृश्येत ? नैव दृश्येत । श्रीशठकोपमुनीन्द्रदिव्यसूक्तिशरणानामेव सैषा वैखरी संपद्यत इति सर्वं समञ्जसम् ।।

**[प्रतिपदार्थ]**

**हिन्दी** - खडे रहनेवाले, बैठे रहनेवाले, सोनेवाले और चलनेवाले, (तथा पूर्वोक्त) खडे रहना, बैठे रहना, सोना, चलना इन से विरहित रहनेवाले (ये सभी) हमारे दृढप्रमाणसिद्ध भगवान ही हैं ; '(वे) हमेशा एक प्रकार के हैं' - ऐसी चिंता करने के अशक्य हैं ; और वे एक प्रकारवाले होते भी हैं ।।

**[सारार्थ]**

समस्त चेतनाचेतनों के सकलविध प्रवृत्ति निवृत्तिरूप व्यापारों को भगवदधीन बताना इस गाथा का लक्ष्य है ।।

**[सब व्यापार भगवदधीन हैं]**

गाथा के पहले पाद में खडे रहना, बैठे रहना इत्यादि प्रवृत्तिवाले चेतन कहे गये ; दूसरे पाद में इन प्रवृत्तियों से विरहित चेतन कहे गये ; और गाथा के अंत में

रहनेवाले एम् तिडरे शब्द से बताया गया कि ये सब भगवान ही हैं ; अर्थात् भगवदधीन बताये गये । यहां पर ऐसा एक आक्षेप उठता है कि 'नामवन्' इत्यादि चौथी गाथा की टीका में यह अर्थ बताया गया कि संसारांतर्वर्ति चेतनाचेतन रूप समस्त पदार्थ भगवदधीन हैं ; फिर यहां पर चेतनों कों भगवदधीन बताना पुनरुक्ति होगी । अतः इस दोष का अवकाश न देते हुए प्रकृत गाथा का अर्थ बताना चाहिए । वह ऐसा है - प्रवृत्तिमान एवं निवृत्तिमान को भगवदधीन कहने का यह तात्पर्य है कि उन की प्रवृत्ति व निवृत्ति भगवदधीन हैं । यह अर्थ तो चौथी गाथा में अनुक्त था; और अत एव अपूर्व हुआ । पूर्वमीमांसा शास्त्र का अरुणाधिकरणन्याय यहां पर लागू होता है । अत एव 'षट्-सहस्रिका' टीका में लिखा गया कि इस गाथा में 'चेतनाचेतन रूप समस्त पदार्थो की सभी प्रवृत्ति और निवृत्तियां भगवदधीन बतायी जाती हैं । 'यहां पर किसी को यह शंका हो सकती है कि' प्रवृत्ति को भगवदधीन बताना तो ठीक है ; निवृत्ति को, जो कि प्रवृत्ति छोडना ही है, भगवदधींन कहने की आवश्यकता अथवा औचित्य क्या है' ? 'एम्बार्' नाम से सुप्रसिद्ध महान आचार्य इसका यह प्रत्युत्तर देते हैं - सशरीर स्वर्ग पहुंचकर, फिर इंद्र से लौटाये जाने पर, वहां से नीचे गिरते हुए त्रिशंकु को देखकर जब विश्वामित्र महर्षि ने 'ठहरो' कहा, तभी वह आकाश में रुक गया । त्रिशंकु तो स्वयं रुकने में असमर्थ था । इस से स्पष्ट होता है कि प्रवृत्ति की तरह निवृत्ति भी पराधीन हो सकती है ।।

**['सतत-एकविधस्वभाव' - कहने का सामंजस्य]**

तीसरे और चौथे पादों में परस्पर विरुद्ध जैसे अर्थो का वर्णन किया जाता है । भगवान को हमेशा एकविधस्वभाव विरहित कहने के बाद सतत-एकविधस्वभाव जानने योग्य कहना विचित्र-सा प्रतीत होगा । इस का यह तात्पर्य है - भगवान का यह जो स्वभाव है कि वे हमेशा एक विध स्वभावत्वेन जाने नहीं जा सकते, इस से वे हमेशा युक्त ही रहते हैं; अर्थात यह उन का स्वभाव कभी बदलता नहीं । अथवा, 'नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये' (स्तोत्ररत्न-२१), 'समाहितैस्साधु सनन्दनादिभिः सुदुर्लभं भक्तजनैरदुर्लभम्' (वरदराजस्तव - १०१) इत्याद्युक्तप्रकार, स्वप्रयत्न पर भरोसा रखनेवाले सनकादि बडे बडे योगी भी यह अर्थ जान नहीं सकते कि भगवान अमुक स्वभाव के हैं इत्यादि ; परंतु उन की ही विशेष कृपा के पात्र परमभक्तलोग ठीक ठीक उन का स्वभाव जान सकते हैं ।।

### [भगवान प्रमाणसिद्ध हैं]

गाथा के अंत में निबद्ध 'एम् तिडरे' शब्द का यह अर्थ है कि भगवान दृढप्रमाणसिद्ध हैं । इस का यह तात्पर्य है कि हम से अंगीकृत भगवान सुदृढ माने अपौरुषेय और अत एव नित्य-निर्दोष वेदरूप प्रमाण से सिद्ध हैं ; अतः उन के प्रति दुर्वादियों से किये जानेवाले सभी आक्षेप स्वयं दुर्बल होने के कारण बेकार हो जाते हैं । इस से यह भी सूचित होता है कि अब दो तीन गाथाओं से प्रतिपादित सामानाधिकरण्य (अर्थात् समस्त पदार्थों को भगवान ही कहना) भी वेदसिद्ध है ।।

### [श्रीसहस्रगीति की देन]

हमारे पूर्वाचार्यों का यह सिद्धांत है कि भगवान श्री रामानुज स्वामीजी अपने श्रीभाष्यादिग्रंथों में सहस्रगीति प्रभृति दिव्यप्रबंधों से चुने हुए अनेक रहस्य अर्थों का वर्णन करते हैं । इस अर्थ का पूरा विवरण श्रीकांची प्र. अण्णंगराचार्य स्वामीजी से अनुगृहीत 'द्रविडोपनिषत्प्रभावसर्वस्व' नामक ग्रंथ में दिया गया है । उस में यह भी एक विषय बताया गया है कि श्रीरंगगद्य व श्रीवैकुंठगद्य के प्रारंभ में, एवं अन्यत्र भी क्वचित्, भगवान के लिए प्रयुक्त विशेषण 'स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं' सहस्रगीति की प्रसक्त तीन (चौथी, पांचवीं व छठी) गाथाओं के ही अनुसार है । अर्थात् उक्त तीन गाथाओं में आळ्वार समस्त चेतनाचेतनों के स्वरूप, स्थिति (रक्षण) एवं प्रवृत्ति निवृत्तियों को भगवदधीन बताते हैं । इन तीनों अर्थों को मिलाकर ही श्रीरामानुजाचार्य स्वामीजी ने भगवान को उक्त लंबा विशेषण लगाया । इस पर कोई सहसा पूछ सकता है कि ये सभी अर्थ 'एम् तिडरे' शब्द की टीका में प्रदर्शित प्रकार उपनिषदों से भी उपदिष्ट हैं ही ; फिर हो सकता है कि श्रीस्वामीजी ने उपनिषदों के आधार से ही उक्त विशेषण बनाया हो ; अतः यह कैसे कहा जा सकता है कि इस में सहस्रगीति का ही हाथ है ? इस का समाधान यही है कि यद्यपि ये सभी अर्थ जरूर ही उपनिषदों से लभ्य हैं ; तथापि उपनिषद्रूपी उस महान वन के एकैक कोने में एकैक अर्थ बिखरा हुआ है ; अर्थात उपनिषदों के किसी एक भाग में सब का स्वरूप भगवदधीन कहा गया है ; अन्य भाग में स्थिति की बात की गयी है और किसी अन्य भाग में प्रवृत्ति का विवरण किया गया है ; एक ही स्थल में तीनों का वर्णन नहीं किया गया है । सब को मिला कर एक स्थल में वर्णन श्रीसहस्रगीति की ही देन है । अतः इस के अध्ययन से ही

श्रीरामानुजाचार्य स्वामीजी ने भी उन तीनों अर्थों को मिलाकर भगवान का एक सुंदर विशेषण बनाया । अत एव सहस्रगीति से अपरिचित दूसरे भाष्यकारों के ग्रंथों में ऐसा विशेषण नहीं मिलता ।।

**तिडविशुम्बु एरि वळि नीर् निल मिवैमिशै**
**पडर् पोरुळ् मुळुवदुमाय् अवैयवै तोरुम्**
**उडन्मिशै युयिरेनक् करन्देङ्गुम् परन्दुळन्**
**शुडर् मिहु शुरुदियुळ् इवै युण्ड शुरने ।। ७ ।।**

**(गाथा) - आकाशाग्न्यनिलोदकावनितलेष्वेतेषु विस्तारिणां**
**वस्तूनां च दृढस्वरूपमखिलं प्राप्यापि चान्तस्स्थितः ।**
**आत्मा तेषु च वस्तुषु स्वयमयं गुप्तोऽभितस्सर्वग-**
**स्सर्वाण्यत्ति च देव एव हि परं ज्योतिश्श्रुतिश्लाघितः ।। ७ ।।**

**[प्रतिपदार्थ]**

**विवरणम् -** दृढ आकाशः, अग्निः, वायुः, आपः, पृथिवी इत्येतत्पञ्चभूताश्रितभौतिक-पदार्थास्सर्वेऽपि स्वयं भूत्वा, तेषु तेषु पदार्थेषु शरीरान्तर्गतजीवन्यायेन तत्तदविदिततया सर्वत्रान्तःप्रविश्य बहिश्च व्याप्य स्थितः, एतत्सर्वं प्रलये संहृतवांश्च देवः (अपौरुषेयत्वलक्षण) तेजसा अतिशयितायां श्रुत्यां प्रतिपाद्यतया वर्तते ।।

**[जगदीश्वरयोः सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनम्]**

सकलभूतभौतिकपदार्थेषु अन्तःप्रविश्य नियन्तृतया सर्वशरीरकः सर्वसंहर्ता च देवः अपौरुषेयश्रुतितात्पर्यगोचर इत्युक्तं भवति । अधस्तनगाथासु सामानाधिकरण्येनैव निर्देशः कृतः । तच्च सामानाधिकरण्यं जगदीश्वरयोश्शरीरशरीरिभावप्रयुक्तमिति गाथयाऽनया प्रतिपाद्यते । अस्मदीयं शरीरं यथा ह्यात्मा नियन्तृतया व्याप्यावतिष्टते, तथा भगवानपि पृथिव्यादिभूतपञ्चकं तदारब्धसमस्तवस्तुजातं च नियन्तृतया व्याप्यावतिष्ठते । शरीरस्यात्मनश्च वस्तुतो भेदसत्त्वेऽपि यथा 'श्यामो देवदत्तो बुद्धिमान्, उन्नतो यज्ञदत्तो विद्वान्' इत्यादिव्यवहारेषु शरीरात्मनोः अभेदप्रतिसन्धानं, तथैव शरीरभूतयोश्चेतनाचेतनयोः शरीरिणः परमात्मनश्च वस्तुतो भेदसत्त्वेऽपि 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' (वि.पु.२-१२-३८) इत्यादिषु अभेदप्रतिसंधानमपि शरीरात्मभावनिबन्धनमेवेति प्रतिपादनं गाथाया अस्याः परमतात्पर्यविषयभूतम् ।।

**[दृढशब्दान्वयः]**

गाथोपक्रमे दृढार्थकं यद्विशेषणपदमस्ति तत् अनुपदवर्ति नभःपदमात्रे अन्वेतीति स्वीकारे, वाय्वादिभूतान्तरापेक्षया आकाशस्य चिरकालस्थायित्वात् दार्ढ्यमुक्तमिति मन्तव्यम् । उपरितनेषु सर्वेष्वपि पदेषु तदन्वयस्वीकारे, अबाधितप्रमाणसिद्धस्वरूपदार्ढ्यमुक्तमिति विभावनीयम् । चत्वार्येव भूतानीति आकाशवर्जं भूतचतुष्टयस्वीकर्तृमतनिरासाय आकाशे दार्ढ्यं विशेषितमित्यप्याहुः आचार्याः ।।

**[चिदचिच्च परमपुरुषस्य शरीरम्]**

उडल् मिशै उयिरेन - शरीरस्य आत्मा धारको नियामकश्शेषी च यथा वर्तते, तथा चिदचितोर्धारको नियामकश्शेषी च परमपुरुष इति यावत् । 'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरम्' इति भगवद्भाष्यकृदनुगृहीतं शरीरलक्षणं कृत्स्नप्रपञ्चे समन्वेतीति द्रष्टव्यम् । करन्दु - 'यः पृथिव्यां तिष्टन्' इत्याद्यौपनिषदवाक्यसमुदाये, 'यं पृथिवी न वेद यमापो न विदुः...... यमात्मा न वेद' (बृ.उ.५-७-७) इत्याम्नातमिहानुसंधेयम् । व्याप्यपदार्थैरविदितस्सन् अन्तर्बहिश्च सर्वं व्याप्य वर्तते इत्युक्तं भवति ।।

**[वेदाः प्रमाणम्]**

शुडर्मिहु शुरुदियुळ् उळन् - अर्थापत्त्यनुमानादिभिः प्रमाणान्तरैः परं ब्रह्म साधयन्तः परे 'तर्काप्रतिष्ठानात्' (ब्र.सू.२-१-११) इत्यादिब्रह्मसूत्रनिरस्ता भवन्ति । प्रमाणमूर्धन्य-श्रुत्येकसमधिगम्यं परं ब्रह्मेति अभ्युपगच्छतां परमवैदिकानाम् अग्रेसरोऽयं मुनिवर इति ध्येयम् । केवलं श्रुत्यामित्युक्तिः अपौरुषेयत्वनित्यत्वनिरवद्यत्वविच्छेदरहित-परम्पराप्राप्तत्वादिविशेषद्योतनार्थमिति भाव्यम् । अत एव हि वेदस्य प्रमाणमूर्धन्यता ।।

**[संहर्तापीश्वरः]**

इवैयुण्ड शुरने - सृष्टिस्थित्यः भगवदधीनत्वं पुरस्तादेवोक्तम् ; संहृतिरपि तदधीनेति अत्रोक्तं वेदितव्यम् ।।

**[प्रतिपदार्थ]**

**हिन्दी** - दृढ आकाश, अग्नि, वायु, जल, पृथिवी (नामक पंचभूतों) पर आश्रित समस्त (भौतिक) पदार्थ रूपी होकर उन उन पदार्थो के शरीर में रहनेवाले जीव की तरह (उन उन

के अगोचरतया) सर्वत्र अंदर प्रवेश कर (भगवान) बाहर और भीतर व्याप्त हैं ; (प्रलयकाल में) इन सब को निगलनेवाले देव (अपौरुषेयत्वरूप) अत्यधिक प्रकाशविशिष्ट श्रुति में (प्रतिपाद्यतया) विराजमान हैं ।।

**[जगत्-परमात्म संबंध शरीर-जीव संबंध जैसे है]**

यह तात्पर्य है - समस्त भूतों के और भौतिक पदार्थों के अंदर प्रवेश कर उन के नियामक, शरीरी (यानी अंतरात्मा) और प्रलय में संहारक होनेवाले भगवान ओपौरुषेय और अत एव नित्य निर्दोष वेदों से प्रतिपाद्य हैं । पूर्व गाथाओं मे 'भगवान ही चेतन हैं, अचेतन हैं' इत्यादि जो सामानाधिकरण्य बताया गया, उस का तात्पर्य इस गाथा में स्पष्ट किया जा रहा है । तथा हि - जैसे मनुष्य आदि एकैक शरीर में भी एकैक जीव होकर उस का नियंता व मालिक होता हैं, ठीक इसी प्रकार भगवान भी चेतनाचेतनरूपी समस्त पदार्थों के अंतर्यामी होकर उन के नियंता एवं अंदर और बाहर व्यापक भी होते हैं । अतः जैसे शरीर और जीव के बीच में भेद के रहते हुए भी, 'यह लंबा देवदत्त बुद्धिमान है,' 'यह श्याम यज्ञदत्त दयावान है' इत्यादि वाक्यों में हम शरीर को ही आत्मा कहते हैं, इसी प्रकार से चेतनाचेतनरूपी समस्त पदार्थो के नामों से उन के अंतर्यामी भगवान बोले जाते हैं । अतः वेदादिशास्त्रों में तत्र तत्र देखे जानेवाले 'ज्योतींषि विष्णुः भुवनानि विष्णुः' (वि.पु.२-१२-३८) इत्यादि सामानाधिकरण्य का यही तात्पर्य समझने योग्य है कि विष्णु उन सब के अन्तर्यामी हैं ।।

**[दृढ विशेषण का तात्पर्य]**

गाथा के आरंभ में प्रयुक्त विशेषण तिड यानी दृढ आकाशमात्र को लग सकता है ; अथवा पांचों भूतों को लग सकता है । दृढ शब्द का अर्थ पहले पक्ष में चिरकालस्थायी अथवा बहुत समय तक रहनेवाला होता है । इस का यह तात्पर्य है कि सृष्टिकाल में दूसरे भूतों से पूर्व सृष्ट होकर प्रलय में सब के बाद विनाश पानेवाला आकाश उन सब से दीर्घायु है । पांचों भूतों का विशेषण दृढत्व तो दृढप्रमाणसिद्धत्वरूप होता हैं । सर्वशून्यवादी बौद्ध इत्यादि कतिपय मतवाले पंच भूतों की सत्ता का इनकार करते हैं । अब आल्वार कहते हैं कि प्रत्यक्षादि दृढ प्रमाण सिद्ध पंचभूतों का अपलाप करना अनुचित है । एवं कई लोग पृथिव्यप्तेजोवायु नामक चार भूतों को मानकर आकाश मात्र का अपलाप करते हैं । उन से भी यह कहा जाता है कि वेदादि दृढ प्रमाण सिद्ध आकाश की भी सत्ता अन्य भूतों की तरह मान्य होने लायक ही है ।।

**[सब पदार्थों के भगवान शरीरी हैं]**

उडल् मिशै उयिरेन - यह तात्पर्य है - जैसे जीव शरीर के प्रति आत्मा नियामक और शेषी होता है, ठीक इसी प्रकार भगवान भी समस्त पदार्थों के अंतरात्मा, नियामक व शेषी होते हैं । श्रीशठकोपसूरी से विवृत यह शरीरात्मभाव संबंध ही विशिष्टाद्वैत सिद्धांत का मूलभूत तत्व है । 'यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो......यं पृथिवी न वेद......यमापो न विदुः' (बृ.उ.५-७-७) इत्यादि उपनिषद्वाक्यों में यह अर्थ बताया गया है कि पृथिव्यादि समस्त पदार्थों के अंदर और बाहर व्याप्त होकर, उन से अविदित रहकर, उन के नियंत्रण करनेवाले एक महात्मा (यानी भगवान) विराजमान हैं । 'अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.ना.उ.११) इत्यादि में भी यह अर्थ बताया गया है ।।

**[वेद ही प्रमाण हैं]**

शुडर्मिहु शुरुदियुळ् उळन् - कितने ही मतवाले अनुमान, अर्थापत्ति इत्यादि दूसरे प्रमाणों से भगवान को स्थापित करना चाहते हैं । परंतु भगवान बादरायण ने 'तर्काप्रतिष्ठानादपि' (२-१-११) इत्यादि ब्रह्मसूत्रों में स्पष्ट बताया कि तर्क का तो कोई ठिकाना नहीं होता ; अतः उससे भगवान जैसे सर्वथा अतींद्रिय एवं सर्वविलक्षण पदार्थ की स्थापना करना अशक्य है । इस कारण से वैदिक लोग शास्त्र के आधार से ही भगवान को प्रमाणित करना चाहते हैं । 'शास्त्रयोनित्वात्' ( ब्र.सू.१-१-३) इत्यादि ब्रह्मसूत्रों का यह सिद्धांत है । शास्त्र भी वही हो सकता है जो भ्रम, प्रमाद, वंचना आदि वक्ता के दोषों से दूर रहता है । वेद अपौरुषेय होने से (अर्थात् किसी पुरुष से विरचित न होने से) समस्त दोषों से दूर रहता है ; अत एव वह नित्य निर्दोष प्रमाण कहा जाता है । ऐसी उज्ज्वल श्रुति से भगवान प्रतिपादित हैं ; 'वेदैश्च सर्वैरहमेव वेद्यः' (भ.गी.१५-१५) इत्यादि ।।

**[संहारक भी ईश्वर हैं]**

इवै युण्ड शुरने - पूर्व गाथाओं में सृष्टि और स्थिति भगवदधीन बतायी गयी ; इस गाथा में संहार भी भगवदधीन बताया गया ।।

**शुरर् अरिवरुनिलै विण्मुदल् मुळुवदुम्**
**वरन् मुदलाय् अवै मुळुदुण्ड परपरन्**
**पुरमोरु मून्रु एरित्तु अमरर्क्कुम् अरिवियन्दु**
**अरनयन् एन उलहु अळित्तु अमैत्तुळने ।। ८ ।।**

(गाथा) - ब्रह्माद्यैरपि नैव वेद्यमिति यन्मूलं परं सर्वत-
श्चाकाशादिपदार्थजातमखिलं चाश्नन् पराणां परः ।
दग्ध्वा चापि पुरत्रयं सुरगणानुद्बोधयन् यश्शिवो
ब्रह्मा वेति विभाति विश्वमयमेवाश्नन्निहोत्पादयन् ।। ८ ।।

**[प्रतिपदार्थः]**

**विवरणम् -** ब्रह्मादिदेवानामपि दुरवबोधस्थितिकस्य मूलप्रकृत्यादिसमस्तपदार्थवर्गस्य असहायहेतुर्भूत्वा तत्सर्वं प्रलये संहरन् परात्परः (सर्वेश्वरः) रुद्ररूपधरो भूत्वा त्रिपुरसंहारकर्ता, (अन्ततः) लोकसंहारं च कुर्वाणः, ब्रह्मसंज्ञको भूत्वा देवेभ्यो ज्ञानप्रदाता, लोकसृष्टिकर्ता च सन् विराजते ।।

**[स्रष्टा संहर्ता चापीश्वरः]**

कृत्स्नप्रपञ्चानां निरपेक्षकारणभूतो भगवानेव चतुर्मुखान्तर्यामी सन् सृष्ट्यादिनिर्वाहकः ; रुद्रान्तर्यामी सन् त्रिपुरदहनादिनिर्वाहकश्च भवतीति प्रतिपादनमुखेन विधिरुद्रयोः परतत्वशङ्कानिवारणपूर्वकम् अवरत्वं द्रढयति गाथयाऽनया मुनिवरः ।।

**[मूलप्रकृतेस्सर्वेश्वर एव त्रिविधकारणभूतः]**

मूले प्रथमपादे आकाशार्थको विण् शब्दो योऽस्ति, स तावदिह वेदान्तप्रक्रियया मूलप्रकृतिमाचष्ट इति पूर्वाचार्या आशेरते। गार्गिविद्यायां 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ.उ.५-८-६) इत्यात्राकाशशब्दार्थो मूलप्रकृतिरिति 'अक्षरमम्बरान्तधृतेः' (ब्र.सू.१-३-९) इति सूत्रभाष्ये निर्णीतम् । द्राविड्याम् आकाशवाचिनो विण् शब्दस्यापि तादृशार्थकत्वमुपपद्यत इति उभयोरपि वेदान्तयोः ऐककण्ठ्यान्नात्र विप्रतिपत्तिः कार्या । आकाशवाचकत्वमात्राङ्गीकारेऽपि कार्यवाचिशब्दः कारणेऽपि वर्तत इति ग्राह्यम् । मूलप्रकृतेः स्वरूपस्वभावादिकं देवा अपि न जानन्तीति प्रथमपदतात्पर्यम् । तादृशप्रकृतिमूलकानां सर्वेषामपि कार्यवर्गाणां वरिष्ठो हेतुः भगवानेवेति कथ्यते । लोके कार्यसामान्यं प्रति त्रिविधकारणमपेक्षितम् । घटजनने मृत् उपादानकारणं, दण्डचक्रादि सहकारिकारणं, कुलालो निमित्तकारणम् । पटजनने तन्तुः उपादानकारणं, तुरीवेमादि सहकारिकारणं, तन्तुवायो निमित्तकारणम्। एवं सर्वत्र द्रष्टव्यम् । इत्थं त्रिविधकारणमन्तरा कार्यानुत्पत्तिदर्शनेन

प्रपञ्चरूपकार्यस्यापि एवं त्रिविधकारणसद्भावावश्यकतां मन्वानाः सर्वेश्वरस्य निमित्तकारणतामात्रं स्वीकृत्य, उपादानकारणं सहकारिकारणं च किमन्यदिति पृच्छन्ति । वेदान्तिनस्तु सर्वेश्वर एव त्रिविधकारणमपीत्युशन्ति ।

परिसपहाणसरीरो भुवणाणं होसि अच्चुअ उवायाणम् ।
णिअसंकप्पसणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ।। (अ.श.१२)

(छाया) पुरुषप्रधानशरीरो भुवनानां भवस्यच्युतोपादानम् ।
निजसंकल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ।।

इत्यच्युतशतकश्लोकरत्नमिहानुसन्धेयम् । गाथायां तृतीयपादोपक्रमे प्रयुक्तं वरिष्ठत्वरूपं कारणविशेषणं एतदेव कथयति। एकाकिनः स्वस्यैव त्रिविधकारणत्वमेव वरिष्ठत्वमिति वेदितव्यम् ।।

**[शङ्करान्तर्यामी भगवानेव संहर्ता]**

अवै मुळुदुण्ड परपरन् 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' (कठ.उ.२-२५) इत्याम्नातरीत्या 'अत्ता चराचरग्रहणात्' (ब्र.सू.१-२-९) इति सूत्रसिद्धान्तरीत्या च सकलसंहारकश्च स एव परमः पुमान् । तृतीयपादे पुरमोरु मून्रेरित्तु इत्यनेन त्रिपुरदाहकत्वमपि परमपुरुषकृत्यमेवेत्युच्यते । हन्त ! कथमिदं संघटते ? इतिहासपुराणादिषु रुद्रस्यैव हि त्रिपुरदाहकत्वं पठ्यत इति केचिदाशङ्केरन् । महाभारते कर्णपर्वणि - 'विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः' ।। (३५-५१) इति सुस्पष्टमुक्तम् । अमिततेजसोऽपि रुद्रस्य त्रिपुरदहनकाले विष्णुर्विशिष्य आत्मा बभूव, तस्मादेव स कार्यकुशलोऽभूदिति वस्तुस्थितिः प्रतिपादिता । तैत्तिरीययजुष्यपि षष्ठकाण्डे द्वितीयप्रपाठके 'तेषामसुराणां तिस्रः पुरः आसन्' (तै.सं.६-२३) इत्युपक्रम्य त्रिपुरसंहारकथा आम्नाता । तत्र च 'विष्णुं तेजनम्' इत्युक्तम् । तथा च विष्णोरेव तेजसा त्रिपुरदहनकार्यं रुद्रेण संपादितमिति प्रमाणगणप्रतिपन्न एवार्थ इह मुनिवरेण प्रत्यपादि इति प्रतिपत्तव्यम् ।।

**[चतुर्मुखान्तर्यामी भगवानेव सृष्टिकर्ता]**

अथ विरिञ्चस्य कृत्यमपि भगवदधीनमेवेति प्रतिपाद्यते 'अमरर्क्कुम् अरिवियन्दु' इत्यनेन । चतुर्मुखो देवानां ज्ञानमदिशत् इति काचन प्रथा वर्तते । अत्रापि कृते विमर्शे 'यो

ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.उ.६-१८) इत्याम्नानात् भगवानेव ब्रह्माणं निजनाभीकमले समुत्पाद्य तस्मै वेदानप्युपादिशत् इत्यवगमात् वेधसः स्वतन्त्रकृत्यं न किमपीत्यवधार्यते । 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ' ।। (महा.भा.शां.३२८-१७) इति मोक्षधर्मप्रमाणच्छाययैव गाथेयमनुगृहीता मुनिवरेणेति सुगमम् । 'यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी । क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात्' ।। (वि.पु.४-१-८५) इत्यादीनि बहूनि प्रमाणानि षट्सहस्रिकायामुपात्तानि अत्र अनुसन्धेयानि । तथा च 'श्रुतिप्रसिद्धस्सर्वेश्वरः जगत्सृष्टिक्षमत्वेन प्रसिद्धो ब्रह्मा स्यात्, जगत्संहारक्षमत्वेन प्रसिद्धो रुद्रस्स्यात्' इति कथयन्तः कुदृष्टयो गाथयाऽनया निरस्ता वेदितव्याः ।।

**[प्रतिपदार्थ]**

**हिन्दी -** (ब्रह्मादि) देवों से भी समझने अशक्य स्थितिवाले मूलप्रकृति इत्यादि सभी पदार्थों के असहाय (अद्वितीय) कारण होकर, (फिर प्रलयकाल में) उन सब को निगलनेवाले परात्पर (भगवान्), हर (यानी रुद्र) रूपी होकर त्रिपुर जलाकर (प्रलयकाल में) लोकों का संहार भी कर, (एवं) अज (यानी चतुर्मुख) रूपी होकर अमरों को (देवों को) ज्ञान देकर, लोकों की सृष्टि भी कर विराजमान हैं ।।

**[सृजक और संहारक भी भगवान हैं]**

समस्त जगत के स्वतंत्रकारण भूत भगवान चतुर्मुख ब्रह्मा के अंतर्यामी होकर जगत की सृष्टि करते हैं और रुद्र के अंतर्यामी होकर त्रिपुरसंहार और जगत का प्रलय करते हे । इस से यह अर्थ सूचित किया जाता है कि ब्रह्मरुद्रों के भी अंतर्यामी भगवान ही वास्तव में परतत्व हैं, न तु सृजक और संहारक कहलानेवाले चतुर्मुख अथवा रुद्र ।।

**[मूलप्रकृति के भगवान ही त्रिविधकारण हैं]**

पहले पाद में विण् शब्द का साधारण अर्थ है आकाश । परंतु 'अक्षरमम्बरान्तधृतेः' (१-३-९) सूत्र के श्रीभाष्य में बताया गया है कि गार्गिविद्या के 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ.उ.५-८-६) इत्यादि वाक्य में आकाश शब्द का अर्थ मूलप्रकृति है, न तु भूताकाश । अर्थात् संस्कृतवेदान्त में मूलप्रकृति भी क्वचित् आकाश कहलाती है । अतः उस के समशील द्राविडवेदांत में भी आकाशवाचकत्वेन प्रसिद्ध 'विण्' शब्द, मूलप्रकृति

के वाचकतया प्रयुक्त है । इस अर्थ को क्लिष्टकल्पना मानकर, 'विण्' शब्द को आकाश मात्र वाचक मानने पर भी कोई आपत्ति नहीं होगी । क्यों कि इस पक्ष में लक्षणा से प्रकृति का बोध होगा ही । कैसे भी हो ; मूलप्रकृति का बोध होना चाहिए । पहले पाद से यह कहा जाता है कि उक्त मूल प्रकृति का स्वरूप स्वभाव देवों को भी ठीक अविदित है । बाद में 'वरन् मुदल् आय्' शब्दों से कहा जाता है कि मूलप्रकृति वगैरह समस्त कार्यपदार्थों के श्रेष्ठ (यानी अद्वितीय) कारण स्वयं भगवान है । श्रेष्ठ कहने का यह तात्पर्य है कि भगवान उक्त पदार्थों के त्रिविध कारण भी हैं । तथाहि - किसी एक कार्य की उत्पत्ति में तीन प्रकार के कारणों की आवश्यकता है, जिन्हें उपादान कारण, सहकारि कारण और निमित्त कारण कहते हैं । दृष्टांत के लिए - घडा बनाने में मिट्ठी उपादान कारण है, दंडचक्रादि उपकरण सहकारि कारण हैं और कुम्हार निमित्त कारण है । इस तरह तीन प्रकार के कारणों के विना लोक में किसी भी कार्य का जन्म न होता । इस लोकन्याय से परिचित लोग पूछा करते हैं कि भगवान तो जगत के निमित्त कारण हैं, परं तु उपादान और सहकारि कारण कौन हैं ? इस विषय में वेदान्तियों का प्रत्युत्तर यह है कि स्वयं भगवान ही जगत के त्रिविध भी कारण होते हैं । भगवान ऐसे विचित्र शक्तियुक्त और सकलेतरविलक्षण हैं कि वे जरूर ऐसे होने समर्थ होते हैं । इस विषय में खुद वेदांत ही प्रमाण है ।।

### [सर्वसंहारक भगवान हैं]

अवै मुळुदुण्ड - इस का यह तात्पर्य है कि 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' ।। (कठ.उ.२-२५) इत्यादि वाक्योक्त प्रकार सब का संहार करनेवाले स्वयं भगवान हैं । इस वाक्य का यह तात्पर्य है - ब्राह्मण क्षत्रियादिरूप सारी जगत जिस के लिए अन्न (माने निगलने की चीज़) होती है और स्वयं मृत्युदेवता व्यंजन होती है, ऐसे महामहिम को कौन पहचान सकता है ? इस का यह भाव है कि भगवान अग्नि, रुद्र, मृत्यु इत्यादियों के द्वारा समस्त लोकों का पहले संहार करते हैं और अंत में उन का भी संहार कर देते हैं ; अतः सर्वसंहारक भगवान ही हैं । 'अत्ता चराचरग्रहणात्' (ब्र.सू.१-२-९) इत्यादि में भी यही निष्कर्ष किया गया है ।।

### [सर्वसंहारक होने के प्रमाण]

पुरमोरु मून्रु एरित्तु - सामान्यतः पुराणों में कहा गया है कि शिवजी ही त्रिपुरसंहारक हैं । परं तु अब आळ्वार कहते हैं कि उन के अन्तर्यामी भगवान ही वास्तव में

त्रिपुरनाशक हैं । महाभारत कर्णपर्व का यह श्लोक बताता है कि भगवान ने शिवजी को अपनी विशेष शक्ति का प्रदान किया था, जिस से ही वे उस महाधनुष की ज्या का स्पर्श कर सके - 'विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः' ।। (महा.भा.क.प.३५-५१) तैत्तिरीययजुस्संहिता में भी (६-२) त्रिपुरसंहार कथा उपवर्णित है, जिस में यह सारभूत वचन है - 'विष्णुं तेजनं' । इस से स्पष्ट होता है कि भगवान से प्रदत्त विशेष शक्ति के बल से ही शिवजी त्रिपुरसंहार करने में समर्थ हुए । अतः आळवार का कहना बिलकुल ठीक है ।।

**[ब्रह्माजी के भी अन्तर्यामी हैं]**

आगे चतुर्मुख ब्रह्मा जी का भी कृत्य भगवदधीन बताया जाता है (अमरर्कुम् अरिवियन्दु) इत्यादि से । देवादियों की सृष्टि करनेवाले चतुर्मुख ब्रह्मा जी उन को ज्ञान प्रदान करते हैं । परं तु 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.उ.६-१८) इत्यादि श्रुति स्पष्ट बताती है कि स्वयं भगवान ने ही अपने नाभीकमल में चतुर्मुख की सृष्टि की और उन को वेदों का उपदेश किया । एवं महाभारत के अंतर्गत मोक्षधर्म का यह एक प्रसिद्ध पद्य है - 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ' ।। (महा.भा.शां.३२८-१७) इस का यह तात्पर्य है कि ब्रह्मा और शिव नामक ये दो श्रेष्ठ देव क्रमात् भगवान के प्रसाद और क्रोध से समुत्पन्न हैं और उन के मार्गदर्शनानुसार जगत का सर्जन व संहार करते हैं । इस पद्य की छाया में ही प्रकृत गाथा रची गयी है । इस प्रकरण में हमारे पूर्वाचार्यों से प्रदर्शित पद्य यह भी एक है - 'यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी । क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात्' ।। (वि.पु.५-१-८५) इस में चतुर्मुख स्पष्ट बताते हैं कि 'भगवान की विशेष कृपा से मैं सृष्टिकर्ता बना और शिव संहारकर्ता' । तथा च जगत्सृष्टिकर्ता के रूप में प्रसिद्ध चतुर्मुख को या संहारक शिव को परतत्व बतानेवालों का पक्ष प्रकृत गाथा से तिरस्कृत हुआ ।।

**ऊळनेनिल् उळन् अवन् उरुवम् इव्वुरुवुहळ्**
**उळनलनेनिल् अवनरुवम् इव्वरुवुहळ्**
**उळनेन विलनेन इवैगुण मुडैमेयिन् उळन्**
**इरुतहैमैयोडु ओळिविलन् परन्दे ।। ९ ।।**

**(गाथा) - अस्तीत्येव वदेद्यदि स्वयमयं नास्तीति चेदप्यहो !**
**भाति श्रीपतिरस्य रूपमखिलं विश्वात्मकं रूपधृत् ।**
**यच्चारूपमिदं च तस्य हि हरेश्चारूपमंशात्मकं**
**सत्त्वासत्त्वयुतं स्वयं द्विविधमप्याविश्य भात्यव्ययः ।। ९ ।।**

**[प्रतिपदार्थः]**

**विवरणम् -** (ईश्वरः) अस्तीति चेदुच्येत, ईश्वरोऽस्त्येव ; (ईश्वरे सिद्धे सति) परिदृश्यमानानि सर्वाण्यपि स्थूलवस्तूनि भगवतः स्थूलशरीराणीति सिध्यति । (ईश्वरो) नास्तीत्युक्तेऽपि ईश्वरसत्तैव सिद्धा भवति ; (तदानीम्) सर्वाण्यपि सूक्ष्मवस्तूनि भगवतस्सूक्ष्मशरीरभूतानीति सिध्येत् । (तथा च) अस्तित्वनास्तित्वरूपेण धर्मद्वययोगे वर्ण्यमाने स्थूलप्रपञ्चशरीरकतया, सूक्ष्मप्रपञ्चशरीरकतया च सिद्धसत्ताको भगवान् ; सिध्यन् स भगवान् सर्वान्तरात्मा सन् सिध्यति ।।

**[सर्वशून्यतावादनिरसनाभ्युपपत्तिः]**

गाथयाऽनया सर्वशून्यवादी निरस्यते । अधस्तादष्टाभिः गाथाभिः संपन्नोऽनुभवो भगवतस्सद्भावम् अवधार्य प्रवृत्तः । वस्तुतो भगवानिति कस्यचिद्वस्तुनस्सद्भावे खलु तदनुभव उपपद्यते । भगवानेव नास्तीति वदतां वादे बलवति सति तत्प्रत्याख्यानम् अकृत्वा भगवदनुभवोपबृंहणेन किं फलमिति केचित् मन्येरन्निति निरीश्वरवादनिरसननिपुणामिमां गाथाम् अवतारयति मुनिवरः । सैषा गाथा सर्वशून्यवादप्रत्याख्यानपरेति पूर्वाचार्याः व्याचक्षते । गाथागतानां वचनसंदर्भाणां परामर्शे तु निरीश्वरवादप्रत्याख्यानमेव प्रतीयते । तत्कथं सर्वशून्यवादप्रत्याख्यानपरताम् आचार्या आचक्षत इति चेदवधेयम् । वस्तुतः स्सर्वशून्यवाद एव निरस्यतेऽत्र । सर्वं शून्यमिति वादे ईश्वरस्य शून्यताऽप्यन्तर्भवति खलु । तत्प्रत्याख्यानेन ईश्वरसद्भावः प्रतिष्ठापितश्चेत् तदा सिध्यन्नीश्वरः स्वविभूतिभूतसकलप्रपञ्चैस्सहैव सिध्येदिति कृत्वा निरीश्वरवादनिरासवैयग्री केवलं मुनिवरेण स्पष्टीकृतेति बोध्यम् । कञ्चन पुमांसमधिकृत्य अयमस्ति वा न वेति विवादस्संवृत्त इति गृह्यताम् । नास्तीति कश्चिदाह ; अस्तीत्यपर आह । अथ प्रवृत्ते विचारे नास्तीतिवादभञ्जनेन अस्तित्वं साधितमित्यपि गृह्यताम् । तदा सिध्यन् पुमान् चक्षुश्श्रोत्रजिह्वाघ्राणाद्यवयवसंघातसमन्वित एव खलु सिध्येत् । एवमेव भगवान् परमः

पुमान् अस्ति न वेति विवादे, नास्तीति वादे खण्डिते, अस्तीति वादे च सति ऊर्जिते, सिध्यतस्तस्य स्वशरीरभूतसर्ववस्तुसमेतस्यैव सिद्धिरव्याहता खलु । तथा च भगवतस्सद्भावं साधयन्ती सैषा गाथा सकलवस्तुसद्भावसाधनप्रवणा संपन्ना । तेन च सर्वशून्यवादखण्डन-परत्वव्याख्यानम् आचार्याणम् अनवद्यमिति निष्पन्नम् ।।

## [निरसनप्रकारः]

जगदिदं चिदचिदीश्वराख्यतत्वत्रयसंघातात्मकम् अस्ति । चेतनवस्तुभिः अचेतन-वस्तुभिः तदधीश्वरेण च आपूरितमिदं जगत् नास्तीति वदति स सर्वशून्यवादी । अस्य खण्डने प्रवृत्तो मुनिवरः ईश्वरस्यैकस्य सद्भावसाधनमात्रेण स्वस्य कृतकृत्यतामभिमेने । ईश्वरसद्भावं स्थापयितुं बहवः शास्त्रान्वेषणप्रयासम् अनुभवेयुः । यद्यपि समुचित एव स पन्थाः, तथाऽपि शास्त्रमप्यसदिति वदतः पामरान् शास्त्रेण निरस्याम इति कथनं न चारु । वादिनो वाचमेवावलम्ब्य वादिनः प्रत्याख्यानमिति सुशोभनः पन्था अत्राद्रियते ।।

## [निरसनविधौ अस्तिनास्तिवचसोः पर्यायवाचित्वकथनम्]

भगवानस्तीति कश्चिदाह चेत्, अनेन वचसा भगवतस्सद्भावः साध्यत इति विद्मः । एवम्, भगवान्नास्तीति कश्चिदाह चेत्, अनेन वचसा भगवतोऽसद्भावः साध्यत इति च । नैषा तु वस्तुस्थितिः । भगवानस्तीति वचसः, भगवान्नास्तीति वचसश्च वस्तुतः समानार्थकत्वमेव सेत्स्यति । अस्तीति वचसा यथा सद्भावस्सिध्यति, तथा नास्तीति वाचाऽपि सद्भाव एव सिध्यतीति शपथं करोति मुनिवरः । अस्तिनास्तिवचसोः पर्यायप्रायतामेव प्रतिजानीते सः । स एष विषयो मितमतीनां धियं नैवाधिरोहेत् । उपपादयामः ; अवधत्त ।।

## [पर्यायवाचित्वनिरूपणप्रकारोदाहरणम् - १]

घटो नास्ति, पटो नास्तीति कश्चिदुवाचेति गृह्यताम् । वचसाऽनेन घटपटयोरभावः अवबोधितो भवतीति मन्यध्वे । वस्तुतः स नावबोध्येत । तयोस्सद्भाव एव बोध्येत । कथमिति चेत्, प्रकारद्वयेन सद्भावस्सिध्येत् । प्रकारद्वयमपि निरूपयामः । चैत्रो मैत्रसकाशं गत्वा घटं देहीति याचते ; देवदत्तो यज्ञदत्तसकाशं गत्वा पटं देहीति याचते । उभावपि न इत्यवोचताम् । एतेन मैत्रः स्वसकाशे घटो नास्तीत्युक्तवान्, यज्ञदत्तश्च स्वसकाशे पटो नास्तीत्युक्तवान् इत्येव खलु ज्ञायेत । घटो वा पटो वा जगत्येव नास्तीति ताभ्यामुक्तमिति

तु नैव प्रतीयेत । नास्तीतिशब्दः अत्र नास्ति, इदानीं नास्ति, मत्सविधे नास्ति इत्येव स्वार्थबोधं जनयेत् । सर्वथाऽपि नास्तीति अर्थप्रतीतिः अनुभवविरुद्धा । अत्र नास्तीत्युक्ते अन्यत्रास्तित्वं सिद्धमेव । इदानीं नास्तीत्युक्ते कालान्तरेऽस्तित्वं सिद्धमेव । स्वसकाशे नास्तीत्यनेन पुरुषान्तरसकाशेऽस्तित्वं सिद्धमेव । तथा च नास्तीति शब्देन अस्तित्वमेव सिद्धमिति प्रदर्शितमभूत् । अयमेकः प्रकारः ।।

**[पर्यायवाचित्वनिरूपणप्रकारोदाहरणम् - २]**

अथ प्रकारान्तरं च निरूपयामः । क्वचिदेको घट आसीत् । स च भग्नोऽभूत् । तदा घटो नास्तीति व्यवहार उत्पद्यते । एवं पटादितत्तद्वस्तुविषयकव्यवहारा अपि उत्पद्यन्त इति गृह्यताम् । एतादृशस्थलेष्वपि वस्तुनः सर्वथाऽप्यभावो नैव सिध्येत् । घटो नेत्युक्ते कम्बुग्रीवादिमत्त्वरूपाकारविशेषविशिष्टं वस्तु नास्तीत्येव कथितं स्यात् । घटे हि भग्ने शकलानि दृश्यन्त एव । पटे च शिथिले कन्था दृश्यत एव । शकलानामपि कन्थानामपि च विनाशे सूक्ष्मावयवा अवश्यमेव स्युः । तथा च स्थूलाकारविरहेऽपि सूक्ष्माकारसत्ता नैव निह्नवार्हा भवेत् । (सिद्धान्ते) उत्पत्तिविनाशशब्दयोरर्थोऽवधेयः । नवीनतया न किमपि वस्तु जायेत । तथा वस्तुन आत्यन्तिको विनाशश्च न भवेत् । सूक्ष्माकारं विहाय स्थूलाकारप्राप्तिरेव उत्पत्तिः; स्थूलाकारं विहाय सूक्ष्माकारप्राप्तिरेव च विनाशः ।।

**[प्रकृते उपपत्तिः]**

अथ प्रकृतगाथायाम् अवतरामः । यत्किमपि वस्तु निर्दिश्य इदं नास्तीत्युक्ते, तदर्थो द्वेधा सिध्येत् प्राङ्निरूपितदिशा - (१) अत्र नास्ति, इदानीं नास्तीति अथवा (२) स्थूलाकारेण नास्ति सूक्ष्माकारेणास्तीति सिध्येत् । उभयथाऽपि वादिनस्सिषाधयिषिता सर्वशून्यता वा भगवतो नास्तिता वा नैव सेद्धुमलम् । भगवानस्तीत्युक्ते स्थूलचिदचिद्विशिष्टस्य ब्रह्मणस्सत्ता गम्यते । भगवान्नास्तीत्युक्ते सूक्ष्मचिदचिद्विशिष्टस्य तस्यैव सत्ता गम्यते । आत्यन्तिकी असत्ता तु न मनागपि कथंचिदपि । तथा च ईश्वरोऽस्ति, ईश्वरो नास्तीत्युभयोरपि वचसोः ईश्वरसत्ताबोधन एव विश्रान्तता परिनिष्पन्ना । सर्वमस्तीति प्रतिज्ञया यत् सिध्यति, तदेव सर्वं नास्तीति प्रतिज्ञयाऽपि सिध्यतीति सुदृढमिदं प्रतिपत्तव्यम् ।।

***[श्रीभाष्यविवरणं अनया गाथयानुप्राणितम्]***

शारीरकमीमांसायां द्वितीयाध्यायद्वितीयपादे 'सर्वथाऽनुपपत्तेश्च' इति (ब्र.सू.२-२-३०) सूत्रम् इतरभाष्यकारैः अतिसंक्षेपतो व्याख्यातम् । सूत्रकारविवक्षितोऽर्थो न मनागपि तत्र

निर्गलित इति स्पष्टं विदुषाम् । भगवद्रामानुजभाष्यं तु विद्वद्भिः अवश्यं विमर्शनीयम् । तत्रत्यसूक्तिततिरेतद्गाथाविवर्तमयी । अत एव तस्याः सूत्रकारहृद्गतार्थप्रकाशनपटुतेति अधुना निरूप्यते । श्रीभाष्यसूक्तिरेषा - 'किं भवान् सर्वं सदिति प्रतिजानीते । (तथा सति) तवाभिप्रेतं तुच्छत्वं न संभवति । किं भवान् असदिति प्रतिजानीते ? (तदाऽपि) तुच्छत्वं न संभवति ? शून्यमिति प्रतिजानता सदिति प्रतिजानतेव सर्वस्य विद्यमानस्य अवस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति तुच्छता न कुतश्चिदपि सिध्यति इति' ।

अत्र, 'किं भवान् सर्वं सदिति प्रतिजानीते ? तथा सति तवाभिप्रेतं तुच्छत्वं न संभवति' इत्येतद्वाक्यम् एतद्गाथाप्रथमपादस्यैव रूपान्तरमिति निस्संदेहम् । अथ च, 'किं भवान् असदिति प्रतिजानीते' ? इत्यादिकः सूक्तिशेषस्तु द्वितीयादिपादत्रयस्य स्वच्छविवरणरूपः इति सर्वम् अवदातम् ।।

## [प्रतिपदार्थ]

**हिन्दी -** एवं कहनेपर कि (भगवान) हैं, (वे) हैं ही ; (फिर) देखे जानेवाले ये सब स्थूल पदार्थ उन के स्थूल शरीर होते हैं । एवं कहने पर भी कि (भगवान) नहीं हैं, (यही अर्थ सिद्ध होगा कि) वे हैं ही ; (तब) ये सब सूक्ष्मपदार्थ उन के सूक्ष्म शरीर सिद्ध होते हैं । अस्तित्व नास्तित्व रूप धर्मों के वर्णित होने पर (भगवान) स्थूलप्रपंच शरीरी एवं सूक्ष्मप्रपंच शरीरी के रूप में स्थापित ही किये जाते हैं ; (इस प्रकार) सिद्ध होनेवाले (भगवान) सर्वांतर्यामी के रूप में सिद्ध होते हैं ।।

## [सर्वशून्यतावादखंडन]

इस ग्रंथ में अभी तक की आठ गाथाओं से भगवान के अनेक प्रकार के वैभवों का वर्णन किया गया । यह सब तब ठीक होगा, जब उन की सत्ता सिद्ध हो । परंतु इस लोक में नानाप्रकार के निरीश्वरवाद चलते आये हैं । अतः पहले इन को निरस्तकर, भगवान के अस्तित्व को सुदृढ स्थापित कर, बाद में उन के वैभवों का वर्णन करना उचित है । इस तत्त्व का स्मरण कर, अब आळ्वार भगवान का अस्तित्व स्थापित करते हैं । निरीश्वरवादियों में अग्रगण्य बौद्धमतवाले हैं । इन में अनेक प्रकार होते हैं । भौतिक पदार्थों को मानकर, ईश्वर को न माननेवाले एक प्रकार है । ईश्वर के साथ भौतिक पदार्थों का भी इनकार करनेवाले, अर्थात् सर्वशून्यवाद को अपनानेवाले दूसरा प्रकार है । प्रकृत गाथा में, आळ्वार जिस ढंग से निरीश्वरवाद का निराकरण करते हैं, उस से सर्वशून्यवाद

भी खंण्डित हो जाता है । अतः हमारे पूर्वाचार्य इस गाथा का सर्वशून्यवादखंडन परक रूप से ही व्याख्यान करते हैं । उन का आशय है कि ऐसा करने पर जब भगवान की स्थापना की जाती है, तब उस के साथ भगवान की विभूति समस्त चेतनाचेतन पदार्थ भी स्थापित हो जाते हैं । अब मान लीजिए कि किसी मानव के बारे में यह चर्चा चलती है कि फलाना है कि नहीं । जब इस वाद में प्रसक्त व्यक्ति के नास्तित्व का खंडन कर उस का अस्तित्व स्थापित किया जाता है, तब ऊपर से यह कहने की आवश्यकता न रहती कि उस के शरीर, स्थान, परिवार आदि भी होते हैं ; यह तो कहे विना ही सिद्ध होगा । इसी प्रकार भगवान के अस्तित्व को साबित करने पर उन के शरीर चेतनाचेतन भी स्थापित हो जाते ही हैं । अतः आचार्यों का कहना सर्वथा उचित है ।।

**[खंडनप्रकार]**

चेतन, अचेतन व ईश्वर नामक तीन तत्वों की मिलाव से यह प्रपंच बना है । शून्यवादी का दावा है कि न तो ये चेतनाचेतन तत्व है ; न वा उस का मालिक ईश्वर है । अब आळ्वार ईश्वर की स्थापना करने मात्र से उक्त वाद का पूरा खंडन कर डालते हैं । वैदिकों का यह स्वभाव है कि वे प्रायः वेदादि शास्त्रों के आधार से ईश्वर को सिद्ध करते हैं । आळ्वार ने भी सातवीं गाथा में 'शुडर्मिहु शुरुदियुऴ् उळन्' कहकर इसी मार्ग का आश्रय लिया था । परंतु अब वे यह मार्ग छोडकर, प्रतिवादी के शब्द से ही उस का खंडन करते हैं । यह बडा सुंदर है । क्यों कि दूसरे पदार्थों की भांति शास्त्र का भी अपलाप करनेवाले शून्यवादी को शास्त्रप्रमाण दिखाना बिलकुल व्यर्थ है । अतः यह मार्ग छोडकर वे युक्ति मार्ग में चलते हैं ।।

**[अस्ति-नास्ति वचनों की पर्यायवाचिता]**

सामान्य लोग मानते हैं कि अगर कोई कहे कि 'भगवान हैं,' तो इस से भगवान का अस्तित्व समझाया जाता है ; 'भगवान नहीं हैं' कहने पर उन का नास्तित्व समझाया जाता है । परंतु यह अभिप्राय गलत है । अब आळ्वार शपथ करते हैं कि उक्त दोनों वाक्यों से भगवान का अस्तित्व ही बताया जाता है, न तु नास्तित्व । उन का दावा है कि जैसे अस्ति शब्द से भगवान का अस्तित्व बताया जाता हैं, इसी प्रकार नास्ति शब्द से भी उन का अस्तित्व ही रूपांतर से बताया जाता है । यह अर्थ समझने में कुछ कठिन होगा । अतः अब हम इस का विवरण करेंगे ।।

**[पर्यायवाचिता का दृष्टांत - १]**

लोकव्यवहार में कभी ऐसे वाक्यों का प्रयोग किया जाता है कि घट नहीं है, पट नहीं है इत्यादि । इन वाक्यों के स्वरूपमात्र पर ध्यान देनेवालों को ऐसे लगेगा कि इन से घट पटों का नास्तित्व बताया जाता है । परंतु असली बात इस से विरुद्ध है । ये वाक्य भी वास्तव में घट पटों की सत्ता के ही बोधक होते हैं । दो प्रकारों से यह अर्थ बताया जा सकता है । (१) मान लीजिए कि कोई मानव देवदत्त से घट मांगता है और यज्ञदत्त से पट मांगता है और दोनों से प्रत्युत्तर के रूप में नकार ही पाता है । इस नकार का यह अर्थ है कि उस समय देवदत्त के पास घट नहीं है और यज्ञदत्त के पास पट नहीं है; इस को छोडकर इस का ऐसा अर्थ कभी न हो सकता कि संसार भर में घट की अथवा पट की सत्ता ही नहीं है । अगर यही अर्थ होता तो घट पट इत्यादि व्यवहार ही न होता । अतः नास्ति शब्द का यह अर्थ है कि यहाँ नहीं है, अब नही है, मेरे पास नहीं है इत्यादि । इस से देशांतर में, कालांतर में और पुरुषांतर के पास उन की सत्ता ही कथित होती है ।।

**[पर्यायवाचिता का दृष्टांत -२]**

(२) किसी एक जगह पर एक घट रहा जो लकडी से मारे जा कर चूर चूर हो गया । तब हम कहते हैं कि घट नहीं है । इस वाक्य से भी सामान्यतः लोग घट की असत्ता को समझते हैं । परंतु यह भी ठीक नहीं है । क्यों कि घट के नष्ट होने पर भी उस के शकल रहते हैं, और कदाचित् उन के भी चूर हो जानेपर धूल रहती ही । अतः धूल, शकल (यानी कपाल), घट इत्यादि सभी भिन्न भिन्न अवस्थावाले एक ही पदार्थ के अलग अलग नाम हैं । अतः घट के नाश होने पर रूपांतर में उस की सत्ता ही बतायी जाती है । एवं जब हम कहते हैं कि कुँहार के पास घट नहीं है, तब उस का अर्थ इतना ही है कि आज यहां केवल मिट्टी ही है, जो कल या परसों घट बनेगी । अतः यहां भी नास्तिशब्द से घट का पूर्वरूप ही बताया जाता है । अत एव सत्कार्यवादी वेदांतियों के मत में स्थूलावस्थाप्राप्ति उत्पत्ति कहलाती है और सूक्ष्मावस्थाप्राप्ति विनाश कहलाती है । अथात् विद्यमान पदार्थ का रूप ही बदलता जाता है; न तु एकदम अविद्यमान पदार्थ की कहीं से उत्पत्ति होती है, न वा विद्यमान पदार्थ का सर्वथा विनाश होता है । तथा च, पर्यवसित अर्थ यह हुआ कि किसी वस्तु को नास्ति कहने का इतना ही तात्पर्य है कि वह देशांतर में, कालांतर में अथवा अवस्थांतर में है; न तु सर्वथा उस के अस्तित्व का ही अभाव ।।

### [प्रकृत में योग]

अब प्रकृतगाथार्थ का विचार करेंगे । अगर सर्वशून्यवादी (अथवा दूसरा कोई निरीश्वरवादी) किसी पदार्थ का नाम लेकर (अथवा ईश्वर का नाम लेकर) कहे कि यह पदार्थ नहीं है (अथवा भगवान नहीं है), तो इस वाक्य का इतना ही अर्थ होगा कि यह पदार्थ अब नहीं है, यहाँ नहीं है, अथवा इस अवस्था में नहीं है ; (भगवान सूक्ष्मरूप में हैं, न तु स्थूल रूप में) । उस वस्तु का ही (अथवा भगवान का ही) नास्तित्व अर्थ नहीं हो सकता । भगवान की सूक्ष्मावस्था अथवा स्थूलावस्था कहने का यह तात्पर्य है - निर्विकार भगवान स्वयं सूक्ष्म और स्थूल बनते नहीं । परंतु उन के शरीर चेतन व अचेतन बनते है । उन में भी चेतन निर्विकार कहलाता है ; अतः उस का भी स्वरूप संकोच विकास रहित होता है । तथापि वह अपने कर्मानुसार नाना शरीर लेता है, तब उस का ज्ञान संकोच विकासों का पात्र होता है, जिस को लेकर उस की भी सूक्ष्मावस्था व स्थूलावस्था नामक दो अवस्थाएं होती हैं । अचेतन की सूक्ष्मावस्था प्रलयकाल में होती है । इस तरह से अपने शरीर भूत चेतनाचेतनों की स्थूल सूक्ष्म अवस्थाएं उन के अंतर्यामी होने के कारण भगवान को भी होती हैं । अतः 'भगवान नहीं हैं' कहने का यह अर्थ निकलता है कि भगवान जगत्सृष्टि के बाद स्पष्ट नाम रूपवाले अर्थात् स्थूलावस्था विशिष्ट चेतना चेतनों के अंतर्यामी रहते हैं । इस प्रकार अस्ति-नास्ति शब्दार्थ का विश्लेषण करने से स्पष्ट होता है कि नास्ति शब्द का उच्चारण करने मात्र से किसी वस्तु का सर्वथा अनस्तित्व नहीं बताया जा सकता ।।

### [श्रीभाष्य को इस गाथा से प्रेरणा मिली है]

इस गाथार्थ को मन में रखकर ही श्रीभाष्यकार स्वामीजी ने सर्वशून्यवाद का खंडन करने वाले ब्रह्मसूत्र **'सर्वथानुपपत्तेश्च'** (ब्र.सू.२-२-३०) पर बडा ही सुंदर और सूत्रकारहृदयानुसारी भाष्य लिखा है । श्री स्वामीजी शून्यवादी से पूछते हैं - 'क्या तुम्हारी शून्यवादप्रतिज्ञा 'सर्वं सत्' होगी, अथवा 'सर्वम् असत्' होगी ? सर्वं सत् कहने पर स्पष्ट ही समस्त पदार्थों की सत्ता स्वीकृत हुई ; सर्वम् असत् कहने पर भी सब की सत्ता ही प्रतीत होती है ; क्यों कि असत् शब्द का अर्थ ही किसी को अपना एक रूप छोडकर दूसरे रूप में रहना होता है । अतः दोनों प्रकारों से तुम्हारे इष्ट तुच्छत्व का बोध नहीं हो सकता है'।। इस विवरण से स्पष्ट होता है कि प्रकृत गाथा के तात्पर्यानुसार ही श्रीभाष्यकार स्वामीजी ने उक्तवाक्य लिखे ।।

परन्दतण् परवैयुळ् नीर् तोरुम् परन्दुळन्
परन्द वण्डमिदेन निलविशुम्बु ओळिवर
करन्द शिलिडन्तोरुम् इडन्तिहळ् पोरुळ् तोरुम्
करन्देङ्गुम् परन्दुळन् इवैयुण्ड करने ।। १० ।।

(गाथा) - सर्वत्रायतशीतवारिधिकणेष्वाविश्य चाणुत्वत-
स्सर्वं चापि महाण्डमण्डलमयं त्वाक्रम्य भूम्ना स्वयम् ।
एवं भूमितले च भाति नभसि व्याप्य स्थितस्सर्वतो
भास्वद्वस्तुषु गुप्त एव हि हरिस्संहारकर्ताऽप्यसौ ।। १० ।।

[प्रतिपदार्थः]

**विवरणम् - विस्तृतशिशिरजलनिधौ जलकणिकासु सर्वास्वपि अतिविशाल-ब्रह्माण्डमण्डले यथा तथा (व्यक्तिषु जातिवत्) परिसमाप्तवृत्तिकः ; भूम्यामन्तरिक्षे च विच्छेदमन्तरेण अतिसूक्ष्मेषु अत्यल्पेषु च स्थलेषु सर्वेषु तत्तद्देशवर्तिषु सर्वात्मस्वपि परैरविदिततया अन्तर्व्याप्य बहिश्च व्याप्य वर्तते (क इति चेत्) प्रलयकाले सर्वस्य चास्य प्रपञ्चस्य अत्ता भगवान् यः, स एव ।।**

[सारार्थः]

भगवतः सर्ववस्तुषु पूर्णत्वमुच्यते गाथयाऽनया । परात्परस्य इदमपि लक्षणं खलु । समुद्रजलपरमाणुषु पृथिव्यन्तरिक्षादिलोकान्तर्वर्तिषु अतिसूक्ष्मेषु अचिद्वस्तुषु च व्याप्य, तदन्तः प्रकाशमानेषु चिद्वस्तुषु च सुमहत्यण्डमण्डले इव आयासलेशमन्तरेण असंकुचितवृत्तिकः, जगत्संहर्ता च सुदृढप्रमाणसिद्धो भगवान् । (यः तस्य पादारविन्दयुग्मं प्रणम भो हृदय ! इति प्रथमगाथया सह योजना चारुतरेति हृदयमाचार्याणाम्) ।।

[परिसमाप्यव्याप्तित्वकथनम्]

अत्रेदमवधेयम् । उपनिषत्सु **'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'** (तै.ना.उ.११-५) इत्युक्ता व्याप्तिरेव गाथायामस्यामन्वग्राहि । उदाहृतश्रुतिवाक्ये 'सर्वम् अन्तर्बहिश्च व्याप्य स्थितः' इति पदेषु प्रत्येकशो दृष्टिर्निधेया । पदार्थवर्गेषु एकमप्यवर्जयित्वा सर्वेषु च व्याप्तिः, अन्तश्च व्याप्तिः, बहिश्च व्याप्तिः भगवतोऽत्र कथिता । अणुपदार्थेषु

अन्तर्व्याप्तिर्न संभवितुमलमिति परे प्रत्यवतिष्ठन्तो । 'सावयवानामेव पदार्थानामन्तर्देशबहिर्देशव्यवहारप्रसक्तिः । निरवयवानाम् अणुपदार्थानां तादृशव्यवहारप्रसक्तिविरहेण भगवतस्तेषु अन्तर्व्याप्तिर्न सुवचा । किंच, नैकस्मिन्नपि वस्तुनि भगवतः परिसमाप्य वर्तमानता स्वीकर्तुं शक्या । यद्येकस्मिन्नेव वस्तुनि तस्य स्वरूपं परिसमाप्तं स्यात्तर्हि वस्त्वन्तरे व्याप्तेरवकाश एव नास्ति । तथाच परिसमाप्यव्याप्तिकथनमसंगतम्' इत्येतत् परकीयं वादद्वयमपि गाथयाऽनया सुष्ठु प्रत्याख्यायते इति द्रष्टव्यम् ।।

**[परिसमाप्यव्याप्तौ प्रमाणानि]**

अत्र किंचिद्विव्रियते । शारीरकमीमांसायां **'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा'** (ब्र.सू.२-१-२६) इति पूर्वपक्षसूत्रम् । अथ सिद्धान्तसूत्रम् **'श्रुतेस्तु शब्दमूलत्वात्'** इति (ब्र.सू. २-१-२७) इति । शास्त्रप्रतिपन्नेष्वर्थेषु कुतर्कमूलकचोद्यपरिकल्पनां विहाय शास्त्रोक्तोऽर्थस्साञ्जलिबन्धं स्वीकर्तव्य इति तावच्छिक्षयति सिद्धान्तसूत्रमिदम् । **'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः'** (तै.उ.ना.११-५) इति श्रुतिस्तावत् सुस्पष्टमाचष्टे व्याप्तिम् । 'एकैकस्मिन् जलपरमाणौ अतिविशालब्रह्माण्ड इव व्यक्तिषु जातिवत् पर्याप्तवृत्तिः' इति दशोपनिषद्भाष्यकारसूक्तिश्च जागर्ति । श्रीमान्वेङ्कटनाथार्योऽपि न्यायसिद्धाञ्जने ईश्वरपरिच्छेदे परिसमाप्यवृत्तित्वविषयकमाक्षेपमुपक्षिप्य **'श्रुतेस्तु शब्दमूलत्वात्'** (ब्र.सू.२-१-२७) इति ब्रह्मसूत्रमेव प्रदर्श्य 'यथागमं सर्वत्र पूर्ण एव भगवान्' इत्युपसंजहार । वेदार्थसंग्रहव्याख्यायां तात्पर्यदीपिकायां च 'निरंशे प्रतिप्रदार्थं पूर्णवर्तिन्यपि स्वरूपे अंशशब्दव्यवहारः एकस्मिन्नैव वस्तुनि स्वरूपस्य पूर्णवर्तितया अन्यत्र वृत्त्ययोग्यत्वशङ्काव्युदासार्थः' इत्येषा दिव्यसूक्तिरुल्लसति । परिसमाप्यवृत्तित्वविषये परैर्यच्चोद्यं क्रियते, तदेव ह्युपक्षिप्य निरस्तं श्रुतप्रकाशिकाचार्यैः । 'अन्यत्र वृत्त्ययोग्यत्वशङ्काव्युदासार्थः' इति सूक्त्यानया किं प्रतिपाद्यत इति हन्त परे नावदधते । एकस्मिन्नेव वस्तुनि भगवत्स्वरूपं पूर्णवर्ति चेत् तदन्यत्र कथं स्थातुं शक्नुयादिति शङ्का निरस्ताऽभूदिति खलु कथितमिह । निरस्तत्वेन निर्धारितायाः तस्या एव शङ्कायाः पुनःपुनरुत्थापकाः कथमिव भगवद्भाष्यकारसिद्धान्तपथानुवर्तिनो भवितुमर्हन्ति ? 'एकत्र समाप्तस्वरूपस्य अन्यत्र वृत्तियोग्यत्ववादो व्युदस्यते' इति श्रीसूक्तिशैलीसत्त्वे परेषां चोद्यं प्राण्यात् न तथा खलु दृश्यते श्रीसूक्तिः ।।

**[परिसमाप्यव्याप्तौ जातिदृष्टान्तः]**

जिज्ञासाधिकरणश्रुतप्रकाशिकायां च, **'य आत्मनि तिष्ठन्'** (बृ.उ.मा.पा.३-७-२२) इत्युक्ते वेद्यामग्निस्तिष्टति, तिले तैलं तिष्ठतीतिवत् बहिरबहिस्स्थितिसाधारण्यात् तद्वैशद्यार्थमाह - आत्मनोऽन्तर इति 'इत्येषा सूक्तिर्विलसति । एतया स्फुटीकृता ननु अणावात्मनि भगवतोऽन्तर्व्याप्तिः । सहस्रनामाध्याये 'अणुर्बृहत् कृशस्स्थूलः' इत्यत्र अणुपदं व्याचक्षणा भट्टपादाः 'अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात् अणुः' इत्यनुजगृहुः । तथाच अणुपदार्थेषु अन्तर्व्याप्तिः, प्रतिवस्तु परिसमाप्यवर्तनं चेत्युभयमपि भगवद्रामानुजसंप्रदायस्थ-सकलपूर्वाचार्यसम्मतमिति, विषयद्वये अस्मिन् कुचोद्यानामुत्थापनम् अर्वाचीनानामेव केषाञ्चित्कृत्यमिति च निर्धारणीयं भवति । अन्तत इदमेकं सारम् उपहरामः । भगवान् रामानुजो वेदान्तदीपे - 'यथा जातिवादिनो जातिरेकैव अमूर्ताखण्डमुण्डादिषु अत्यन्तविलक्षणेषु अनन्तेष्वपि परिसमाप्यैव वर्तते, न तत्र इतरवस्तुचोद्यमिति' इत्यनुगृहीतवानिति प्रसिद्धमेतत् । 'जातिः प्रतिव्यक्ति परिसमाप्य वर्तते' इत्युक्ते ओमित्यङ्गीकुर्वन्ति । सकलवस्तुविलक्षणं शास्त्रैकवेद्यम् अचिन्त्याप्रमेयाद्भुतशक्तियुक्तं परं ब्रह्म प्रतिपदार्थं परिसमाप्य वर्तत इत्युक्ते महत्तरं चोद्यमुपक्षिपन्ति हन्त ! इत्याचार्या एव स्वयं विस्मयन्ते विषीदन्ति च ।। अस्मदीयब्रह्मव्याप्तिपरिष्क्रियादिग्रन्थेषु विस्तरो द्रष्टव्य इति विरम्यते ।।

**[प्रतिपदार्थ]**

**हिन्दी - विशाल व सुशीतल सागर में, (विद्यमान) प्रत्येक जलकण में भी, अतिविशाल ब्रह्माण्डमंडल में जैसे (जैसे व्यक्ति में जाति रहती है) वैसे भगवान परिपूर्ण विराजमान हैं ; विच्छेद के विना भूमि में, अंतरिक्ष में, सभी अतिसूक्ष्म-अत्यल्प स्थलों में, (तथा) उन उन स्थलों में रहनेवाले समस्त पदार्थों में (माने उक्त अचेतन के अंतर्वर्ती आत्मवर्ग में), दूसरों से अज्ञात अंतर्यामी होकर, (एवं) उन के बाहर भी व्याप्त होकर, (प्रलयकाल में) इस सारी जगत को निगलनेवाले भगवान विराजमान हैं ।।**

**[भगवत्स्वरूप परिपूर्णतया व्याप्त है]**

इस गाथा में भगवान समस्त पदार्थों में परिसमाप्य व्याप्त बताये जाते हैं । उपनिषद में यह सर्वव्याप्ति भी परब्रह्म का लक्षण बताया गया है । समुद्रजल के प्रत्येक

कण में, भूम्यंतरिक्षादिगत अतिसूक्ष्म परमाणुओं में, उन के अंदर रहनेवाले जीवात्मवर्ग में, तथा च समस्त चेतनाचेतनपदार्थों में, अंदर और बाहर व्याप्त होकर, विशाल ब्रह्मांड के अंदर निवास करनेवाले एक व्यक्ति की तरह, विना संकोच के, एवं विना किसी प्रकार के आयास से विराजमान, जगत का संहार करनेवाले सुदृढ प्रमाणसिद्ध भगवान के उभयपादारविंदों की, हे मेरे मन! सेवा करो-इस प्रकार पहली गाथा से मिलाकर प्रकृतगाथा का अर्थ करना आचार्यों का अभिमत है ।।

**[परिपूर्ण व्याप्ति का विवरण]**

उपनिषदों में भगवान का यह एक वैभव बताया गया है कि, **'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'** ।। (तै.ना.उ.११-५) यह अर्थ है - इस जगत में जो वस्तु देखी जाती हैं अथवा सुनी जाती हैं, भगवान श्रीमन्नारायण उन सब के अंदर और बाहर व्याप्त होकर विराजमान हैं । इस वाक्य के प्रत्येक शब्द पर ध्यान देने से यह अर्थ निकलता है कि भगवान संसार के अंतर्गत समस्त पदार्थों में, एक को भी छोडे विना, व्याप्त हैं ; सब के अंदर व्याप्त हैं और बाहर भी व्याप्त हैं । भगवान की अद्भुतशक्ति की परिचायक इस व्याप्ति को ठीक समझना भी कुछ कठिन है । क्यों कि लोगों के मन में यही शंका होगी कि जब अणुस्वरूप जीवात्मा का अंतःप्रदेश ही अविद्यमान है, तब भगवान उस में कैसे व्याप्त हो सकते हैं ? अतः आत्मा में अंतर्व्याप्त नहीं हो सकते । एवं दूसरे सूक्ष्म पदार्थों के अंदर होनेवाले भगवान का स्वरूप बहुत संकोच का अनुभव करता । एवं अनंत पदार्थों में व्याप्त भगवान, एकैक में भी अंशतः ही व्याप्त हो सकते हैं, न तु पूर्णतया ; क्यों कि अगर किसी एक वस्तु में परिपूर्ण भगवत्स्वरूप व्याप्त हो जाता, तो फिर दूसरे स्थान में व्याप्त होने के लिए वह स्वरूप बचता ही नहीं ; तथा च उन को एक वस्तुमात्र में व्याप्त कहना पडता है । अतः एकैक वस्तु में भी उन की अपूर्णव्याप्ति को ही मानना चाहिए । इन सब शंकाओं का समाधान प्रकृत गाथा से किया जाता है । तथा हि - **'य आत्मनि तिष्ठन्नात्मनोऽन्तरः'** (बृ.उ.३-७-२२) इत्यादि श्रुति स्पष्ट कहती है कि भगवान आत्मा के अंदर व्याप्त हैं ; अतः इस श्रुति के विरुद्ध तर्क अनुपादेय है । एकैक परमाणु में भी भगवान इतने असंकुचित व्याप्त हैं कि मानों एक विशाल ब्रह्माण्ड में एक मनुष्य व्यक्ति चलता फिरता हो । व्याप्य एकैक वस्तु में भी भगवान परिपूर्ण रूप से व्याप्त हैं । यह कैसे हो सकता है ? भगवान के अद्भुतशक्ति

होने से हो सकता है । इस विषय में एक दृष्टांत दिया जाता है । नैयायिक मत में एकैक वस्तु में भी घटत्व पटत्व इत्यादि एकैक जाति मानी जाती हैं । अनेक घटव्यक्तियों में 'यह घट है' इत्यादि एक प्रकार का जो ज्ञान और व्यवहार चलता है, उस का कारण यह जाति कहलाती है । अब नैयायिकों का अभिप्राय है कि यह घटत्वादि जाति एकैक घटादिव्यक्ति में भी परिपूर्ण रहती है ; क्यों कि अगर किसी घट में यह जाति पूर्ण न हो, तो उस में पूर्ण घटत्वबुद्धि का उदय न होगा । अतः, अर्थात् एकैक घटव्यक्ति में भी पूर्ण घटबुद्धि के होने से, ऐसा मानना चाहिए कि हर व्यक्ति में घटत्व जाति परिपूर्ण रहती है । इसी न्याय से चेतनाचेतन रूप समस्त पदार्थों में भी परिपूर्ण भगवद्व्याप्ति का प्रयोजन, नामरूप व्याकरण, भगवदधीन प्रवृत्तिनिवृत्त्यादिमत्त्व इत्यादियों के दर्शन से हम निश्चय कर सकते हैं कि भगवान सर्वत्र पूर्णरूपेण व्याप्त हैं ।।

**[परिपूर्ण व्याप्ति का प्रमाण श्रुति है]**

पूर्वोक्त प्रकार यह अर्थ बहुत लोगों की समझ में आता नहीं । वे यही पूछा करते हैं कि एकैक परमाणु में भी भगवान कैसे परिपूर्ण व्याप्त हो सकते हैं ? मान लीजिए कि एक हजार रूपयों को दस थैलियों में बाँटना है ; तो एकैक थैली में भी एकैक हजार रुपये रखे नहीं जा सकते । क्यों कि अगर हम एक में हजार रुपये रखते, तो दूसरी में रखने के लिए कुछ बचता ही नहीं । अगर दसों थैलियों में रूपये रखना इष्ट हो तो एकैक में हजार का एक अंश ही रखा जा सकता है । फिर यह कैसे कहा जाता है कि भगवान प्रत्येक परमाणु में भी पूर्णतया व्याप्त हैं ? इस का यह प्रत्युत्तर है कि सातवीं गाथा में उक्त रीति से वैदिक लोग भगवान के स्वरूप-रूप-गुण आदियों को श्रुति के आधार से ही ठीक जानते है, न तु अनुमानादि प्रमाणांतर से । और श्रुति कहती है कि भगवान समस्त चेतनाचेतनविलक्षण हैं और अत्यद्भुत शक्तियुत हैं । अद्भुतशक्ति कहने का यह अर्थ है कि भगवान की जैसी शक्ति दूसरे किसी चेतन में अथवा अचेतन में उपलब्ध न हो सकती है । अतः भगवान की शास्त्रोक्त विशेषता का, उसके लोकविलक्षण होने पर भी, स्वीकार करना उचित व आवश्यक है ।।

**[ब्रह्मसूत्र का प्रमाण]**

परब्रह्म को जगत्कारण न माननेवाले सांख्य ने वेदांत मत पर एक आक्षेप किया - 'ब्रह्म को ही कारण और कार्य मानना असंगत है ; क्यों कि अगर ब्रह्म कार्य हो, तो समग्र

ब्रह्मस्वरूप कार्य में उपयुक्त हो जाता ; फिर कारण होने के लिए वह बचता कैसे ? इस दोष की निवृत्ति के लिए अगर कहा जाय कि ब्रह्म का एक अंश कार्य बनता है और दूसरा कारण, तो उस को सावयव मानना पडेगा ; तथा च उस को निरवयव बताने वाली श्रुति से विरोध होगा । एवं च दोनों पक्षों के दोषयुत होने से ब्रह्मकारणत्ववादको ही छोड देना उचित है' । भगवान बादरायण इस वाद का प्रत्युत्तर देते हैं - 'श्रुतेस्तु शब्दमूलत्वात्' (ब्र.सू.२-१-२६) । इस का यह तात्पर्य है - 'भगवान के जगत्कारणत्वादि धर्म शास्त्रप्रतिपाद्य हैं ; शास्त्रमात्र से ज्ञातव्य अर्थों का लोकदृष्टि के अनुसार विवेचन करना अनुचित है । अतः भगवान के बारे में कुतर्क करना अनुचित है' । इसी प्रकरण में श्रीभाष्यकार स्वामीजी पूर्वोक्त नैयायिक संमत जाति का दृष्टांत देते है । और भी श्रुतप्रकाशिका, वेदार्थसंग्रहव्याख्या, तात्पर्यदीपिका, उपनिषद्भाष्य, श्रीविष्णुसहस्रनामभाष्य, न्यायसिद्धाञ्जन इत्यादि ग्रंथों में इस विषय का बहुत खुलासा किया गया है । (सहस्रगीति-संस्कृतव्याख्यान में इन का विवेचन किया गया है ; वहां देख लेना) ।।

**कर विशुम्बु एरि वळि नीर्निल मिवैमिशै**
**वरनविल् तिरल्वलि अळिपोरैयाय् निन्न**
**परनडिमेल् कुरुहूर्च्चडहोपन् शोल्**
**निरनिरै यायिरत्तु इवै पत्तुम् वीडे ।। ११ ।।**

**।। सहस्रगीत्यां प्रथमशतके प्रथमदशकं समाप्तम् ।।**

**(गाथा) -** **सूक्ष्माकाशतलानलानिलजलावन्यात्मकास्तद्गुणा-**
**श्श्लाघ्याश्शब्दसुतापशक्तिधरताशैत्यानि चाधारता ।**
**एवं सर्वविधात्मकस्य परमस्यास्यैव पादाम्बुजे**
**साहस्त्रे दशकं शठारिरचिते चैतत्स्वभक्त्याऽर्पितम् ।। ११ ।।**

**।। सहस्रगाथारत्नावल्यां प्रथमशतके प्रथमदशकं समाप्तम् ।।**

[प्रतिपदार्थः]

**विवरणम् - दृढाकाशतेजोवायुजलपृथिवीसमवेतानां श्रेष्ठशब्द, दहनसामर्थ्य, बल, शैत्य, क्षमागुणानां निर्वाहकस्य परमपुरुषस्य दिव्यपादविषये कुरुकापुरावतीर्ण श्रीशठकोपमुनिना विज्ञापिते शब्दार्थपुष्कलगाथासहस्त्रे एतद्दशकम् मोक्षप्रदम् ।।**

**[फलश्रुत्युपपत्तिः]**

सहस्रगीत्याम् अस्यां प्रतिदशकं च अन्ते फलश्रुतिगाथा निबध्यते । आप्तोक्तत्वप्रत्ययाय स्वनामनिर्देशः क्रियत इति वेदितव्यम् । श्रीसरोयोगिप्रभृतिश्रीभक्तिसारमुनीन्द्रपर्यन्ताः चत्वारः, श्रीपाणसूरिश्चेति पञ्चैते दिव्यसूरय एवं फलश्रुतिगाथां नानुजगृहुः । श्रीशठकोप-मधुरकवि-कुलशेखर-भट्टनाथ-गोदा-भक्ताङ्घ्रिरेणु-परकालमुनीन्द्रास्तु फलश्रुतिगाथाप्रणेतारश्च । अनन्यप्रयोजना उत्तमाधिकारिणो न किमपि फलं कामयेरन्निति स्थिते परमैकान्तिनो दिव्यसूरयः किमर्थं फलश्रुतिं निबध्नन्तीति नाशङ्कनीयम् । भगवान् भक्तानां सकलफलप्रद इति तत्प्रभावप्रख्यापने पर्यवसानमस्य बोध्यम् । फलविशेषलिप्सया केचित् प्रबन्धेऽस्मिन् प्रवणा भवेयुरित्यपि अभिसन्धिस्स्यादेव ।।

**[भूतगुणानामपि परमपुरुषायत्तत्वम्]**

स्वकृतिविषयभूतः परमपुरुषः पादद्वयेन विशेष्यते । पञ्चभूतगुणपञ्चकस्य नियामकः स इत्युक्तं भवति । प्रथमपादे निर्दिष्टानां पञ्चानां भूतानां गुणाः क्रमेण द्वितीयपादे निर्दिश्यन्ते । आकाशस्य गुणश्शब्दः, तेजसो गुणो दहनशक्तिः, वायोर्गुणो बलम्, जलस्य गुणः शैत्यं, पृथिव्या गुणः क्षमा । एवंविधगुणपञ्चकस्वरूपः परमपुरुष इति सामानाधिकरण्येन कथनं निर्वाह्यनिर्वाहकभावनिबन्धनम् । भूतानीव भूतानां गुणा अपि परमपुरुषायत्ता इत्युक्तं भवति ।।

**[सहस्रगाथाप्रस्तावस्य भगवद्गुणानन्त्यं कारणम्]**

प्रथमदशकस्यास्यैवावसाने सहस्रगाथाप्रस्तावः सहस्रगाथाविज्ञापनसंकल्पवत्तां स्वस्य कथयतीति न मन्तव्यम् । यतो हि तादृशेन संकल्पेन नोपचक्रमे मुनिवरः । अपि तु स्वानुबुभूषितस्य भगवतः स्वरूपरूपगुणविभूतिचेष्टितानामानन्त्येन सहस्रं गाथा अवतरेयुरिति ज्ञानदृशा समीक्ष्य समुदीरितमिति प्रतिपत्तव्यम् ।।

**।। प्रथमशतके प्रथमदशकविवरणम् समाप्तम् ।।**

[प्रतिपदार्थ]

**हिन्दी - दृढ आकाश, तेज वायु, जल, पृथिवी - इन में रहनेवाले श्रेष्ठ शब्द, जलाने की शक्ति, बल, शैत्य व क्षमा नामक गुणो के निर्वाहक परमपुरुष के श्रीपाद के बारे में श्री कुरुकापुरी के श्री शठकोप सूरी से विज्ञापित शब्दपुष्टि व अर्थपुष्टि से यु हजार गाथाओं के बीच में, यह दशक मोक्षप्रद है ।।**

[सारार्थ]

प्रकृत गाथा का यह तात्पर्य है कि 'रसोऽहमप्सु कौन्तेय' इत्यादि भगवद्गीतोक्त प्रकार से पंचभूतों के असाधारण पांच गुणों के निर्वाहक परमपुरुष के पादारविंदो की स्तुति करते हुए, श्री कुरुकापुरी में अवतीर्ण श्री शठकोपसूरी से अनुगृहीत एक हजार गाथावाले इस दिव्यप्रबंध के इस पहले दशक का पाठ करनेवाले संसारबंधन से छूट कर परमपद पहुँचेंगे ।।

[फलश्रुति का औचित्य]

इस सहस्रगीति के एकैक दशक के अंत में एकैक फलश्रुति गाथा है, जिस में उस दशकपाठ का फल बताया जाता है और कवि का नाम भी अंकित किया जाता हैं । भगवान को ही उपाय उपेय इत्यादि सब कुछ माननेवाले परमभागवतोत्तम सहस्रगीति के अध्ययन से किसी लौकिक अथवा पारलौकिक फल को प्राप्त करना नहीं चाहते ; स्वयंप्रयोजन होने से अथवा तत्वहित पुरुषार्थ ज्ञान प्राप्ति के लिए अथवा भगवद्गुणानुभव के साधन होने से ही वे इस का अध्ययन करते हैं । अत: उन के लिए यह फलकीर्तन व्यर्थ प्रतीत हो सकता है । तथापि दूसरे लोग इन फलों में आशा रखकर इन को पाने के उद्देश्य से इस ग्रंथ का नियमपूर्वक पाठ कर सकते हैं । और एक बात यह भी है कि कोई इस का फल चाहें या न चाहें, इस महान ग्रंथ की यह महिमा तो है ही कि इस के पाठ से नानाप्रकार के लौकिक व पारलौकिक फल मिल जाते हैं । अत: इस वैभव का कीर्तन करना आवश्यक है । एवं इस में कहे जानेवाले फल भी केवल क्षुद्र सांसारिक फल नहीं हैं ; वरन् स्वरूपानुरूप फल ही होते हैं । यद्यपि क्वचित् क्वचित् क्षुद्र फल भी कीर्तित होते हैं ; तथापि समझना चाहिए कि वे भी फल भगवद्भागवताचार्यसेवा करने में उपयुक्त होने के कारण भगवद्भक्तों के अपेक्षित ही होते हैं । इन कारणों से फलश्रुति की आवश्यकता समझी जा सकती है ।।

[नामांकन का औचित्य]

एवं नामांकन भी आवश्यक है । कवि के नाम सुनने से वाचकों को स्पष्ट विदित होता है कि यह ग्रंथ अमुक महात्मा से विरचित है ; अत: हमें ग्राह्य है । पाठकों को वारंवार आळ्वार के शुभ नामोच्चारण करने का भाग्य भी मिल सकता है । यह भी इतिहास प्रसिद्ध है कि एक समय में जब ये सभी दिव्य प्रबंध लुप्त हो गये थे, तब अकस्मात् किसी के मुख से श्रीनाथमुनि स्वामीजी ने सहस्रगीति का एक दशक सुना । उस की ग्यारहवीं गाथा में यह

उल्लेख था - 'श्रीकुरुकापुरी के श्रीशठकोपसूरी से विरचित सहस्रगीति के अंतर्गत इस दशक का पाठ करनेवाले......' । इस से उन के मन में पूर्ण सहस्रगीति को पाने की इच्छा हुई और वे श्रीकुरुकापुरी पधारे । वहां बडी तपस्या कर प्रसन्न आळ्वार की कृपा से उन्हों ने समग्र दिव्यप्रबंधों का उपदेश पाया । इस से स्पष्ट होता है कि फलश्रुति गाथा में कविनामांकन के होने से ही यह काम बना । अतः समझना चाहिए कि ऐसे प्रयोजनों को लक्ष्य कर स्वयं भगवान ने ही ख्यातिलाभ पूजादि में विरक्त आळ्वार के श्रीमुख से भी स्वकीय शुभ नाम निकलवा दिया । परंतु इस में भी एक विशेषता है । श्री भूतयोगी, श्री सरोयोगी, श्री महदाह्वययोगी, श्री भक्तिसारयोगी और श्री पाणसूरी नामक पांच दिव्यसूरियों के ग्रंथों में न तो फलश्रुति देखी जाती है, न वा कविनामांकन है । दूसरे आळ्वार अपने शुभनाम का अंकन करते हैं । अस्तु ।।

**[ग्रन्थाकार की परिकल्पना]**

पहले दशक के अंत में ही हजार गाथाओं की बात करने से शायद वाचकों को ऐसा लग सकता है कि आळ्वार ने पूरी हजार गाथा गाने के संकल्प से युक्त होकर ही इस का प्रारंभ किया । परंतु यह भावना गलत है । क्यों कि यह तो अनुभवग्रंथ है । अर्थात् जैसे जैसे आळ्वार भगवान की विशेषकृपा से उपलब्ध उन के अनुभव करने में उतरे, वैसे वैसे अनुभवजनित-भावनाविशेषों के परीवाह रूप से, उन के श्रीमुख से श्रीसूक्तियां निकलने लगीं । तथाच यह अर्थ सिद्ध हुआ कि आळ्वार ने अपने प्रयत्न से इस ग्रंथ की रचना नहीं की । तो भी यह भी एक बात सत्य है कि भगवान की कृपा से आळ्वार उभयविभूतिगत, भूतभविष्यद्वर्तमान कालों से संबद्ध समस्तवृत्तांत जानने में समर्थ सर्वज्ञ बने थे । अतः इस प्रबंध का उपक्रम करते हुए उन्हों ने समझ लिया कि भगवान के जिन स्वरूप रूप गुणादियों का अनुभव करने को वे प्रवृत्त हुए, उन का विवरण करने के लिए एक हजार गाथाओं की आवश्यकता है । अर्थात् ज्ञानदृष्टि से आळ्वार को विदित हुआ कि अपने से उपक्रांत इस प्रबंध में एक हजार गाथाएं होंगी ।।

**।। पहले शतक का पहला दशक का हिन्दीव्याख्यान समाप्त हुआ ।।**

**।। आळ्वार तिरुवडिहळे शरणम् ।।**

## प्रथमशतके द्वितीयदशकम्

### [अवतारिका]

### [परोपदेशप्रवृत्तिः न स्वानुभवविरक्त्या]

**विवरणम् -** परोपदेशे प्रवर्तते मुनिवरोऽस्मिन् दशके । अधस्तनदशके संपन्नो भगवत्परत्वानुभवो विलक्षणमहोत्सवानुभवनिर्विशेषो ह्यासीत् मुनिवरस्य । तथा नाम परमं पुमांसमनुभूतवान् मुनिवरः तत्तादृशात् स्वानुभवादुपरतस्सन् परोपदेशे प्रवर्तत इतीदं हन्त कथं समघटत ? अनुभूतस्य विषयस्य किमहो सीमाम् अवैक्षत ? उताहो अलमनुभूतेनेति विरज्यते स्म ? इति चेत् ; न न ; परमयोगिनामपि वाङ्मनसापरिच्छेद्य-स्वरूपस्वभावो भगवानिति असकृत् स्वयमेव कथयन् मुनिवरः सीमां समवलोकितवानिति न मनसाऽपि चिन्तयितुं शक्यम् ।।

### [परोपदेशः स्वानुभवपरिपाक एव]

अलमनुभूतेनेति विरक्तिश्च सुतरां दुर्वचा मुनिवरस्य । यतो ह्यसौ स्वात्मानमुपरिष्टात् वक्ष्यति 'सदातनत्वेऽपि तदातनत्ववन्नवीभवत्प्रेमरसप्रवाहकम्' । **'एप्पोळुदुम् नाळ् तिङ्गळाण्डूळियूळितोरुम् - अप्पोळुदैक्कप्पोळुदेन्नारावमुदमे'** (२-५-४) इत्येषा गाथा मुनिवरस्य भगवदनुभवे अत्यन्तापर्याप्तिं हि दर्शयति । अनुक्षणमम्बुधिवदभिवर्धमानप्रेमसंपद्भरस्यास्य मुनेः अलमनुभूतेनेति विरक्तिस्सर्वथाऽपि न शक्यशङ्का । कथं तर्हि परोपदेशे प्रवृत्तिः ? किमस्य आचार्यपदवीप्रेप्सा समजनि ? इति चेत् ; हा हन्त ! **'नीशनेन् निरैयोन्नुमिलेन्'** इत्यादिभिः स्वात्मानम् अधमाधममसकृत् अनुसंदधानस्यास्य साऽप्यसंभाविनी । उच्यते, श्रूयताम् । परोपदेशसमयेऽपि स्वानुभववैकल्यं नास्य मनागपीति प्रथमतोऽवधारणीयम् । स्वानुभवस्यैव परिपाकदशा काचिदियं परोपदेशो नाम ।।

### [उपदेशेन उपदेश्यजनविनयनमुद्दिष्टम्]

लोके महाप्रवाहेऽवगाहमानो जनस्तावदेकाकी नावतरति, अपि तु भूयसस्संघानन्विष्यतीति दृष्टमिदम् । तथा अम्भोनिधेरप्यतिशयिते भगवति विगाहनं स्वस्यैकाकिनो दुष्करमासीत् । **'एकस्स्वादु न भुञ्जीत भुञ्जीत बहुभिस्सह'** इति कथितत्वाच्च सहयोगार्थमन्यानवैक्षत । **'मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्'** (भ.गी.१०-९) इति गीतोक्तरीत्या च परेषां सहयोगः काङ्क्षणीय आसीत् । **'कैङ्कर्यनित्यनिरतैर्भवदेकभोगैः नित्यैरनुक्षणनवीनरसार्द्रभावैः । नित्याभिवाञ्छितपरस्परनीचभावैः मद्दैवतैः परिजनैस्तव**

**संगसीय'** ।। (श्रीवैकुण्ठस्तवे ७७) इत्युक्तरीत्या उत्तमाधिकारिभिस्सह संभूय अनुबुभूषुस्सन् भौमेषु जनेषु कटाक्षपातमतनोत् । हन्त ! सर्वेऽपि जना अनन्तक्लेशभाजने घोरे संसारसागरे निमग्नाः अन्नपानादिलिप्सापरवशाः परिभ्रमन्त आसन् । भगवद्विषये स्वात्मनो रूचिरिव तेषां शब्दादिविषयान्तरेषु अतिवेलाऽभिरुचिरभिवर्तत इत्यवैक्षत । तत्तादृशैरनुभूयमानान् क्लेशांश्च न सोढुम् अशक्नोत् । अथ तेषां विनयने समुदपद्यत सुमहत्तरं कुतूहलं मुनिवरस्य । कथमेषां विनयनं सुकरमिति विमर्शोऽप्यजनि । 'एते खलु चैतन्यशालिनो वर्तन्ते ; विषयान्तरेषु असमीचीनान्युपेक्ष्य समीचीनान्युपाददते ह्यमी ; भोज्येषु शाकशलाटुकादिष्वपि सदसद्विवेचनेन असन्ति परित्यज्य सन्ति परिगृह्णन्ति खलु । एतादृशाः अमी यदि परिपूर्णविवेकशक्तिं प्रयुञ्जीरन् तर्हि अनायासतो विनीता भवितारः । भगवद्विषयभोग्यतां विषयान्तरदुस्स्थतां च यदि वयं सम्यगुपपादयेम, तर्हि स्वयं विमृश्य हेयविषयविसर्जनपूर्वकं प्राप्तविषयप्रवणा अवश्यमेव भवेयुः । अतश्च किंचिदुपदिशेम' इति समालोच्य, उपादेयविषयसाद्गुण्यसमृद्धिं हेयविषयदौर्गुण्यपूर्तिं च अतिसंक्षिप्ताभिः अतिमधुराभिः दिव्यसूक्तिभिः उपदेष्टुम् उपक्रमते ।।

**[साधारणजनोज्जीवनाय शास्त्रमर्यादातिलङ्घनम्]**

ननु **'परीक्ष्य लोकान् कर्मचितान्......स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्',** (मुं.उ.१-२-१२) **'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'** ।। (भ.गी.४-३४) इत्याद्युक्तरीत्या प्रणिपाताभिवादनपरिप्रश्नसेवावैयग्र्येण चिरमनुवृत्तिशीलेभ्यः आस्तिक्यामानित्वादिशिष्यलक्षणसंपन्नेभ्यः सच्छिष्येभ्यः चिरपरीक्षणपूर्वकम् अषट्कर्णतयोपदेष्टव्यान् महार्थान् कथमसौ मुनिवरः एवमेव लीलया समुपदेष्टुमुपचक्रमे ? भगवानपि विशिष्य ह्यादिशति **'इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति'** (भ.गी.१८-६७) इति । सर्वमिदं जानन्नपि भगवान् मुनिवरोऽसौ साधारणीं प्रार्थनामपि विना कथमुपदिशति ? इति चेदुच्यते । मुनिवरस्यास्य भक्तिर्यथा शास्त्रमर्यादायां नावतिष्ठते, तथा एतादृशी चर्याऽपि शास्त्रमर्यादां नैवानुवर्तते । शास्त्रविधीन् अवधार्य उपदेष्टारः अनुवृत्तिप्रसन्नाचार्याः कीर्त्यन्ते । परानर्थासहिष्णुत्वभूम्ना अनुपदिश्य वर्तितुमशक्नुवानाः एवंविधाः उत्तमपुरुषाः मृग्याः एव हि भूतले । प्रह्लादो, विभीषणो, मैथिलीति कतिचिदेव व्यक्तिविशेषा ईदृग्गोष्ठ्यां गण्यन्ते । सर्वथा तानप्यतिशयानोऽसौ मुनिवरः भगवन्तं रामानुजार्यमेव केवलं स्वसाम्ये सहते ।।

हमारा कर्तव्य होगा । अर्थात् परिपूर्ण भगवदनुभव करने के कुतूहल से हमेशा यही प्रतीक्षा करना है कि अनुभवविरोधी यह शरीर कब छूटेगा । अत एव भक्तों की यह वाणी है कि **'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्'** (महा.भा.आश्व.प.४) अर्थात् भगवदाश्रयण करनेवाले लोग अपने आत्मकल्याण के लिए अपने अनुष्ठेय कर्म के पूर्ण होने के कारण उस विषय में निश्चिंत होकर प्रिय अतिथि के समान मृत्यु की प्रतीक्षा करते रहते हैं ।

**एणूपेरुक्कु अन्नलत्तु ओण्पोरुळ् ईरिल**
**वण्पुहळ् नारणन् तिण् कळल् शेरे ।। १० ।।**

**(गाथा) - अमितानन्द-सद्वस्तु-कल्याणगुणवारिधेः ।**
**श्रीमन्नारायणस्यैव पादाब्जं दृढमाश्रय ।। १० ।।**

**[प्रतिपदार्थ]**

**विवरणम् - असंख्येयान् ज्ञानानन्दस्वभावशालिनः जीवात्मवर्गान् नित्यसिद्ध-कल्याणगुणांश्च बिभ्रतः नारायणस्य आश्रितरक्षणैकशीलौ चरणौ भजस्व ।।**

**[श्रीमदष्टाक्षरमहामन्त्रविवक्षात्र उद्दिष्टा]**

एतावतीभिः गाथाभिः परात्परत्वेन सेव्यत्वेन च प्रोक्तं दैवतं नारायणशब्दाभिलप्यमिति गाथयाऽनया प्रकाश्यते । अतिविलक्षणानां अनन्तानां च जीवराशीनां स्वामी, असंख्येयानवधिककल्याणगुणगणनिधिश्च यो भगवान्, स नारायणनामा ; तस्यैव चरणसमाश्रयणं प्राप्तमिति प्रतिपादितं भवति । यद्यप्यत्र नारायणशब्दमात्रं निर्दिष्टम्, तथाऽपि श्रीमदष्टाक्षरमहामन्त्रविवक्षैवात्रेति संमतम् आचार्याणाम् । नारायणस्य यद्विशेषणद्वयमिह निवेशितम् तत् नारायणशब्दार्थप्रतिपादनरूपं वेद्यम् । अनन्तानां स्वप्रकाशरूपाणां जीवानाम् आश्रयत्वं नित्यनिरवद्यकल्याणगुणानाम् आश्रयत्वं चैव हि नारायणशब्दप्रवृत्तिनिमित्तम् ।

**[आत्मानः असंख्याकाः कल्याणगुणशालिनश्च]**

मूले 'ओण्पोरुळ्' इति शब्देन 'विलक्षणं वस्तु' इत्यर्थकेन जीवात्मानः उच्यन्ते । तेषामेव विशेषणं 'एण्पेरुक्कु' इति, 'अन्नलम्' इति च । क्रमेण अनन्तसंख्याकत्वं प्रजापतिवाक्योदितकल्याणगुणशालित्वं च तदर्थः । जीवात्मानः संख्यानन्त्ययुक्ताः इति हि वेदान्तिनः । तथा **'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको**

**विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः......**' (छा.उ.८-७-१) इति प्रजापतिवाक्य-प्रसिद्धकल्याणगुणशालिनश्च ते । एतादृशानां जीवानाम् ओण्पोरुळ् इति शब्देन प्रतिपादनं तु '**अत्रायं पुरुषस्स्वयंज्योतिर्भवति**' (बृ.उ.६-३-९) इति प्रमाणानुरोधेनेति प्रतिपत्तव्यम् ।

**[अनन्तकल्याणगुणकः भगवान्]**

अथ 'ईरिल वण्पुहळ्' इत्यनेन अनन्तकल्याणगुणकता कथिता भवति । स्वरूपनिरूपकाः, निरूपितस्वरूपविशेषणभूताः, दिव्यमंगलविग्रहाश्रिताः, आश्रयणसौकर्यापादकाः, आश्रितकार्यापादकाश्च यावन्तस्सन्तो गुणाः प्रथिताः, तावन्तोऽप्यत्र ग्राह्याः । नित्यैस्त्रिविधचेतनैः नित्यसिद्धैः कल्याणगुणगणैश्च समन्वितस्य नारायणस्य श्रीमदष्टाक्षरमहामन्त्रम् आलम्बनत्वेन स्वीकृत्य भजतेति प्रकृतगाथाहृदयं प्रतिपादयन्ति आचार्याः ।

**[अष्टाक्षरमहामन्त्रार्थगर्भितेयं गाथेत्यत्र इतिहासानुसन्धानम्]**

अत्रायमितिहासोऽनुसन्धेयः । श्रीपराशरभट्टार्यः (तदनुजः) श्रीराममिश्रार्यः इत्युभौ यमलौ श्रीवत्साङ्कमिश्रपुत्रप्रवरौ । एतयोः शैशवे एव भगवता रामानुजेन गोविन्दभट्टारकः (एम्बार् नामा गुरुवरः) आचार्यपदे निवेशितः इति गुरुपरम्पराप्रसिद्धमिदम् । अत एव भट्टपादकृति-भगवद्गुणदर्पणाख्य-सहस्रनामभाष्योपक्रमे 'वन्दे गोविन्द' इति स एव गोविन्दभट्टः प्रधानाचार्यत्वेनोपश्लोकितः । एतौ भट्टपादश्रीराममिश्रौ स्वपितृपादसन्निधौ सहस्रगीत्याः अस्याः अर्थग्रहणनिरतौ आस्ताम् । तदात्वे प्रकृतगाथार्थविवरणे प्रसक्ते सति, 'श्रीमदष्टाक्षरमहामन्त्रार्थगर्भिताया अस्या गाथायाः स्वाचार्यसकाश एवार्थश्रवणं युक्तम् ; ततः स्वाचार्यसविधे गत्वा शृणुतम्' इति प्रथमतः आदिश्य, अनुपदमेव 'अस्मिन् दशके द्वितीयगाथायां शरीरास्थिरत्वमुक्तं खलु, अतश्च विलम्बो न सह्यः ; अत्रैव शृणुतम् 'इत्याज्ञाप्य मूलमन्त्रोपदेशपूर्वकम् एतद्गाथार्थम् उपपाद्य, '**इयं गाथा श्रीमदष्टाक्षरमहामन्त्रार्थमयीति प्रतिपद्येथाम्**' इत्यन्वग्रहीत् (पिता) श्रीवत्साङ्कमिश्रगुरुः - इति व्याख्यातारः आचार्यवर्याः अनुगृह्णन्ति । अत एव श्रीपराशरभट्टार्यस्य उभौ आचार्यौ प्रथितौ । '**तदिदं वन्दे गोविन्दतातौ**' इति श्रीसूक्त्या च ससंवादम् इत्यवसेयम् ।

**[चरणौ आश्रितरक्षणे दृढौ इत्युक्तिः]**

गाथायामस्यां भगवतः चरणयोः दृढत्वमुक्तम् ; तत् आश्रितरक्षणे सततजागरूकत्व-रूपम् अवगन्तव्यम् । भगवतः अच्युतत्वप्रसिद्धिं चरणावेव परिपालयतः इति ग्रहीतव्यम् । '**अनतिक्रमणीयं हि चरणग्रहणम्**' ।

**[ प्रतिपदार्थ ]**

**हिन्दी - असंख्यात, (एवं) वैसे (अर्थात् श्रेष्ठ) ज्ञानादि गुणवाले श्रेष्ठ वस्तु जीवात्माओं का, (तथा) अंत रहित (अर्थात् अनंत) कल्याणगुणों का धारण करनेवाले (श्रीमन्) नारायण के (आश्रितसंरक्षण करने में) सुदृढ पादों का आश्रयण करो ।**

**[ इस गाथा में श्रीमदष्टाक्षरमहामन्त्र के अर्थ का संकेत है ]**

इस गाथा में, इस दिव्यप्रबंध में आदि से परात्परतया और सेव्यतया प्रतिपादित परदेवता का असाधारण दिव्य नाम 'श्रीमन्नारायण' बताया जाता है । इस का यह तात्पर्य है कि अति विलक्षण ज्ञानानंदवाले अनंत जीवात्माओं के स्वामी, एवं असंख्य कल्याणगुणगणविभूषित, शुभ नारायण नामधारी जो भगवान हैं, उन के भक्तजनरक्षणदीक्षित पादारविंदों का आश्रयण करना आवश्यक व कल्याणकारक होता हैं । यहां पर नारायण शब्द से आळ्वार नारायण मंत्र (अर्थात् श्रीमदष्टाक्षर महामंत्र) का ही संकेत कर रहे हैं और साथ ही उस का अर्थ भी बता रहे हैं । तथाहि - उक्त श्रीमंत्र में नारायण शब्द का यही अर्थ है कि भगवान समस्तजीवों के धारक हैं, एवं अनंतकोटिकल्याणगुणपूर्ण हैं ।

**[ आत्मा असंख्य और गुणवाले हैं ]**

मूलगाथा में जीवात्मा के वाचकतया 'ओण् पोरुळ्' शब्द प्रयुक्त है ; इस का अर्थ होता है विलक्षण, माने श्रेष्ठ वस्तु । इन के दो विशेषण दिये गये हैं - 'एण् पेरुक्कु', 'अन्नलम्' ; माने संख्यातीत एवं वैसे गुणवाले । वेदांतदर्शन में आत्माएं अनंत मानी जातीं हैं ; छांदोग्य उपनिषद में प्रजापतिवाक्य कहलानेवाले 'य आत्मा अपहतपाप्मा' इत्यादि वाक्य में बताया गया है कि परिशुद्ध जीवात्मा के ये आठ गुण होते हैं - पाप, जरा, मृत्यु, शोक, बुभुक्षा और पिपासा, इन से विमुक्त रहना और सत्यकाम तथा सत्यसंकल्प होना । इन को गुणाष्टक कहते हैं ।

**[ भगवान अनंतकल्याणगुणगणयुक्त हैं ]**

'ईरिल वण्पुहळ्' कहने से स्वरूपनिरूपक, निरूपित स्वरूपविशेषण, दिव्यमंगलविग्रहाश्रित, आश्रयणसौकर्यापादक, आश्रितकार्यापादक इत्यादि श्रेणियों में विभक्त भगवान के अनंत कल्याणगुण सूचित किये जाते हैं । तथा च इस गाथा का पूर्वाचार्योपवर्णित यह तात्पर्य है कि श्रीमदष्टाक्षर मंत्र के अवलंबन से नित्य त्रिविध चेतनों से एवं नित्य कल्याणगुणों से युक्त श्रीमन्नारायण का भजन करो ।

**[इस में श्रीमदष्टाक्षरमन्त्रार्थ का संकेत है - इस पर इतिहास का उल्लेख]**

यहां पर एक इतिहास अनुसंधेय है - श्रीकूरेश स्वामीजी के दो यमल पुत्र थे - श्रीपराशरभट्टार्य स्वामीजी व श्रीराममिश्रार्य स्वामीजी । इन के बचपन में ही श्रीरामानुजाचार्य स्वामीजी ने श्री गोविंद भट्टारक स्वामीजी को इन के गुरु निश्चित कर दिया था । अतः श्री गोविंद स्वामी ने ही इन को पंचसंस्कारपूर्वक मंत्रोपदेश दिया था । तथापि स्वयं श्री कूरेश स्वामीजी ने भी इन को सामान्य व विशेष शास्त्रों का अध्यापन किया । अतः इन के दो गुरु हुए - (अपने पिता) श्रीकूरेशस्वामीजी और श्री गोविंदभट्टारक स्वामीजी । इस अर्थ की सूचना श्री पराशरभट्टार्य विरचित श्री विष्णुसहस्रनामभाष्य के मंगलश्लोक में (वन्दे गोविन्दतातौ) मिलती है, जहां पर उक्त दोनों आचार्यों को नमस्कार किया गया है । भट्टार्य स्वामीजी अपने छोटे भाई के साथ अपने पिताजी के पास सहस्रगीति का अध्ययन करते थे । जब प्रकृत गाथा आयी, तब कूरेशस्वामीजी ने कहा, 'यह गाथा श्रीमदष्टाक्षर महामंत्र की व्याख्या है ; अतः अपने गुरु से इस का अर्थ सुन लो' । बालक ऐसे ही करने उठे । तब श्री स्वामीजी ने उन को वापस बुलाकर आज्ञा दी - 'अभी, अर्थात्, इस दशक की दूसरी गाथा में आळ्वार ने उपदेश दिया कि यह शरीर बिजली से भी अस्थिर है । अतः ज्ञान प्राप्त करने में विलंब करना अनुचित है । अब तुम अपने आचार्य को कहां ढूँढोगे और उन से कब उपदेश पाओगे ? अतः मुझसे ही यह अर्थ जान लो' । फिर उन्होंने उन बालकों को मंत्र मंत्रार्थों का उपदेश देकर, प्रकृत गाथार्थ का भी उपदेश देकर, कहा - 'समझ लो कि यह गाथा अष्टाक्षरमंत्र का अर्थ-विवरण करती है' ।

**शेर्त्तडत् तेन्कुरुहूर् शडहोपन् शोल्**
**शीर्त्तोडैयायिरत्तु ओर्त्त विप्पत्ते ।। ११ ।।**

**।। इति सहस्रगीत्यां प्रथमशतके द्वितीयदशकं समाप्तम् ।।**

**(गाथा) - रम्ये तटाकभूयिष्ठे कुरुकानगरे प्रभोः ।**
**शठकोपस्य दिव्योक्तिसाहस्त्रे दशकं त्विदम् ।। ११ ।।**

**।। इति सहस्रगाथारत्नावळ्याम् प्रथमशतके द्वितीयदशकं समाप्तम् ।।**

[प्रतिपदार्थः]

**विवरणम् - जलाशयभरितायां दक्षिणदिग्वर्ति - श्रीकुरुकापुर्यां (अवतीर्णस्य) श्रीशठकोपमुनेः दिव्यसूक्तिभूते अतिविलक्षणशब्दसंदर्भसमन्विते गाथासहस्रे इदं दशकं विमर्शपूर्वकमुक्तम् ।**

**[इदं दशकं भगवन्तं विमृश्य गीतम्]**

एतद्दशकं **'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः'** (महा.भा.आनु.प.१७८-११) इत्युक्तरीत्या सारासारविमर्शपुरस्सरमन्वग्राहि इति प्रतिपादितम् अनया चरमगाथया । फलश्रुतिगाथेति प्रसिद्धासु दशकान्त्यगाथासु नियमेन फलप्रतिपादनमेव कार्यमिति न नियन्त्रणा । दशकस्वरूपकथनादिभिरपि चरमगाथाः क्वचिन्निबध्यन्ते । अत्र दशकस्वरूपकथनमात्रमेव । **'भगवद्गुणप्रतिपादकेऽस्मिन् सहस्रे इदं दशकं भगवन्तं विमृश्य कथितम्'** इति (द्राविडी) षट्सहस्रिकासूक्तिः ।

गाथोपक्रमस्थम् शेर् इति पदं क्रियापदत्वेन स्वीकृत्य **'इदं दशकं सेवस्व'** इत्यर्थमपि वर्णयन्ति आचार्याः । एकवचनं जात्यभिप्रायमिति प्रागेवोक्तम् ।

**।। इति प्रथमशतके द्वितीयदशकविवरणं समाप्तम् ।।**

**[द्रमिडोपनिषत्संगतौ-एतद्दशकसारार्थसंग्राहकश्लोकः]**

**संसारिणोऽप्यनुजिघृक्षुरसौ दयालुः**
**अल्पास्थिरेतरपुमर्थरुचिं निरस्यन् ।**
**तत्त्यागपूर्वहरिभक्तिसुधां दुहानाम्**
**उद्दीपनीमुपदिदेश मुनिर्द्वितीये ।।**

[प्रतिपदार्थ]

**हिन्दी - जलाशय-पूर्ण, दक्षिणदिशास्थ श्री कुरुकापुरी के (माने उस में अवतीर्ण) श्रीशठकोपसूरि की (दिव्य) वाणी, अतिविलक्षण शब्द विरचित सहस्रगीति में (अंतर्गत), यह दशक सविमर्श गाया गया है ।।**

**[यह दशक भगवान का विवेचनात्मक है]**

अथात् तालाबों से परिवृत श्रीकुरुकापुरी में अवतीर्ण श्री शठकोपसूरि ने, सहस्रगीति का प्रकृत दशक बडी सावधानी से, अर्थात् सारासार विमर्शन पूर्वक, गाया है । अथवा गाथा के उपक्रम के 'शेर्' शब्द को पूर्ण क्रियापद मानकर, ऐसा अन्वय कर कि 'ओर्त्त इप्पत्तु शेर्,' यह अर्थ बताया जा सकता है - **'सविमर्श गीत इस दशक का आश्रयण करो'** । सहस्रगीति के प्रत्येक दशक के अंत में फलश्रुति सामान्यतः होती है । किन्तु कदाचित्, यथा प्रकृत गाथा में, स्पष्ट फलश्रुति का अभाव भी देखा जाता है । प्रकृत दशक को बडे विवेचन पूर्वक गीत कहने से इस की श्रेष्ठता, अर्थात श्रेष्ठ अर्थ-प्रतिपादन-शीलता बतायी गयी ; अतः इस के अध्ययन करनेवालों को जो अच्छा ज्ञान मिलता है, वही सब से बडा फल है । अतः दूसरा फल कहने की आवश्यकता नहीं है ।।

**।। फहले शतक का दूसरा दशक का हिन्दी व्याख्यान समाप्त हुआ ।।**

**।। आळवार तिरुवडिहळे शरणम् ।।**



# प्रथमशतके तृतीयं दशकम्

**[अवतारिका]**

**विवरणम्** - सर्वस्मात्परो भगवानिति प्रथमदशके प्रत्यपादि । स एव भजनीय इति द्वितीयदशके प्रत्यपादि । अथ भजनीयत्वौपयिकं सौलभ्यमिह तृतीयदशके निरूप्यते ।

**[भगवान् सुखेन भजनीयः इत्युक्तिः]**

अधस्तनदशके उपदेशपात्रतयाऽभिसंहितानां संसारिणां हृदये इयमाशङ्का स्यात् - परात्परं भजतेति कथिते कथमिदं भजनं संघटताम् ? उभाभ्यामपि बाहुभ्यां विरहितं कमपि पुरुषमुद्दिश्य गजराजमधिरोहेति कथनमहो कथमर्थवत् स्यात् ? सर्वेश्वरस्तावत् **'कश्श्रीः श्रियः ? परमसत्वसमाश्रयः कः ? कः पुण्डरीकनयनः ? पुरुषोत्तमः कः ? । कस्यायुतायुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम्' ?** ।। (स्तो.र.१२) इत्यादिप्रमाणशतोपबृंहितनिरतिशयप्रभावशाली स कथमिव नीचैः संसारिभिः भजनीयस्स्यात् इति । तामिमामाशङ्कां निरसितुमेव प्रकृतदशकावतारः । बाहुद्वयविरहितस्य पुंसः स्वयमेव गजाधिरोहणं यद्यपि

दुश्शकम्; तथाऽपि सुशकमेव ननु स एव गजराजो यदि स्वात्मानमारोहणानुकूलम् अवनमय्य दिशेत्। तथा भगवान् हेयानामपि संसारिणां सुखेन भजनीयस्सन् स्वात्मानं बहुभिः प्रकारैरवनमयतीति स्वादिष्टम् उपपादनमत्र संपद्यते ।

**[भगवति परत्वं सौलभ्यं च]**

लौकिकेषु वस्तुबृन्देषु काष्ठलोष्टादिकं काञ्चनादिकं च पश्यामः । काष्ठलोष्टादिकम् अतिसुलभम्, काञ्चनादिकम् अतिदुर्लभम् इति स्थितम् । तथा च सौलभ्यदौर्लभ्ययोः वैयधिकरण्यं सिद्धम् । सुलभैः पदार्थैः नास्माकं प्रयोजनातिशयः; यैरस्ति प्रयोजनातिशयस्ते हन्त दुर्लभाः । गौरवशालीनि वस्तूनि दुर्लभानि भवन्ति, लाघवास्पदानि तु सुलभानि भवन्तीति प्रत्यक्षसिद्धम् । ये सर्वथाऽप्युपेक्षणीयाः पुरुषाः, ते रथ्यासु शतशस्सहस्रशश्च पर्यटन्ति । ये तु स्पृहणीयप्रेक्षणाः महाराजादयः, ते मृग्याः एव विलसन्ति । यदि व्यक्तिविशेषे परत्वसौलभ्ययोः सामानाधिकरण्यमनुभाव्यं स्यात्, स एक एव भगवान्नारायणः इति निश्चप्रचम् । भगवति परत्वमिव सौलभ्यमपि असमाधिकं ह्युल्लसति । परत्वदृष्ट्या भीतेः अनुत्पादाय सौलभ्यं स्थितम्; सौलभ्यदृष्ट्या अनुपेक्षणाय परत्वं स्थितम् ।

**[भगवति परत्वात् सौलभ्यं विशिष्यते]**

**'अनन्याधीनत्वं तव किल जगुर्वैदिकगिरः । पराधीनं त्वां तु प्रणतपरतन्त्रं मनुमहे'** ।। (व.स्त.२०) इति श्रीकूरनाथगुरुवरः आश्रितपारतन्त्र्यलक्षणं सौलभ्यमेव भगवतो नैसर्गिको वेष इति निर्धारयति । भाग्याधिकाः भक्तजनाः भगवतः सौलभ्यभूमानमेव भृशमनुभूय हर्षप्रकर्षम् अनुविन्दन्ति; शिशुपालसधर्माणो दौर्भाग्योपहतास्तु तदेव सौलभ्यं गर्हास्पदं कृत्वा हन्त प्रणश्यन्ति । स्नानपानसदनुष्ठानाद्यर्थम् उपकल्पिते तटाके केचन कण्ठे बध्वा शिलां गुर्वीम् निपत्य नश्यन्तीति, प्रदीपे शलभाः पतित्वा प्रणश्यन्तीति च ननु पश्यामः । एवमेव अनुभवरसिकानां दिव्यानुभवयोग्यं सौलभ्यं पापिनः केचन विदूष्य विनश्यन्ति चेत् कामं विनश्यन्तु । तावता भाग्याधिकानां भागधेयस्य का क्षतिः ? श्रीपराङ्कुशपरकालादीनां दिव्यसूरिवराणां भगवति परत्वानुभवापेक्षयाऽपि सौलभ्यानुभवे सुमहत्तरं कुतूहलमेधत इति पश्यामः । भगवानपि सौलभ्यप्रकाशनार्थमेव

रामकृष्णादिविभवावतारान् वितनोति । सौलभ्यपरमकाष्ठारूपकार्यबृन्दमध्ये गोवर्धनोद्धरणाद्यतिमानुषकार्यकरणं च सौलभ्यगौरवसंपादनार्थमेवेति परमार्थः । नवनीतचौर्यापराधनिमित्तेन दण्डनार्थं मात्राऽभिद्रुतो दधिभाण्डं शरणं वृण्वंश्च कृष्णस्तस्मै मुक्तिं प्रददाति । उलूखले दामनि सन्निबद्धस्सन् नारदशापाद्यमलार्जुनतां गतयोः कुबेरपुत्रयोः शापविमोक्षणविचक्षणो भवति । एवंविधाश्चर्याः कुहनागोपस्य पारेपरार्धम् । तदस्य स्वाभाविको वेषः परत्वं वा उत सौलभ्यं वेति निर्णेतुम् अशक्यम् । भगवांस्तु स्वयं गायति - **'तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः'** (भ.गी.८-१४) इति । पाण्डवदौत्यपार्थसारथ्यादिचरितविशेषैश्च सौलभ्यसीमानमेव समुल्लासयति । अवतारान्तरे च **'इमौ स्म मुनिशार्दूल ! किंकरौ समुपस्थितौ । आज्ञापय यथेष्टं वै शासनं करवाव किम्'** ।। (रामा.बा.कां.३१-४) इत्यादिकम् आचक्षाणः, स्वात्मनः **'अहं वेद्मि महात्मानम्'** (रामा.बा.कां.१९-१४) इत्याद्युक्तपरत्ववैदेशिकतां सौलभ्यैकनिरूपणीयतां च प्राचीकशत् ।

### [सौलभ्यप्रकाशकमिदं दशकम्]

सहस्रनामाध्याये **'विजितात्मा विधेयात्मा'** इत्यत्र भाष्यकर्तारश्शङ्कराचार्याः अविधेयात्मेति प्रतीकग्रहणपूर्वकं भगवतः परत्वप्रतिपादनपरतया तदिदं नाम व्याचचक्षिरे । भगवद्गुणदर्पणकृतो भट्टपादास्तु विधेयात्मेत्येव प्रतीकमुपादाय सौलभ्यपरतया व्याचख्युः । विजितात्मेति नाम च परे जितेन्द्रियत्वपरम् अभाषन्त । न कोऽपि रसोऽत्रेति मन्यमाना भट्टपादास्तु, 'भक्तैर्विजितः सर्वथा स्वायत्तीकृत आत्मा यस्य' इति परमोत्तुङ्गमर्थं बभाषिरे । दिव्यप्रबन्धरसिकानां भगवद्गुणविद्धानामेवंविधव्याख्याननिदानभूतमिदं दशकमिति, तत्रापि प्राथमिकी गाथा सारभूतेति च वेदितव्यम् ।

कदाचिद्भगवान् रामानुजः स्वशिष्यप्रवराय गोविन्दभट्टारकाय भगवतस्सौलभ्यं सुविशदमुपादिशत् । स च श्रोता महान्गुणविशेषेऽस्मिन्नतितरां रसिकश्च विद्धश्चाभूत् । तदात्वे रामानुजमुनीन्द्रेणैवमनुगृहीतम् - 'इतरे जनास्तावदिदं सौलभ्यमाकर्ण्य भगवन्तमतितरां हेयं मन्यन्ते । भाग्यभूम्ना हि भवानत्र रसिकश्च विद्धश्च भवति' इति इदं व्याख्यातारः पूर्वाचार्याः विलिखन्ति ।

### [भगवान भक्तों के अत्यन्त सुलभ हैं]

**हिंदी -** इस दिव्यप्रबंध के पहले दशक में भगवान परात्पर बताये गये ; दूसरे दशक में उन्हीं के ही भजन करने का उपदेश दिया गया ; इस तीसरे में भगवान के

सौलभ्य का वर्णन किया जाता है । तथा हि - पहले दो दशकों के उपदेश सुननेवालों के मन में यह शंका उत्पन्न हो सकती है - 'परात्पर भगवान का अत्यंत नीच संसारी हम कैसे भजन कर सकते हैं ? यदि हस्तपाद विरहित एक लंगडे को हाथी पर चढ बैठने का उपदेश दिया जाय, तो यह काम कैसे बन सकता है ? भगवान तो **'कः श्रीः श्रियः'** इत्यादि स्तोत्ररत्नपद्योक्तप्रकार, साक्षात् लक्ष्मीपति, परमसत्व के आश्रय, पुरुषोत्तमबिरुदधारी, और उभय विभूति के नायक हैं । फिर ऐसे सर्वश्रेष्ठ भगवान क्षुद्र कीट-प्राय हम से कैसे मिलते ? इस का एक ऐसा सुंदर समाधान यहां दिया जाता है 'यह तो ठीक है कि लंगडा स्वयं हाथी पर न चढ सकता है । परंतु यदि वह हाथी ही नम्र होकर उस को अपनी पीठ पर चढा ले, तो वह अनायास उस पर बैठ सकता है न ? इसी प्रकार, भगवान भी अपने को नाना प्रकारों से झुका कर भक्तों के लिए अत्यंत सुलभ होते हैं । अतः उन का भजन करना सुशक है' ।

**[भगवान का परत्व और सौलभ्य]**

लोक में हम देखते हैं कि मिट्टी, कंकड इत्यादि पदार्थ बहुत सुलभ होते हैं, सोना हीरा इत्यादि दुर्लभ होते हैं । उन में सुलभ वस्तुओं से हमारा काम बहुत कम रहता है और जिन से अधिक काम रहता है वे वस्तु कम मिलती हैं । मानवों में भी, जो हमेशा रास्ते में चलते फिरते देखे जाते हैं, वे प्रायशः साधारण व्यक्ति होते हैं, जिन से हमारा कोई विशेष प्रयोजन नहीं रहता ; किन्तु प्रभावशाली बडे लोगों से तो मिलना ही मुशकिल होता है । परंतु एक मात्र भगवान ऐसे व्यक्ति हैं, जो एकदम अत्यंत श्रेष्ठ एवं अत्यंत सुलभ होते हैं । इन दोनों प्रकारों में केवल एक के होने से काम नहीं चल सकता । परत्व के दर्शन से उत्पन्न भय मिटाने के लिए भगवान का सौलभ्य उपयुक्त होता है और सौलभ्य के दर्शन से उन के तिरस्कार न होने के लिए परत्व उपयुक्त होता है ।

**[भगवान में परत्व से सौलभ्य अधिक है]**

हमारे पूर्वाचार्य भगवान के सौलभ्य को ही मुख्य व स्वाभाविक गुण मानते हैं और परत्व को (सौलभ्य का) शोभादायक । अत एव भगवान को 'आश्रितपरतंत्र', 'भक्तपराधीन' इत्यादि बिरुद देते हुए स्तुति करते हैं । भाग्यवान भक्त लोग भगवान के सौलभ्य के चिंतन करते करते आनंद से विभोर हो जाते हैं । भाग्यहीन, शिशुपाल

जैसे आसुरी-प्रकृतिवाले, तो इस महागुण की निंदा करते हैं । हम देखते हैं कि सब के उपयोग के लिए निर्मित तालाब में भाग्यहीन मानव, कभी अज्ञान से, कभी जान बूझकर भी, डूब कर मर जाते हैं ; सब के उपयोग के लिए जलाये हुए दीप में स्वयं आकर और पडकर पतंग नष्ट हो जाते हैं । भगवद्गुणों में भी ठीक यही न्याय चलता है । श्री परांकुश परकालादि दिव्यसूरि भी भगवान के परत्व की अपेक्षा सौलभ्य का ही अनुभव करना चाहते हैं । भगवान भी इस महागुण को ठीक प्रकाशित करने के लिए ही श्री रामकृष्णादि अवतार लेते हैं । परंतु वे बीच बीच में गोवर्धनोद्धरण जैसे परत्वसूचक कार्य इस लिए करते हैं कि उन से उन के सौलभ्य की शोभा बढती है । अन्यथा, पूर्वोक्त प्रकार, सर्वथा परत्व से विरहित सौलभ्य अनादर का कारण बन जाता है । नवनीत चौर्यप्रसंग में उन को पकडने चाहती माताजी (यशोदाजी) से डरते हुए दूर दूर भाग जानेवाले श्री बालकृष्ण ने रास्ते में दधिभांड को मोक्ष दिया । और एक समय, उलूखल में बाँधे जाकर रोते रोते हुए रेंगनेवाले उन्हों ने यमलार्जुनवृक्ष गिरा कर कुबेर पुत्रों का शापविमोचन करवाया । भगवान की ऐसी असंख्य लीलाएं हैं । इस से यह निश्चय करना कुछ कठिन होता है कि क्या भगवान का स्वाभाविक गुण परत्व है अथवा सौलभ्य । भगवान के श्रीमुख की वाणी तो 'तस्याहं सुलभः' है । पांडवों का दूत बनना, अर्जुन का सारथि बनना इत्यादि उन के सौलभ्य के सूचक बडे बडे काम हैं । एवं श्रीरामावतार में भी, **'अहं वेद्मि महात्मानम्'** (रामा.बा.कां.१९-१४) इत्यादि से उन के परत्व के वर्णन करनेवाले विश्वामित्र जी से, संभवतः उन को समझने के उद्देश्य से, भगवान ने कहा - **'इमौ स्म मुनिशार्दूल किंकरौ समुपस्थितौ । आज्ञापय यथेष्टं वै शासनं करवाव किम्'** ।। (रामा.यु.कां.३१-४) (अर्थात हम दोनों (राम और लक्ष्मण) आप के सेवक है ; हमें सेवा की आज्ञा दें ।)

**[भगवान को अधिक सौलभ्यविशिष्ट मानने में दिव्यप्रबंधों का योगदान]**

श्री विष्णुसहस्रनाम में **'विजितात्मा विधेयात्मा'** के शंकरभाष्य में 'अविधेयात्मा' पद बनाकर, यह नाम भगवान के परत्व का विवरण करनेवाला बताया गया है । भगवद्गुणदर्पणकार श्रीपराशर भट्टार्यस्वामीजी ने तो 'विधेयात्मा' ही पदच्छेद करके इसे भक्तपराधीनतारूप सौलभ्य का वाचक बताया है । एवं विजितात्मा शब्द का भी शांकरभाष्य में लिखित अर्थ - जितेंद्रिय है ; श्री भट्टर स्वामीजी ने तो लिखा है - **'भक्तैः**

**विजितः - सर्वथा स्वायत्तीकृतः आत्मा यस्य सः'** (अर्थात् सभी प्रकार भक्तों से अपने वश किया गया)। दिव्यप्रबंधों की शिक्षा पाकर भगवद्गुणविद्ध होने के कारण वे ऐसी रसमय व्याख्या करने में समर्थ हुए । समझना चाहिए कि ऐसी शिक्षा देनेवाले दिव्यप्रबंध-खंडों में प्रकृत दशक का पहला स्थान है और इस में भी पहली गाथा सारभूत है ।

इस प्रकरण में हमारे पूर्वाचार्य एक मनोहर इतिहास (ऐतिह्य) बताते हैं । एक समय श्री रामानुजाचार्य स्वामीजी ने श्री गोविन्द भट्टारक स्वामीजी को भगवान के सौलभ्य गुण का उपदेश दिया । श्री गोविंदस्वामीजी ने बडी रसिकता से परवशचित्त होकर इस गुण का अनुभव किया । उसे देखकर श्री रामानुज स्वामीजी ने प्रशंसापूर्वक कहा - 'साधारण लोग भगवान का सौलभ्य सुनते ही उन्हें बहुत हेय मानते हैं । तुम बडे भाग्यवान हो कि इसका रस जानकर परवशचित्त बने हो' ।

**[प्रथमगाथावतारिका]**

भगवतः परत्वं सुचिरमपि अनुभोक्तुं शक्यम् । सौलभ्यं तु मनसाऽपि चिन्तयितुम् अशक्यम् । 'तत्तादृशः परात्परः एवं खलु प्रह्वोऽभवत्' इति चिन्तनमात्रे एव गात्रे रोमोद्गमः, कण्ठे स्वरगद्गदता, नयनयोः बाष्पपूरश्च भवति गुणविद्धानाम् । **'आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणाविष्टः द्रष्टव्यस्सर्वदेहिभिः'** ।। (वि.त.२) इति महर्षिभिरपि प्रशस्यमानाः अधिकारिणः सत्यं ते एव खलु ये हि नाम भगवतः सौलभ्यानुभवे विसृमरहृदयाः । भगवान् शठकोपमुनिस्तु अधुना कृष्णचेष्टितविशेषे सौलभ्यसीमभूते प्रवणहृदयस्सन् अतितरां व्यामुह्यति ।

**[पहली गाथा की अवतारिका]**

भगवान के परत्व का अनुभव जितने समय चाहे, उतने समय तक, सधैर्य किया जा सकता है, परंतु सौलभ्य का चिंतन तक करना अशक्य है । गुणविद्ध (अर्थात् भगवद्गुणों से ताडित, माने गुणपरवशचित्त) भक्तलोगों के चिंतन करने मात्र से वैसे परात्पर भगवान इतने नम्र व सुलभ बन गये न! रोमांच हो जाता है, आंखों में आंसू उभर आते हैं, कंठ गद्गद हो जाता है और शरीर में दूसरे भी अनेक विकार उत्पन्न हो जाते हैं । ऐसे भाग्यवानों के बारे में ही ऋषियों ने कहा - **'आह्लादशीतनेत्राम्बुः**

**पुलकीकृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः' ।।** (वि.त.२) अर्थात प्रत्येक (मानव) शरीरधारी को ऐसे भगवद्भक्त के दर्शन अवश्य करना चाहिए, जो भगवद्गुणों से आविष्ट होकर, (माने भगवद्गुणों से अपहृत अथवा परवशचित्त होकर), अपने नेत्र से आनंदाश्रु बहाता हो और जिस का शरीर रोमांचित हो जाता हो । ऐसे भक्तों में श्रेष्ठ श्रीशठकोपसूरि इस गाथा को अनुगृहीत करते हुए सौलभ्य के सीमाभूत भगवान की लीला में अपना चित्त लगाकर व्यामोहित हो रहे हैं ।

**पत्तुडैयडियवर्क्कु एळियवन् पिरर्हळुक्कु अरिय**
**वित्तहन् मलर्महळ् विरुम्बुम् नमरुम् पेरलडिहळ्**
**मत्तुरु कडैवेण्णेय् कळविनिल् उरविडैयाप्पुण्डु**
**एत्तिरमुरलिनोडु इणैन्दु इरुन्दु एङ्गियवेळिवे ।। १ ।।**

**(गाथा) - भक्तानां सुलभोऽस्ति दुर्लभतमस्त्वन्यात्मनामद्भुत-**
**श्श्रीकान्तः परमः प्रभुश्च किल नः प्राप्यो न चान्यैरसौ ।**
**मन्थोद्यन्नवनीतचौर्यविधया चोलूखले बन्धभाग्**
**वक्षः पार्श्वतले, भयाद्विलपतस्सौलभ्यकाष्ठाऽस्य का ।। १ ।।**

[प्रतिपदार्थः]

**विवरणम् - भक्तिसंपत्समृद्धस्य दासजनस्य सुलभः, अभक्तानां दुर्लभः - अत एव विस्मयनीयः; सरसिजवासिन्याः श्रियः स्पृहाविषयभूतः; स्वकृपाबलमन्तरा दुष्प्रापः अस्मत्स्वामी मन्थदण्डकृतमथनसमुत्पन्न नवनीतमोषणनिमित्तेन उरःप्रदेशे (अथवा) उदर प्रदेशे बद्धो भूत्वा उलूखलेन सह ऐक्यं प्राप्य खिन्नः आसीदिति चरितेन अनेन प्रतिपन्नं सौलभ्यं हा ! हन्त ! कीदृग्विधम् ! (सर्वात्मना विस्मयनीयम् इति व्यामुह्यति मुनिसार्वभौमः)**

[भक्तानां सुलभः इत्यस्य विवरणम्]

भगवान् सुलभः इत्युक्ते कस्य सुलभ इति पृच्छा ह्यवतरति । सर्वेषां सुलभ इति तु न वक्तुं शक्यम् । मणिमाणिक्यादीनि दुर्लभानि सन्त्यपि केषांचित् सुलभानि

भवन्ति, ये खलु महासंपन्नाः । एवमेव भगवानपि भक्तिसंपत्समृद्धानां सुलभः । भक्तौ पर्वभेदाः सन्ति बहवः । केषांचिद्भक्तिरङ्कुरदशायां स्यात् । इतरेषां तु पल्लवदशायां स्यात् । अपरेषां तु कोरकदशायां स्यात् । एवं नाम दशाविशेषाः उच्चावचा हि भक्तेः । कीदृशदशापन्नभक्तिशालिनां सुलभो भगवानिति पृच्छा स्यात् । **'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन'** (रामा.यु.कां.१८-३) इति वक्तुः भगवतो हृदयम् अनुरुद्ध्य खलु अत्र प्रतिवक्तव्यम् । तथा च अङ्कुरावस्थभक्तिमतामपि सुलभः सः इति वक्तुं योग्यम् । भक्त्युत्पत्तेः प्राक्तनी दशा काचिदस्ति, या खलु अद्वेषदशा इत्यभिधीयते । तस्यां वर्तमानानामपि सुलभो भगवान् इत्युक्ते सत्यं भगवतः परिपूर्णतृप्तिः उदियात् । यतो हि सः अद्वेषवतोऽपि जनान् परमभक्तियुक्तानां स्थाने परिगणयति । भगवान् इत्युक्तिमात्रेऽपि 'कोऽसौ भगवान्नाम ? कुत्र वर्तते सः ? किमहो त्वं तं दृष्टवानसि' ? इत्येवम् अधिक्षिपद्भिरेव धूर्तैः सान्द्रे जगति अस्मिन् अद्वेषशाली कश्चित् उपलभ्येत चेत्, स प्रह्लादविभीषणनिर्विशेषो हि मन्तव्यो भवति ।

**[भक्तिक्रीतो जनार्दनः]**

मूले भक्तानां सुलभः इत्यनुक्त्वा भक्तिसंपन्नानां दासानां सुलभः इत्युक्तिदर्शनात् आत्मनः संप्रतिपन्ना संपत् भक्तिरेव इत्युक्तं भवति । रावणेन **'त्वां तु धिक्कुलपांसनम्'** (रामा.यु.कां.१६-१८) इति धिक्कृतं, रामचन्द्रकिङ्करैः सुग्रीवादिभिरपि आक्षिप्तं सर्वथा निरालम्बं विभीषणम् अधिकृत्य **'अन्तरिक्षगतश्श्रीमान्'** (रामा.यु.कां.१६-१५) इति खलु आह वाल्मीकिर्महर्षिः । तदात्वे विभीषणनिष्ठा श्रीः कास्विदिति पर्यालोचनीयम् । रामदासो भूयासम् इति आशंसामात्रमेव हि तदात्वे तस्य वर्तते । तावतैव हि स श्रीमान् निरदिश्यत । तथाविधानां सुलभः इत्युक्ते कोऽर्थः ? तन्नियोगानुसारेण कार्यकरणसन्नद्धः इत्यर्थः । विभीषणस्य उपसर्पणात्पूर्वं **'तपसा सेतुबन्धेन सागरोच्छोषणेन वा । सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने'** (रामा.यु.कां.३-२) इत्यवलीलया कथितवान् दाशरथिः विभीषणस्वीकरणसंपत्तिसमनन्तरं सागरतरणविषये विभीषणनिदेशं प्रत्यवैक्षत ; विभीषणश्च आह - **'समुद्रं राघवो राजा शरणं गन्तुमर्हति'** (रामा.यु.कां.१९-३०) इति । अथ रामो **'ममाप्येतद्धि रोचते'** इति तस्यैव आदेशमवतंसयन् सागरशरणागतौ प्रावर्तत । **'सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत'**! (भ.गी.१-२१) इति पार्थेन नियुक्तस्सन् सद्यः तथा अकरोत् इत्यादीनि चरितानि अत्रानुसन्धेयानि । अस्माभिः क्रीतं वस्तु यथा ह्यस्माकं यथेष्टविनियोगार्हं भवति, तथैव भवति **'भक्तिक्रीतो जनार्दनः'** । (वि.ध.३) **'दूतो भव नः'** इति निस्संकोचं नियोज्यश्च स्वलु आसीदसौ ।

**[अभक्तानां दुरासदः इत्युक्तिः]**

अथ, 'इतरेषां दुर्लभः' इति विशेषणं भक्तजनसमाश्वासनाय कल्पते । यदि भगवान् भक्तानामिव अभक्तानामपि तथा विधेयः स्यात्, तर्हि सुमहान् खलु भवेत् अपायः । अतथात्वाय अभक्तानां दुरासदः इति कण्ठरवेण कथनीयमासीत् । भगवति साधनत्वविस्रम्भविरहिता ये, ते खलु इतरे । तेषां दुरवगमो दुरधिगमश्च । 'भगवान् न केवलमुपेयः, उपायश्चापि' इति दृढाध्यवसायबलात् अचेतनक्रियाकलापेषु साधनताधियं स्वल्पशोऽपि ये न बिभ्रति परमैकान्तिनः, तेषामेव असौ सर्वथा धुरन्धरो बोभवीति ; साध्योपायसहकृतः सन्नेव स भगवान् कार्यं कर्तुं कुशलः स्यात् नान्यथेति धिया अचेतनक्रियाकलापेष्वेव अनुरक्तानां तु विषये स्वयमुदासीनः एव भवतीति प्रथमपाद-तात्पर्यसर्वस्वम् । अर्जुनदुर्योधनौ इह स्मर्तव्यौ । उभावपि कृष्णसकाशम् आयातौ युद्धसाहाय्यलिप्सया । **'कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः'** (महा.भा.द्रो.प.१८३-२४) इति प्रथा दुर्योधनपक्षे नैव बभूव । अत्र च महाभारतकथा यथायथम् अनुसन्धेया ।

**[भक्तसुलभः इतरदुर्लभः इत्याश्चर्यावहः]**

अथ च विस्मयनीयः इति तृतीयं विशेषणं भगवति भूयोभिः प्रकारैः स्थितम् आश्चर्यावहत्वं नाभिप्रैति । प्रकृते यदुक्तं भक्तानां विषये सौलभ्यम् इतरेषां विषये दौर्लभ्यं चेति, अत्रैव विस्मयनीयता । **'देवानां दानवानां च सामान्यमधिदैवतम्'** (जितन्ता.स्तो.२) इति प्रमाणप्रतिपन्नोऽपि भगवान् भक्तेषु विधेयश्च, इतरेषु दुरासदश्च अस्तीति विस्मयः ।

**[श्रियः पतिः नारायणः]**

अथ च 'मलर्मह‌ळ् विरुम्बुम्' इत्यनेन विशेषणेन श्रियःपतित्वमुच्यते । अधस्तनदशकावसाने नारायणः इति प्रोक्तम् । अधुना लक्ष्मीपतिः इत्युच्यते । शारीरकमीमांसायां तावत् नैकस्मिन्नपि सूत्रे नारायणनामनिर्देशोऽस्ति ; न चापि लक्ष्मीपतिः इत्युक्तिः । तस्मिन् शास्त्रे निगूहितानां विषयाणाम् एवंविधानां भूयसाम् अस्मिन् शास्त्रे सुष्ठु प्रकाशनम् इत्येषः विशेषोऽवधेयः । अत्र च लक्ष्मीपतिः इत्यपि कण्ठतो नोक्तम् ; लक्ष्मीस्पृहाविषयभूतः इति तावदुक्तम् । तदिदं चारुतातिशयशालि रसिकभक्तभाषितं मन्तव्यम् । सर्वेऽपि जनाः श्रियं कामयन्ते, सा हि भगवन्तं कामयते इति रसघनो व्याहारः । सा चात्र श्रीरिति पदेन वा लक्ष्मीरिति पदेन वा न निर्दिष्टा । अपितु सरसिजवासिनीपदेन निर्दिष्टा । परमसुकुमारे सरसिजकुसुमे लब्धनिवासाऽपि सा 'पादारुन्तुदमेव

पङ्कजरजः' इति मत्वा, 'न मे स्थलमिदं शोभनम्, पुष्पहाससुकुमारस्य भगवत उरस्स्थलमेव मम प्राप्यम्' इत्याकलय्य, तदुपेक्ष्य अत्र महतीम् उत्कण्ठां प्रकाशयतीति प्रोच्यते । सा हि भगवतः संबन्धेन : स्वोत्कर्षं मन्यते । अहह ! मनोरमेयं घटना । **'श्रद्धयाऽदेवो देवत्वमश्नुते'** इति भगवती श्रुतिराह । (श्रद्धया - श्रीमहालक्ष्म्या इत्यर्थः) तदिदम् उपबृंहयति - **'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा'** (रामा.अ.कां.३७.१८) इति इतिहासरत्नम् ।

**[श्रीयोगेन भगवतोह्यतिशयः इत्युक्तिः]**

अथ च 'अरुम् पेरल्' इति विशेषणेन दुर्लभत्वमुच्यते । हन्त किमर्थमिदम् इदानीमुच्यते ? भक्तानां सुलभ इतरेषां दुर्लभः इति तावत्पुरस्तादेव ननूक्तम् । पुनरपि दुर्लभः इति कथने को विशेषः इति चेत् ; दुर्लभत्वगिरा 'उत्तमोत्तमं वस्तु' इत्येतावदेव प्रत्याय्यते । लक्ष्मीसनाथत्वकथनसमनन्तरं ह्येतदुच्यते । दीप्त्या खलु रत्नम् उत्कृष्यते । भगवान् रत्नम् ; श्रीस्तु दीप्तिः । श्रीयोगेन भगवतो यः अतिशयः उत्पन्नः, स तावदत्र अनुसन्धीयते इति प्रतिपत्तव्यम् । अथ च अस्मत्स्वामीति विशेष्यनिर्देशः । दिव्यदम्पत्योः अभिमाने वर्धमाना वयमिति सन्तोषसीमोक्तिः ।

**[भगवतः अत्यन्तविधेयत्वम्]**

गाथायामस्याम् अनुसंधित्सितस्य सौलभ्यस्य सम्यगुपपादनाय भगवतः कृष्णकिशोरस्य चर्याविशेषः प्रस्तूयते । भगवतो नन्दनन्दनस्य नवनीते महती समुत्कण्ठा इति जानीमहे । अस्तु । नवनीतचोरः इति गव्यमोषक इति च प्रथाऽस्य समजनि । किमर्थम् अनेन स्तेयं कर्तव्यम् इति विचारः आवश्यकः । नवनीतं मे प्रदेहि इति यद्ययं मुक्तकण्ठं काङ्क्षेत्, तर्हि कृत्स्नोऽपि व्रजः कृत्स्नमपि गव्यं सादरं सबहुमानं चास्मै यावच्छक्ति प्रदातुं सज्जः एव ननु । कृष्णः एव परं दैवम् इत्यध्यवस्यति व्रजे सर्वस्वदानसमुत्सुके मोषणप्रसक्तिरेव नास्त्यस्य इति किमु वक्तव्यम् ? कुतस्तर्हि सोऽयं नवनीतचौर्ये प्रवृत्तः इति पर्यालोचनायाम् इदं व्यक्तीभवति - नवनीतसमुत्कण्ठा व्याजमात्रम् । चौर्यापराधनिमित्तेन बद्धो भवानि इति भृशमुत्कण्ठितोऽसौ ; प्रार्थनया गव्यमुपलभ्य यद्ययम् अश्नीयात् तर्हि उलूखलबन्धादि-शिक्षाप्रसक्तिः नैव स्यात् खलु । स्वकीयम् अत्यन्तविधेयत्वं प्रदर्शयितुं ह्यस्य महती रुचिः । तस्करवृत्तिम् अन्तरा तन्न सुकरम् इति मेने । अत एव **'मुहुः प्रवृत्तं नवनीतचौर्ये वत्सान् विमुञ्चन्तमदोहकाले'** (यादवाभ्युदये.४-३३) इत्युक्तरीत्या गव्यमोषणादिषु दुश्चरितेषु

बहुषु प्रववृते । अस्मादृशां संसारबन्धमोक्षणविचक्षणोऽयं महापुरुषः स्वकीयं बन्धं स्वयं विमोचयितुमशक्तः ताम्यति हा बत ! इति महामतीनामपि चित्तं द्रवयितुं बन्धस्थितिं स्वयमेव स्पृहयते स्म ।

**[भगवतः सौलभ्यस्य प्रतिपादनम्]**

कृष्णो मुष्णाति इति संविदाना यशोदा 'यदाऽयं हस्तगतो भवति तदा बद्धव्यः' इति धिया गृहे तत्र तत्र दामानं निगृह्य निक्षिपेत् । कृष्णस्तु तद्विदित्वा (गव्यमोषणप्रवृत्तेः प्राक्) दामानं शिथिलयित्वा तदनु मोषणे प्रवर्तेत । अदसीयासु लीलासु इदमपि अन्यतमं ध्येयम् । रहसि मुषित्वा भुक्त्वा परैः अगृहीतः एव सन् अन्यतो गन्तुं समर्थोऽप्यसौ बन्धलोलुपताभूम्नैव मातुः चक्षुर्गोचरो ग्रहणविषयश्च बोभवीति । कदाचन मातुः चक्षुर्गोचरोऽपि सन् अग्राह्यः एव धावति च । तदास्तां नाम । यदा गृहीतो भवति तदा **'उलूखले कुत्रचिदात्तपुण्ये बन्धुं सतां बद्धुमियेष माता'** (यादवाभ्युदये.४-३३) इत्त्युक्तरीत्या बन्धं प्रापयितुम् इच्छन्ती माता करेणैकेन गृहीत्वाऽमुं रज्जुम् आदातुं प्रयतते । अथ पश्यति च सा दाम्नां शिथिलीकृतत्वम् । बन्धनात् भीतेन कृष्णडिम्भेन एवं कृतमिति च प्रतिपद्यमाना सा त्वामद्य दाम्ना बद्धं करिष्याम्येव इति कथयन्ती शिथिलीकृतानां दाम्नां बन्धने प्रयतते । एकेन करेण कृष्णं गृहीत्वा अपरेण करेण दामप्रग्रथने प्रवर्तते सा । कथञ्चित् प्रग्रथितया दाम्ना बन्धने समुद्युक्तायां तस्याम्, मायामानुषविग्रहः कृष्णः स्वात्मनो देहं पृथूकरोति यथा वा तया दाम्ना बन्धो न सुशकः स्यात् । सा च तदात्वे बन्धनमशक्यं विदन्ती 'अद्य गच्छतु तावदयं' इति विमोक्तुम् इच्छति । तदवबुध्य कृष्णो 'हन्त ! बन्धप्राप्त्यर्थमेव खलु मया मोषणं कृतम् ; तदधुना अवश्यं बद्धो भवानि' इत्यध्यवस्यन् पृथूकृतं स्वशरीरं स्वयमेव कृशीकरोति । **'अणोरणीयान् महतो महीयान्'** (कठ.उ.२-२०) खल्वेषः । तदात्वे शक्यबन्धनः एवायम् इति मत्वा यशोदा **'दाम्ना चैवोदरे बध्वा प्रत्यबध्नादुलूखले'** (वि.पु.५-६-१४) इति पुराणरत्नोक्तरीत्या ससन्तोषमिमं उलूखले निबद्धम् आरचयति । अत्रैव यादवाभ्युदयश्लोकोऽनुसन्धेयः - **'आनीतमग्रे निजबन्धनार्थं दामाखिलं संहितमप्यपूर्णम् । विलोक्य निर्विण्णधियो जनन्याः संकोचशक्त्या स बभूव बध्यः'** ।। (याद.४-३४) इति । एवं नाम बन्धनम् उलूखले प्रापितोऽयं कृष्णकिशोरः परमानन्दकन्दलितस्वान्तोऽपि सन् प्राकृतजनवत् परितापम् अभिनयन् प्रलपति विलपति ; मात्रा विभीषितो मुक्तकण्ठं विलपितुमशक्तः ताम्यति च । तादृशीं दशाम् अनुसंदधानो मुनिवरोऽसौ **'एत्तिरम् उ एरलिनोडु**

**इणैन्दु इरुन्दु एङ्गिय वेळिवे'** इति तस्मिन् सौलभ्ये विद्धहृदयः सन्नवसीदति । अत्र च एतदैतिह्यमनुसंधेयम् - इमां गाथाम् अभिधाय शठकोपमुनीन्द्रोऽयं मासषट्कं व्यामुग्धः आसीदिति । तदिदं सूचितं च श्रीकूरनाथगुरुवरैः (अतिमानुषस्तवे.५०) - **'त्वामन्यगोपगृह-गव्यमुषं यशोदा गुर्वी त्वदीयमवमानममृष्यमाणा । प्रेम्णाऽथ दामपरिणामजुषा बबन्ध तादृङ्न ते चरितमार्यजनास्सहन्ते'** ।। इत्यनेन पद्यरत्नेन। अत्र च 'आर्यजनाः' इतिपदं श्रीशठकोपमुनीन्द्राभिप्रायकम् । **'न सहन्ते'** इत्येतत् व्यामुग्धत्वप्रतिपादकम् ।।

**[प्रतिपदार्थ]**

**हिंदी - भक्ति संपन्न दासजनों को सुलभ, दूसरों को (अभक्तों को) दुर्लभ, (और अत एव) आश्चर्यकारक (आश्चर्यमय), कमलपुष्पनिवासिनी श्री महालक्ष्मीजी से वाञ्छनीय, (अपने कृपा बल के विना) दुष्प्राप (पाने अशक्य) हमारे स्वामी, (यशोदाजी से) मथनी से (दही को) मथन कर निकाले गये मक्खन की चोरी में (अर्थात् मक्खनचोरी के प्रसंग में), (माताजी से) वक्ष में (अथवा पेट में) बांधे जाकर, ओखली के साथ मिलकर (अर्थात् ओखली के साथ बांधे जाकर), दुःखी हो गये, तो यह (माने इस चरित्र से बताया गया) (उन का) सौलभ्य किस प्रकार का है !**

**[प्रारंभदशा के भक्तों के लिए भी भगवान सुलभ हैं]**

इस गाथा का प्रारंभ ही भगवान के सौलभ्यगुण के वर्णन से होता है । 'भगवान सुलभ हैं' कहने पर यह प्रश्न उठता है कि वे किस के लिए सुलभ हैं । यह तो नही कहा जा सकता है कि वे सब के लिए सुलभ हैं । जैसे लोक में मणिरत्नादि अनर्घवस्तु धनवान के लिए सुलभ होती है, इसी प्रकार परात्पर भगवान भी भक्तिरूपसंपद से युक्त भाग्यवानों के लिए ही सुलभ होते हैं । परंतु भक्ति की अनेक अवस्थाएं होती हैं - परभक्ति, परज्ञान, परमभक्ति इत्यादि। अतः यह प्रश्न उठना स्वाभाविक है कि भक्ति की कौन-सी दशा में भगवान सुलभ होते हैं । साधारण लोग कह डालेंगे कि जिन की भक्ति परिपूर्ण रूप से पक गयी हो, उन के लिए भगवान सुलभ हैं । परंतु यह बात उतनी ठीक नहीं है । क्यों कि **'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन'** (रामा.यु.कां.१८-३) (अर्थात् मित्र की भावना से आनेवाले को भी मैं किसी प्रकार

छोड न देता) कहनेवाले भगवान के अभिप्राय से परिचित महात्मा लोग कहते हैं कि जिस की भक्ति अभी प्रारंभदशा में हो उस के लिए भी वे सुलभ हैं । इतना ही नहीं । भक्ति-प्रारंभ से भी पहले की जो अद्वेष नामक अवस्था है, उस में होनेवालों के लिए भी भगवान सुलभ हैं । अद्वेष माने द्वेषाभाव ; अर्थात् कंसशिशुपालादि की तरह भगवान से द्वेष न करते हुए, भगवान का नाम अथवा वैभव सुनने पर जो मानव प्रतिवाद न करके चुप रह जाता है, उस की दशा अद्वेष कही जाती है । पापियों से भरे हुए इस संसार में यदि उक्त प्रकार का अद्वेषी कोई कभी मिल जाय, तो उस को प्रह्लाद विभीषणादि के सदृश परमभक्त ही मानना चाहिए ।

**[भक्तसुलभ होने के प्रमाण]**

मूल गाथा मे, 'भक्तों के लिये सुलभ' कहने की जगह, भक्तिसंपन्नों के सुलभ कहने से यह अर्थ मालूम पडता है कि इस आत्मा की अपने स्वरूप के अनुरूप संपत्ति भक्ति है । अत एव रावण से तिरस्कृत होकर, लंका छोडकर श्री रामचंद्रजी की सेवा करने के उद्देश्य से आनेवाले, किन्तु सुग्रीवादिवानरों की क्रूर दृष्टि के लक्ष्य होकर, आकाश में ही खडे रहनेवाले विभीषण जी को वाल्मीकि महर्षि ने **'अन्तरिक्षगतः श्रीमान्'** (रामा.यु.कां.१६-१८) कहा । उस समय विभीषण की 'श्री' कौन-सी थी ? बस ! केवल प्रभु की सेवा करने की इच्छा थी । भगवान ऐसे भक्तिसंपन्नों के लिए सुलभ हैं । कहने का यह तात्पर्य है कि वे उन के अधीन हो जाते हैं । पूर्वोक्त प्रकरण में ही जब विभीषण जी का स्वीकार हो चुका था, तब उन से पूछा गया कि अब समुद्र को किस तरह पार किया जाय । उन्होंने एकदम जवाब दिया कि प्रभु इस की शरण में जाय । यह सुनकर प्रभु ने भी उस के औचित्य का विचार न करते हुए ठीक वैसे ही किया । एवं श्रीकृष्ण भगवान ने अर्जुन के सारथि बनकर, उस की आज्ञा का पालन करते हुए, दोनों सेनाओं के बीच उस का रथ खडा कर दिया । भगवान के ऐसे और भी कितने ही दिव्यचरित्र मिलते हैं। ज्ञानियों का कहना है **'भक्तिक्रीतो जनार्दनः,'** (वि.ध.३) माने भगवान भक्ति से खरीदे जाते हैं । जैसे कोई भी अपने से खरीदे हुए पदार्थ का अपनी इच्छानुसार उपयोग कर सकता है, भक्तजन भी भगवान को स्वेच्छानुगुण काम में ला सकते हैं ।

**[ विषयानुरक्तों पर भगवान उदासीन हैं ]**

भगवान के सौलभ्य का विचार करते भक्त जनों के हृदय में यह भय उत्पन्न होता है कि यदि सर्वसुलभ होना ही भगवान का स्वभाव है, तो यह बडा अनुचित है ; क्यों कि अभक्तों के लिए भी यदि वे सुलभ हो तो, तो उस से बडी आपत्ति ही होगी । इस भय की निवृत्ति के लिए अब कहा जाता है 'पिरर्हेळुक्कु अरिय' माने दूसरों के लिए दुर्लभ । यहां दूसरे वे होते हैं जो भगवान को ही फल व उपाय न मानते हैं, पर फलमात्र मानकर, कर्मज्ञानादि अन्य वस्तुओं को उपाय मान बैठे हैं । यह तात्पर्य है - जो लोग अपने से किये जानेवाले कर्म, ज्ञान, भक्ति अथवा प्रपत्ति में बिलकुल उपायबुद्धि किये विना, एकमात्र भगवान को अपने लिए उपाय मानते हैं, ऐसे परमैकांतियों के लिए भगवान सुलभ हैं ; और जो अपने से अनुष्ठीयमान कर्मादि को ही अथवा उन के सहकारि रूप में भगवान को भी उपाय मानते हैं, उन के विषय में भगवान उदासीन रह जाते हैं । अर्जुन व दुर्योधन इस विषय के दृष्टांत हैं । भारतयुद्ध के समय दोनों श्रीकृष्ण से सहायता मांगते हुए उन के पास आये । दुर्योधन उन से कुछ सेना लेकर लौटा ; किन्तु अर्जुन ने **'कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः'** (महा.भा.द्रो.प.१८३-२४) कहता हुआ श्रीकृष्ण को ही पाया और फलतया विजय भी प्राप्त किया ।

**[ भक्तपरतन्त्रत्व आश्चर्यावह है ]**

बाद में भगवान का जो तीसरा विशेषण दिया जाता है 'वित्तहन्' माने अत्याश्चर्यमय, इस का तात्पर्य नानाप्रकार का हो सकता है । भगवान का स्वरूप, रूप, गुण, चेष्टा, इत्यादि सभी आश्चर्यमय होते हैं । यहाँ इस बात का आश्चर्य उपवर्णित हो रहा है कि विना पक्षपात के, सर्वसमरूप से रहने की प्रसिद्धि रखनेवाले भगवान भक्तों के लिए सुलभ और अभक्तों के लिए दुर्लभ रहते हैं ; अर्थात् भक्तपक्षपाती एवं भक्तपरतंत्र रहना, यह आश्चर्य की बात है ।

**[ श्रीमन्नारायण ही परतत्त्व हैं ]**

बाद में 'मलर्महळ् विरुम्बुम्' विशेषण से भगवान् लक्ष्मीपति बताये जाते हैं । पहले दशक में भगवान परात्पर बताये गये ; दूसरे दशक में उन का शुभ नाम 'नारायण'

बताया गया ; अब तो वे लक्ष्मीपति बताये जाते हैं । उपनिषदों में परब्रह्म का यह भी एक लक्षण बताया गया है । परंतु खेद की बात यह है कि ब्रह्मसूत्र में इस का (एवं नारायण नाम का भी) उल्लेख नहीं किया गया है । इस त्रुटि की पूर्ति के लिए, अर्थात् ब्रह्मसूत्र में अनुक्त (नारायणादि नाम, लक्ष्मीपतित्व, अवतार इत्यादि अनेक) विषयों का बडा सुंदर वर्णन व विवेचन इस द्रमिडोपनिषद में किया गया है । यही इस की विशेषता व श्रेष्ठता है । अस्तु । अब स्पष्टरूप से लक्ष्मीपति न कह कर, लक्ष्मीजी से वाञ्छनीय कहना बडा सुंदर है । आल्वार का कहना है कि सारी दुनिया जिस लक्ष्मीजी की कृपा पाना चाहती है, वे लक्ष्मीजी, अपने जन्मस्थान कमलपुष्प को भी अत्यंत कठिन मानती हुई छोडकर, पुष्पहाससुकुमार भगवान के वक्षस्थल को ही अपने योग्य वासस्थल मानकर, अत्यंत प्रेम व आदर के साथ, वहां जाकर निवास करती हैं ; अर्थात् भगवान लक्ष्मीजी के भी सादर वांछनीय होते हैं । इस से दिव्यदंपतियों का परस्पर प्रेम व अनुरूपता बतायी जाती है । ओह! यह बडा मनोहर वर्णन है । लक्ष्मीजी के संबंध से भगवान का वैभव बढता है और भगवान के संबंध से लक्ष्मीजी का वैभव बढता है ।

**[श्रीयोग से ही भगवान सर्वोत्तम हैं]**

इतने विशेषणों के बाद, 'अरुम् पेरल्' माने दुर्लभ कहना पुनरुक्ति-सा लगेगा, परंतु इस का तात्पर्य यह है कि भगवान ऐसे माहात्म्यवाले हैं कि वे लगभग दुर्लभ हैं । अर्थात् कोई भी मानव उन की कृपा के बल से उन को पाये तो पाये ; अपने प्रयत्न से तो कोई भी प्राप्त न कर सकता । क्यों कि पूर्वोक्त-वैभवसहित उन को प्राप्त करानेवाला दूसरा उपाय कभी न मिलता । अर्थात् लक्ष्मीसंबंधप्रयुक्त उन की दुर्लभता का वर्णन इस विशेषण से किया जाता है । इसके बाद 'नम् अडिहल्' तो विशेष्यवाचक शब्द है, विशेषण नहीं । तात्पर्य यह है कि आल्वार अपने दिव्यदंपति के कृपापात्र होने के आनंद से इस प्रकार कह रहे हैं ।

**[श्रीकृष्ण की मक्खन की चोरी सौलभ्यप्रदर्शन के लिए है]**

अवतारिका में बताया गया कि आल्वार इस गाथा में भगवान के सौलभ्य का वर्णन करते हैं ; परंतु अभी तक उन का परत्व ही वर्णित हुआ । इस का कारण है

कि सौलभ्य को शोभा देनेवाली वस्तु परत्व है । अर्थात् इस प्रकार कहने पर ही कि ऐसे माहात्म्यवाले, परात्पर भगवान इतने सुलभ हैं, उस सौलभ्य की कीमत बढेगी । अतः आल्वार सारे पूर्वार्ध से परत्व का वर्णन कर अब सौलभ्य के वर्णन में उतरते हैं । तथा हि - सुना जाता है कि श्री कृष्ण किशोर मक्खन को बहुत पसंद करते थे और उस की चोरी भी करते थे । 'नवनीतचोर' इत्यादि उन के नाम हो गये । अब यह विचार करना आवश्यक है कि श्रीकृष्ण ने क्यों मक्खन की चोरी की ? क्या वह उन को दुर्लभ था ? अर्थात् माँगने पर क्या कोई उन को पर्याप्त मक्खन नहीं मिलता था ? व्रज निवासी सभी लोग उन से बहुत प्यार करते थे ; अतः उन से माँगे जानेपर, अवश्य ही वे खुशी-खुशी अपना सभी मक्खन उन को दे देते । तो भी श्रीकृष्ण को माँगना अच्छा न लगा । मांगकर नवनीत खाने में उन को रस न मिला । चोरी करने से ही नाना प्रकार की उन की लीलाएं बनी । इसी प्रकरण में रस्सी से बांधे जाकर उन्हों ने अपने परिपूर्ण सौलभ्य को भी प्रकाशित किया। अतः मक्खन चाहना व्याजमात्र था ; चोरी कर, बांधा जाना ही उन का लक्ष्य ठहरा । अवाप्त-समस्तकाम कहे जाने वाले भगवान को किसी वस्तु को खाने की आवश्यकता अथवा इच्छा कैसे हो सकती है ? अतः सुदृढ जान लेना चाहिए कि बंधन पाने की इच्छा से ही वे चोरी इत्यादि नाना लीलाओं में प्रवृत्त हुए । ऐसे करने से ही आल्वार जैसे विलक्षण, सहृदय भक्तलोग कहते हैं 'अहो ! समस्तजनता को संसारबंधन से छुडा देने में समर्थ भगवान श्री कृष्णावतार में मक्खन की चोरी कर, माता से पकडे जाकर, रस्सी से बांधे जाकर, उस से अपने को छुडाने में अशक्त होकर, रोते रोते थक गये ! तो उन का कैसा सौलभ्य है' ! इस गुण से परवशचित्त होकर आळ्वार व्यामोहित हो जाते हैं ।

**[भगवान की सौलभ्यप्रदर्शन की उत्कंठा का विवरण]**

श्री कृष्ण की चोरी इत्यादि धूर्तचेष्टितों से रुष्ट यशोदाजी उन को बांध देना चाहती थीं । परंतु श्रीकृष्ण उन के प्रयत्न विफल कर देते थे । अंतर्यामी होकर समस्त जगत का संचालन करनेवाले उन को गुप्तरूप से ही मक्खन की चोरी कर किसी की दृष्टि में न आते हुए बाहर निकलना कोई अशक्य काम नहीं था । अतः बंधन पाने की इच्छा से ही वे एक दिन माताजी से पकडे गये । परंतु जब यशोदाजी ने एक हाथ से उन को पकडकर, दूसरे हाथ से रस्सी उठाकर बांधने का यत्न किया, तब उन्हें

रस्सी की टुकडियाँ ही मिलीं । श्री कृष्ण ने ही चोरी करने से पहले रस्सी की टुकडियां बनाकर रख दी थीं । यशोदाजी ने समझ लिया कि यह भी इस धूर्त कृष्ण का ही काम है । उन का कोप और बढ गया । तब उन्हों ने एक हाथ से बहुत प्रयत्न करके उन टुकडियों को जोड कर लंबी रस्सी बनायी और उस से लाल को बाँधने की चेष्टा की । परंतु भगवान की माया अत्यद्भुत है । रस्सी तो काफी लंबी थी,मगर उस मायाशिशु को बाँधने में वह कम पडी । फिर उस के साथ और दो चार टुकडियां जोडी गयीं और उस से श्री कृष्ण को बाँधने का प्रयत्न किया गया ; तो भी वह कम पडी । यह कार्य कुछ समय तक ऐसा ही चला ; अंत में यशोदाजी थक गयीं ; उन्हो ने सोचा 'जाने दो ; इस समय इस धूर्त को छोड देती हूँ ; फिर यदि कभी मिल गया, तो इस की ठीक ठीक खबर लूंगी । 'तब श्रीकृष्ण ने विचार किया ओह ! माताजी थक गयी हैं और मुझे छोडना चाहती हैं ; बंधन पाने की मेरी इच्छा अब विफल होनेवाली है । इस का अवकाश नहीं देना चाहिए' । तब उन्होंने श्रीविग्रह को एकदम संकुचित कर लिया । उपनिषत् भी बताती है कि भगवान छोटे से छोटे हैं और बडे से बडे - **'अणोरणीयान् महतो महीयान्',** (कठ.उ.२-२०) तब यशोदाजी हृष्ट हो गयी और पेट पर रस्सी डालकर उन को ओखली के साथ बाँध कर चली गयीं । श्री कृष्ण अपना अवतार सफल मान कर आनन्दित हुए । तो भी समय के अनुगुण बन्धन से अपने को छुडाने में अशक्त होकर दु:ख का अभिनय करते हुए रोने लगे, पर माताजी से डर के मारे जोर से रोने में भी अशक्त होकर धीरे धीरे रोने का प्रयत्न करने लगे । भगवान के इस चरित्र का अनुसंधान करते हुए आल्वार ऐसा आश्चर्य पाते हैं - 'एत्तिरम्' इत्यादि । कहा जाता है कि इस सौलभ्य के चिंतन से उन का मन इतना भर आया कि वे छह मास तक मूर्च्छित हो गये । श्री कूरेशस्वामीजी ने भी अतिमानुषस्तव में **'त्वामन्यगोपगृहगव्यमुषं यशोदा गुर्वी त्वदीयमवमानममृष्यमाणा । प्रेम्णाऽथ दामपरिणामजुषा बबन्ध तादृङ्न ते चरितमार्यजनास्सहन्ते'** ।। (५०) कहते हुए इस ऐतिह्य की ओर संकेत किया है । **आर्यजना:** - परमपूज्य (भक्तिभरित श्री शठकोपस्वामीजी), आप के इस उलूखलबंधन वृत्तांत का, **न सहन्ते** - सहन नहीं कर सकते ; अर्थात् इस के ध्यान से उन का हृदय आत्मवशता खो बैठता है और वे मूर्च्छित हो जाते हैं ।

**एळिवरुमियलूविनन् निलै वरम्बिल पल पिरप्पाय्**
**ओळिवरु मुळुनलम् मुदलिल केडिल वीडाम्**

तेळितरु निलैमैयदु एळिविलन् मुळुवदु मिरैयोन्
अळिवरु मरुळिनोडु अहत्तनन् पुरत्तनन् अमैन्दे ।। २ ।।

(गाथा) - नानाजन्मसु च स्वयं किल विशन्नैयत्यहीनोऽस्थिरः
कल्याणाम्बुधिरप्यनादिनिधनः प्रत्यक्षतेजोनिधिः ।
मोक्षज्ञानफलप्रदश्च सततं साकल्यतश्चेश्वरो
लोकानामुपकारकोऽस्ति दयया स्वीयोऽपि बाह्योऽस्त्यसौ ।। २ ।।

[प्रतिपदार्थः]

**विवरणम् - सौलभ्यैकस्वभावः, व्यवस्थां नियमं च हित्वा नानायोनिषु जायमानः, तादृशेन जननेन मालिन्यलेशमपि अनुद्वहन् शाणोल्लीढमणिवत् अत्यन्तमौज्ज्वल्यमधिवहद्भिः उत्पत्तिविनाशविरहितनित्याभिव्यक्तशुभगुणैः सदा विभासुरः, मोक्षाख्यसुप्रसन्नस्थानविशेषप्रदत्वरूपं स्वस्यैकान्तिकं स्वभावं कदाऽपि अविजहन् निर्हेतुककृपाविशिष्टस्सन् अन्तरङ्गभक्तानाम् अत्यन्तनेदिष्ठः बहिरङ्गजनानां दविष्ठश्च भवति भगवान् ।।**

[सौलभ्यैकस्वभावः इति पूर्वसङ्गतिः]

अधस्तनगाथायां गोपालचूडामणेः कृष्णस्य नवनीतस्तेयनिबन्धनं दामबन्धनम् अनुसंहितवान् मुनिसार्वभौमः षण्मासावधि व्यामुग्धः एव अवतस्थे इति सम्प्रदायपरम्पराप्राप्तम् ऐतिह्यमाचार्या विलिलिखुः । एवं षण्मासान् व्यामुह्य स्थितो मुनिवरः कालपाकेन प्रबुध्य, अधस्तनगाथायां स्वात्मना भगवान् भक्तसुलभः इति कीर्तितोऽभूदिति विज्ञाय 'भक्तसुलभः इति कथनं नोचितम्; लोके परत्वसीम्नि स्थितानां चक्रवर्तिप्रमुखानामपि तदिदं भक्तजनसौलभ्यं कदाचिद्घटेत कामम्; भगवति नैवं वक्तव्यम्' इति प्रतिपद्यमानः सौलभ्यैकस्वभावः इति विशिष्य कथयति । स्नेहिनां जनानां सुलभः इति कथने किमस्ति वैभवम्? सौलभ्यमेवास्य स्वाभाविको वेषः इति हृदयम् । भगवान् यदा भक्तेषु सौलभ्यसौशील्यादिगुणान् प्रकाशयति, तदा अनुभोक्तारो रसिकाः मन्यन्ते **'अस्य परत्वम् आगन्तुकमेव'** इति ।

## [अवतारवैशिष्ट्यम्]

अथ व्यवस्थां नियमं च हित्वा नानायोनिषु जायमानः इत्यत्र निर्वाहभेदोऽवधेयः । 'अमुके योनौ जायेय, अमुके योनौ न जायेय' इति व्यवस्थाविरहेण **'पिता पुत्रेण पितृमान् योनियोनौ'** इति काठकश्रुत्याम्नातरीत्या सर्वेष्वपि योनिषु प्रादुर्भावो यः स व्यवस्थाविरहेण जननम् ; 'अमुकं चेष्टितं करवाणि, अमुकं चेष्टितं न करवाणि' इति संकल्पभिदा विरहेण निर्विशेषं सर्वचेष्टितकरणेन (चेष्टिते) नियमाभावः इति प्राचामाचार्याणां निर्वाहः । श्रीपराशरभट्टार्यास्तु - प्रोक्तमर्थद्वयमपि व्यवस्थां हित्वा इत्यत्रैव उपन्यस्य, अथ नियमं च हित्वा इत्यस्य **'अवतीर्य सुलभताप्रकाशनावसरे परत्वस्यापि प्रकाशनं नियमप्रहाणम्'** इत्यन्वगृह्णन् पार्थसारथिः भूत्वा नैच्यं प्रकाशयन्नपि विश्वरूपप्रदर्शनमपि अकरोत् खलु ; **'पुत्रीयया किल वरं ववृषे वृषाङ्कात्'** इत्युक्तरीत्या वृषध्वजसकाशे पुत्रवरं याचमानोऽपि सन् घण्टाकर्णाय मोक्षं प्रददौ खलु ; एवमादयः चर्याविशेषाः भट्टपादहृदि स्थिताः ।।

## [जायमानः इति शानजन्तप्रयोगतात्पर्यम्]

नानायोनिषु जायमानः - संसारिणो वयमपि नानायोनिषु जायामहे, पूर्वोदाहृतचरकाठकश्रुत्याम्नातरीत्या भगवानपि नानायोनिषु जायते ; अस्माकं जननं कदाचिद्विरमति, भगवतो जननं तु न कदाऽप्युपरमति ; किं कारणम् ? अस्माकं जन्मनो हेतुः पुण्यपापरूपं कर्म, भगवतो जन्मनो हेतुः करुणा । **'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'** (मुण्ड.उ.३-१-३) इत्याम्नातरीत्या अस्मदीयस्य कर्मणः कदाचिद्विधूननसंभवेन कर्मनिबन्धनस्य जन्मनो विनाशः संभवति; भगवज्जननहेतुभूतायाः करुणायाः कदाऽपि विनाशावकाशविरहेण तादृशकरुणा निबन्धनजन्मनः कदाऽपि उपरतिः न भवति । तथा च नानायोनिषु जायमानः इति वर्तमानार्थकशानजन्तप्रयोगः सुशोभनः ।

## [जन्मभिः गुणोत्कर्षमाप्नोति भगवान्]

अथ तादृशेन जननेन मालिन्यलेशमपि अनुद्वहन् इति । संसारिणो वयं तु कर्महेतुकैः जन्मभिः मालिन्यम् अश्नुमहे ; भगवांस्तु नैवम् ; **'स उ श्रेयान् भवति जायमानः'** (यजुः.सं.३-६-३) इति हि श्रुतिराम्नाति । श्रुतेः अस्याः स्वादीयानर्थो अवधीयताम् । स उ श्रेयान् इत्यत्र **उः** - अवधारणार्थकः (प्रणवे इव) अयमुकारः कुत्र अन्वेति ? **सः,**

**श्रेयान्, भवति, जायमानः** इत्येतेषु चतुर्ष्वपि पदेषु अव्याहतान्वय एषः । स एव जायमानः श्रेयान् भवति, स जायमान एव श्रेयान् भवति, स जायमानः श्रेयानेव भवति, जायमानः श्रेयान् भवत्येव - इत्थं नाम चतुर्विधोऽपि अन्वयः चारुतरः । सत्यपि अन्वयचातुर्विध्ये निष्पद्यमानोऽर्थस्त्वेक एव । स एवार्थः समनन्तरमेव मुनिवरेणैव स्वयं प्रपञ्च्यते शाणोल्लीढ मणिवत् अत्यन्तम् औज्ज्वल्यमधिवहद्भिः इत्यादिना । जन्मसु जन्मसु गुणोत्कर्षम् अप्रमेयमवाप्नोति भगवान् इत्युक्तं भवति ।

**[मोक्षप्रदत्वं भगवतोह्यसाधारणमहिमा इत्युक्तिः]**

अथ मोक्षाख्यसुप्रसन्नस्थानविशेषप्रदत्वरूपं स्वस्य एकान्तिकं स्वभावं कदाऽप्यविजहन् इत्यनेन विशेषणेन मोक्षप्रदत्वं भगवतोऽसाधारणमहिमा इति संप्रदायसरण्यां अत्यन्तम् अन्तरङ्गभूतो ह्यर्थः प्रकाश्यते । **'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति, तद्ब्रह्म'** (तै.उ.भृ.१-२) इत्युपनिषदा, **'जन्माद्यस्य यतः'** (ब्र.सू.१-१-२) इति ब्रह्मसूत्रेण च सृष्टिस्थितिसंहाराख्यं कृत्यत्रयमेव परस्य ब्रह्मणः प्रत्यपादि । भगवान् यामुनार्यः स्तोत्ररत्ने **'त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः'** (२०) इत्यनया सूक्त्या मोक्षप्रदत्वरूपं संसारविमोचनमपि सृष्टिस्थितिसंहारैः सह समयोजयत् । श्रीभाष्यमङ्गलश्लोके **'अखिलभुवनजन्मस्थेमभङ्गादिलीले'** इत्यादौ **'विनतविविधभूतव्रातरक्षैकदीक्षे'** इति द्वितीयपादेन मोक्षप्रदत्वं पृथगुक्तम् । पूर्वत्र भङ्गादीत्यत्र आदिपदेन मोक्षप्रदत्वस्य ग्रहीतुं शक्यत्वेऽपि **'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'** (तै.आर.३-११-३) इत्युपनिषदुक्ते अन्तःप्रवेशनियमने आदिपदग्राह्ये भूयास्ताम्, मोक्षप्रदत्वं तु कण्ठत एव वक्तव्यम् इत्याशयेनैव द्वितीयपादेन प्रत्येकशः तदनुगृहीतम् । अत्र श्रुतप्रकाशिका संसेव्या । एवं नाम यामुनार्योक्तौ श्रीभाष्यकारोक्तौ च निदानम् प्रकृतगाथासूक्तिरेव इति सत्सम्प्रदायवृद्धाः । मोक्षस्य सुप्रसन्नस्थानत्वेन व्यपदेशः प्राकृतभूमेः अस्याः कलुषमयत्वं स्मारयति । शेषं सुस्पष्टम् ।

**हिंदी - सौलभ्य रूप एकमात्र स्वभाववाले एवं व्यवस्था व नियम के विना अनेक योनियों मे जन्म लेने वाले भगवान, ऐसे जनन से सर्वथा मलिन न होते हुए, किंतु सान से घिसे हुए रत्न की तरह अत्यंत उज्ज्वल बनते हुए, उत्पत्ति विनाश रहित,**

नित्य प्रकाशमान कल्याण गुणों से युक्त हैं ; एवं सुप्रसन्न मोक्ष नामक स्थान देने के अपने असाधारण स्वभाव से कदापि न चूकते हैं ; तथा निर्हेतुक-कृपा-विशिष्ट होने के कारण, अपने अंतरंगभक्तों के बहुत समीप में रहते हैं और अभक्तों से बहुत दूर रह जाते हैं ।

**[सौलभ्य ही भगवान का स्वाभाविक गुण है]**

हमारे पूर्वाचार्य, अपने ग्रंथों में संप्रदायपरंपरावगत इस अर्थ का वर्णन करते हैं कि श्रीशठकोपसूरि पूर्वगाथा में गोपालकृष्ण के नवनीत चौर्यप्रयुक्त दामबंधन वृत्तांत का अनुसंधान कर छह मास तक मूर्छित थे । इस विषय में श्रीकूरेश स्वामीजी का एक सुंदर पद्य उस गाथा की टीका में दिया गया है । बाद में आळ्वार सचेत हो गये और उक्त पद्य पर फिर ध्यान देने लगे । उस में लिखा गया है कि भगवान भक्तजनसुलभ हैं । इस से आळ्वार के मन में तृप्ति न हुई । उन को ऐसा लगा कि भक्त जनों के लिए सुलभ होना अथवा रहना कोई महान गुण नहीं है ; क्यों कि लोक में भी कदाचित् ऐसे लोग मिल सकते हैं, जो महान होते हुए ही अपने प्रेमियों के सुलभ रहते हैं । अतः भगवान को भी ऐसे ही गुणवान कहना उतना उचित नहीं है । अतः प्रकृत गाथा में वे कहते हैं कि भगवान का एक मात्र स्वभाव ही सौलभ्य है । अर्थात् भगवान जब अपने भक्तों के विषय में सौलभ्य सौशील्यादि गुणों को प्रकाशित करते है, तब उन के अनुभव करनेवाले रसिक लोग कहते हैं कि सौशील्य ही इन का स्वाभाविक गुण है ; परत्व तो आगंतुक है ।

**[अवतारों की विशेषता]**

व्यवस्था व नियम के विना अनेक योनियों में जन्म लेनेवाले - कहने का तात्पर्य दो प्रकार होता है । तथाहि - भगवान, इस व्यवस्था की उपेक्षा कर कि अमुक योनि में जन्म लिया जा सकता है, अमुक में नहीं, विना संकोच, समस्त योनियों में भी जन्म लेते हैं । तथा उक्त एकैक जन्म में भी यह नियम छोड कर कि अमुक चेष्टित ही यहां कर्तव्य है, अमुक नहीं, विना संकोच, समस्तविध चेष्टा भी करते हैं । यह पूर्वाचार्यों का अर्थवर्णन प्रकार हुआ । श्री पराशरभट्टार्य स्वामीजी तो कहते थे कि पूर्वोक्त व्यवस्था व नियम, ये दोनों व्यवस्था-शब्द के ही अर्थ हो सकते हैं ; अतः नियम-शब्द

का दूसरा ही अर्थ लगाना चाहिए । वह यह है कि भगवान अवतार लेकर जब सौलभ्य का प्रकाशन करते रहते हैं, तब बीच में अपने परत्व का भी प्रकाशन कर डालते हैं । अर्थात् वे यह नियम नहीं रखते कि अवतार में सौलभ्य का ही प्रकाशन करना है । अर्जुन के सारथि बनकर रथ हाँकते हुए ही उन्होने भगवद्गीता का उपदेश दिया और विश्वरूप का प्रदर्शन किया ; एवं शिवजी से पुत्रवर मांगने के लिए कैलास पधारते हुए मार्ग में घंटाकर्ण को मोक्ष दिया । ऐसे आश्चर्य चेष्टितों को श्रीभट्टर स्वामीजी ने नियमवर्जित चेष्टित मानते थे ।

**[कृपावश होने से भगवान के जन्म होते रहेंगे]**

अनेक योनियों में जन्म लेनेवाले - हम संसारी लोग भी बारंबार योनियों में जन्म लेते हैं, भगवान भी ऐसे करते हैं । हमारी जन्म परंपरा एक दिन बंद होगी, भगवान के जन्म तो कभी समाप्त न होंगे । इस का कारण यही है कि हमारे जन्म पुण्यपापरूप कर्मकृत होते हैं । जब वह कर्म सर्वथा नष्ट हो जायगा, तब हमारा जन्म भी रुक जायगा । भगवान के जन्मों का कारण तो चेतनों के प्रति उन की कृपा ही है, न तु कर्म ; कृपा तो कभी शांत न होगी ; अतः तत्प्रयुक्त जन्म भी सर्वदा होते रहेंगे, न तु कदापि विरत होंगे ।

**[भगवान जन्म लेने से और भी उज्ज्वल होते हैं]**

ऐसे जनन से मलिन न होते हुए इत्यादि । संसार में जन्म लेनेवाले हम तो और भी अनेक कर्म करते हुए मलिन बनते हैं, परंतु भगवान जन्म लेने पर न केवल मलिन न होते हैं, किं तु और भी प्रकाशमान होते हैं ; कारण है कि जन्म के समय उन की कृपा का प्रकाशन होता है । अत एव श्रुति ने कहा **'स उ श्रेयान् भवति जायमानः'** । (यजु.सं.३-६-३) इस वाक्य का यह अर्थ है - सः - भगवान, उ - ही, जायमानः - जन्म लेते हुए, श्रेयान् - श्रेष्ठ (अथवा उज्ज्वल), भवति - होता है ; अर्थात् भगवान जन्म लेकर और भी उज्ज्वल होते हैं । इस वाक्यगत उ' शब्द, (जो एवकारार्थक है) चारों शब्दों से भी अन्वित हो सकता है । तथाहि - (१) **सः उ जायमानः श्रेयान् भवति** - भगवान ही जन्म लेते हुए श्रेष्ठ बनते हैं ; न तु जीव । (२) **जायमानः सः श्रेयान् उ भवति** - जन्म लेने पर भगवान श्रेष्ठ ही होते हैं ; न तु कदाचित् मलिन

भी । (३) **जायमानः सः श्रेयान् भवति उ** - जन्म लेने पर भगवान अवश्य ही श्रेष्ठ होते हैं ; न तु कदाचित् न भी होते । (४) **सः जायमानः उ श्रेयान् भवति** - भगवान जन्म लेने पर ही श्रेष्ठ बनते हैं ; न तु परमपद में ही रहने पर ; अर्थात् परमपद में भगवान के कल्याणगुणों का प्रकाशन न होता है ; अवतारों में ही ये सब खूब प्रकाशित होते हैं । इन चार वाक्यों का भी तात्पर्य यही है कि जन्म लेते लेते भगवान के सौशील्य सौलभ्यादि सभी गुण विशेष उज्वल होते हैं । यही अर्थ आळ्वार से बताया जाता है - सान से घिसे हुए रत्न की तरह अत्यंत उज्वल बननेवाले इत्यादि ।

**[मोक्षप्रदत्व भगवान की असाधारण महिमा है]**

फिर, सुप्रसन्न मोक्ष नामक स्थान देने के अपने असाधारण स्वभाव से कदापि न चूकते हैं - कहने का यह तात्पर्य है कि मोक्ष देना भगवान का ही असाधारण महिमा है । यद्यपि वेदांत शास्त्र में जगत् की सृष्टि, रक्षा और संहार, ये तीन ही परब्रह्म के असाधारण काम अथवा लक्षण बताये गये हैं । यथा तैत्तिरीय उपनिषद ने गाया - **'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्ब्रह्म'** (तै.उ.भृ.१-२) एतदनुसार ब्रह्मसूत्र भी बनाया गया - **'जन्माद्यस्य यतः'** (ब्र.सू.१-१-२)। परंतु हमारे आचार्य इतने से तृप्त नहीं होते । उन का मंतव्य है कि मोक्ष देना ही भगवान का मुख्य काम है ; सृष्टि स्थिति इत्यादि तो मोक्षदान के पूर्वांग हैं । यथा श्री यामुनाचार्य स्वामीजी ने स्तोत्ररत्न में अनुगृहीत किया, **'त्वदाश्रितानां जगदुद्भवस्थिति-प्रणाशसंसारविमोचनादयः'** (२०) इत्यादि । श्रीभाष्यकार स्वामीजी ने भी श्रीभाष्य के मंगलश्लोक प्रथमपाद **'अखिलभुवनजन्मस्थेमभङ्गादिलीले'** में, आदिशब्द के रहते हुए भी, दूसरे पाद में **'विनतविविधभूतव्रातरक्षैकदीक्षे'** कहकर स्पष्ट बता दिया कि मोक्षप्रदान ही भगवान का मुख्य काम है । इस विषय में श्रीभाष्यव्याख्या श्रुतप्रकाशिका बहुत रसमय है । इन दोनों आचार्यों की उक्त श्रीसूक्तियों का मूल तो नम्माळ्वार की प्रकृत गाथा ही है । मोक्ष को सुप्रसन्न कहने का यह भाव है कि संसार तो सर्वथा कलुषित है ।

**अमैवुडै यरनेरि मुळुवदु मुयर्वर वुयर्न्दु**
**अमैवुडै मुदल्केडल् ओडिविडै यर निल मदुवाम्**
**अमैवुडै यमररुम् यावैयुम् यावरुम् तानाम्**
**अमैवुडै नारणन् मायैयै अरिबवर् यारे ।। ३ ।।**

**(गाथा) - पूर्णं धर्ममवाप्तुमुत्तमगतिं प्राप्ताश्च सर्गे लयं**
**कर्तुं च प्रभवोऽमरास्तदितरे ये चेतनाचेतनाः ।**
**ते सर्वेऽपि स एव भाति भगवान्नारायणश्श्रीधरः**
**पूर्णस्सिद्ध इहास्य जन्मचरिते मायान्तु को वेत्ति वा ।। ३ ।।**

[प्रतिपदार्थः]

**विवरणम् - सातिशयान् धर्ममार्गान् अशेषान् अविकलम् अनुष्ठाय सर्वोत्कर्षेण विराजमानानां सृष्टिसंहारावान्तरसंहारकार्येषु अत्यन्तकुशलानां ब्रह्मादिदेवानाम् अथ च सर्वेषामपि चेतनाचेतनवस्तूनां वाचकाः शब्दाः यस्मिन् भगवति पर्यवस्यन्ति, एतादृशातिशयवतो भगवतो नारायणस्य आश्चर्यशक्तियोगं को वा जानाति हन्त ! ।। (न कोऽपि ज्ञातुं प्रभवतीति यावत्) ।**

**[सर्वे शब्दाः अपर्यवसानवृत्त्या भगवद्वाचकाः]**

भगवतः अवताररहस्यं कस्यापि बुद्धेः अगोचरम् इत्युच्यते गाथयाऽनया । सः भगवान् कीदृशः इति चेत्, सर्ववस्तुसामानाधिकरण्यार्हः इत्यभिधीयते । लोके यस्य कस्यापि वस्तुनो वाचको यः कोऽपि शब्दः अपर्यवसानवृत्त्या भगवद्वाचको भवतीति वेदान्तिनां सिद्धान्तः । ब्रह्मरुद्रादीनां वाचकाः शब्दाः अपि भगवति नारायणे एव पर्यवस्यन्तीति विवक्षन् मुनिवरः प्रथमतः तान् ब्रह्मादिदेवान् प्रस्तौति । ते विशेष्यन्ते - सातिशयान् धर्ममार्गान् अशेषान् अनुष्ठाय इत्यादितः । **'युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम'** ।। **'महादेवस्सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव'** ।। इत्यादि प्रमाणशतप्रतिपादितरीत्या अतिशयितान् धर्ममार्गान् अशेषान् अनुष्ठाय सर्वोत्कर्षेण विराजमानाः ते अमरप्रवराः । पुनः कीदृशाः ते ? सृष्टौ संहारे अवान्तरसंहारे च भगवदाज्ञाबलेन प्राप्ते सति तन्निर्वाहे अत्यन्तकुशलाः । 'किमेतानि परमपुरुषेणैव कृतानि' ? इति शङ्कितुं योग्यतया तत्तत्कार्यनिर्वाहनिपुणाः इति यावत् । तत्तत्कार्यनिर्वहणे ते निपुणाः भवन्ति इत्युक्तं भवति । तेषां वाचकाः शब्दाः भगवति पर्यवस्यन्ति । भगवत्पर्यन्ताभिधायकाः ते ते शब्दाः इति यावत् ।

**[भगवतः अवताररहस्यज्ञानं दुरवगमम्]**

न केवलम् एतावदेव ; तादृशदेवताविशेषवाचकाः चेतनवाचकाश्च तथा निखिलाचेतनवाचकाः शब्दाश्च अन्ततो यं परमपुरुषम् अभिधाय विश्राम्यन्ति,

तत्तादृशवैभवशालिनो भगवतो नारायणस्य अवताररहस्यं न कोऽपि ज्ञातुम् ईष्टे । सर्वथा स्वप्रकारभूतेषु प्राणिषु अन्यतमेन केनचित् प्राणिना मदीयोऽयं पुत्रः इत्यभिमन्तुं योग्यतयाऽवतीर्णस्य तस्य अवताररहस्यं विपुलविज्ञानशालिनामपि दुरवबोधम् इत्युक्तं भवति । अत एव गीतायाम् अवताररहस्याध्यायः इति प्रसिद्धे चतुर्थाध्याये **'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' ।।** (भ.गी.४-९) इति स्वेनैव गीयते स्म । **'पिता पुत्रेण पितृमान् योनियोनौ । नावेदविन्मनुते तं बृहन्तम्'** इति श्रुत्यर्थौ गाथयाऽनया विवृतोऽभूदिति प्रतिपत्तव्यम् । मूले नारायणस्य आश्चर्यशक्तियोगं को वा जानाति इत्यनेन वाक्येन विवक्षितं अवताररहस्यज्ञानस्य दुरवगमत्वमेव । को वा जानातीत्यत्र आचार्याणामेष रसघनः सूक्तिविन्यासः - नित्यमुक्ताः परत्वानुभवनिरतास्सन्तो न जानन्ति एतत्, संसारिणो नास्तिक्येन न विदन्ति, ब्रह्मादयो देवास्तु अवलेपभूम्ना नावबुध्यन्ते, पराङ्कुशादिसूरिवराणां तु व्यामोहो बोधप्रतिबन्धको भवति, स्वतः सर्वज्ञः सर्वेश्वरोऽपि **'सो अङ्ग वेद यदि वा न वेद'** इति श्रुत्याम्नातरीत्या संदेग्धि केवलम् इति ।

**[प्रतिपदार्थ]**

**हिन्दी - फल देने में समर्थ, समस्त धर्ममार्गों का ठीक अनुष्ठान कर परिपूर्ण महत्पदवी में विराजनेवाले, एवं सृष्टि, संहार और अवांतर संहार करने में बड़े निपुण ब्रह्मादि देवों के तथा दूसरे चेतनाचेतनात्मक समस्त पदार्थों के वाचक सभी शब्द जिन भगवान में पर्यवसित होते हैं, ऐसी महिमावाले भगवान नारायण के अत्याश्चर्यमय शक्तियोग को कौन जान सकता है ? (कोई भी नहीं ।)**

**[सभी शब्द अन्तर्यामी भगवान के वाचक हैं]**

इस गाथा में आळ्वार कहते हैं कि भगवान के अवतार का रहस्य किसी की बुद्धि का गोचर नहीं हो सकता । उन की यह महिमा बतायी जाती है कि वे सर्ववस्तुसमानाधिकरण हैं । अर्थात् वेदान्तियों का यह सिद्धांत है कि चेतनाचेतनरूप उस उस वस्तु के वाचक रूप से प्रसिद्ध सभी शब्द, वास्तव में, उन वस्तुओं के अंतर्यामी भगवान के वाचक होते हैं । इस न्याय से ब्रह्मा, शिव इत्यादि शब्द भी ब्रह्मादि के अंतर्यामी नारायण के वाचक हैं । इन ब्रह्मादियों का एक विशेषण दिया जाता है - फल देने में समर्थ, धर्म मार्गों का ठीक अनुष्ठान कर इत्यादि से । शास्त्र बताता है कि इन चतुर्मुखादि देवों ने बहुत समय तक भगवान की पूजा कर उस के

फलस्वरूप अपनी पदवी को प्राप्त किया । और ये अपने काम में, यानी भगवदाज्ञप्त जगत्सृष्टि, संहार, अवांतर संहार इत्यादि में बडे निपुण भी हैं । अर्थात् इन के काम देखनेवालों के मन में यह शंका होती है कि 'क्या ये काम इन देवों से किये गये ? अथवा साक्षात् भगवान से ही किये गये'? ऐसी है इन की कार्यकुशलता । तथा च ऐसे वैभववाले देवों के वाचक सभी शब्द, वास्तव में, भगवान के ही वाचक होते हैं ।

**[भगवान का अवताररहस्य जानना अशक्य है]**

इतना ही नहीं । दूसरे भी चेतनों के तथा अचेतन पदार्थों के वाचकतया प्रसिद्ध सभी शब्द, अंततो भगवान के ही वाचक होते हैं ; क्यों कि नारायण नामधारी भगवान उन सब के अंतर्यामी हैं । इस प्रकार सर्वव्यापक भगवान अपने व्याप्य किसी (दशरथ आदि) चेतन के पुत्ररूप से जो जन्म लेते हैं, इस अवतार के रहस्य को ठीक कौन जान सकता है ? स्वयं भगवान ने, गीता में **'जन्म कर्म च मे दिव्यम्'** (भ.गी.४-९) इत्यादि कहते हुए, इस अवताररहस्य को श्रेष्ठ ब्रह्मविद्या बतायी । **'पिता पुत्रेण पितृमान् योनियोनौ'** इत्यादि श्रुति भी कहती है कि सब के पिता भगवान, अपने पुत्र किसी चेतन को अपने पिता बनाकर, नाना योनियों में जन्म लेते हैं । इसी श्रुति की विवरण करना ही प्रकृत गाथा का लक्ष्य है । यद्यपि मूलगाथा में अवतार का वाचक स्पष्ट शब्द प्रयुक्त नहीं ; वरन इतना ही कहा गया है कि 'भगवान की आश्चर्यशक्ति को कौन जान सकता है'? तथापि पूर्वाचार्यों का अभिप्राय है कि आळ्वार अब अवताररहस्य की ही बात कर रहे हैं ।

**[आचार्यों की सरस व्याख्या]**

इस प्रकरण में उन की यह टीका रसमय है - कौन जान सकता है ? परमपदनिवासी नित्य व मुक्त भगवान के परत्वगुण का ही अनुभव करते हुए अवतार प्रयुक्त इस सौलभ्य पर ध्यान नहीं देते ; संसारी जन तो नास्तिक होने के कारण यह नहीं जानते ; ब्रह्मादि देव भी अपने अपने भोग में मस्त रहने से यह नहीं जानते ; परांकुश परकालादि आळ्वारगण तो अवतार के नाम लेते ही भावावेश से मूर्छित हो जाने से नहीं जानते ; स्वतः सर्वज्ञ भगवान भी अपने बारे में वेदपुरुष की इस शंका **'सो अङ्ग वेद यदि वा न वेद'** (अर्थात हो सकता है कि भगवान अपनी महिमा को ठीक जानते हों अथवा न भी जानते हों) के अनुसार शायद ही जानते हों । अतः उक्त अवतार रहस्य के ज्ञाता उभयविभूति में भी नहीं मिलता ।

**यारुमोर् निलैमैयनेन अरिवरिय वेम्बेरुमान्**
**यारुमोर् निलैमैयनेन अरिवेळिय वेम्बेरुमान्**
**पेरु मोरायिरम् पिरपलवुडैय वेम्बेरुमान्**
**पेरुमोरुरुवमुम् उळदिल्लै यिलदिल्लै पिणक्के ।। ४ ।।**

**(गाथा) - नाथोऽयं मम नामरूपशतसाहस्रावळीभृत्स्वयं**
**भात्येकस्सुविलक्षणस्त्विति विदुर्नैवं बुधा नास्तिकाः ।**
**जानन्त्येव किलास्तिकास्तु तमिमं विद्याविहीना अहो !**
**रूपं नाम च नास्य भाति किल भातीत्येव वादो महान् ।। ४ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - अतिशयितज्ञानवतामपि सताम् इत्थंभूतोऽयमिति स्वयत्नेन निर्धारयितुमशक्यः, निजनिर्हेतुकानुग्रहलक्ष्यभूतानां जघन्यजनानामपि सतां निर्धारयितुं शक्येन स्वभावेन विशिष्टः, परस्सहस्रैः नामभिः तदनुगुण रूपविशेषैश्च उपलक्षितः अस्मत्स्वामी नामरहितो रूपरहितः इति केषाञ्चित् प्रतिपत्तिभाजनम् ; नामरूपविशिष्टः एवेति वैदिकानां प्रतिपत्तिभाजनम् । अत्र हन्त ! नित्यमनुवर्तते विवादः ।।**

**[अपरिच्छेद्यमहाविभूतिकः अनन्तदयैकसिन्धुश्च भगवान्]**

श्रीपराशरभट्टार्याः श्रीरङ्गराजस्तवोपक्रमे **'अस्ति वस्त्विदमित्थंत्व प्रसंख्यान-पराङ्मुखम् । श्रीमत्यायतने लक्ष्मीपदलाक्षैकलक्षणम्'** ।। (पूर्व.श.९) इत्यनुजगृहुः यत्, तदस्याः गाथायाः प्रथमपादसमीक्षया । इदंत्वेन इत्थंत्वेन च प्रसंख्यातुम् अयोग्यं वस्तु यत्, तत् तुच्छमेव खलु भवितुमर्हति इति नाशङ्कनीयम् ; तादृशशङ्काव्युदासायैव हि अस्तीत्युपक्रान्तम् । सदेव वस्तु स्वरूपरूपगुणविभूत्यादीनाम् आनन्त्यात् उत्तुङ्गताभूम्रा च अस्मादृशां मितम्पचमतीनाम् इदंत्वेन इत्थंत्वेन च प्रसंख्यातुम् अशक्यं भवति। भगवद्यामुनार्याः स्तोत्ररत्ने **'नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये'** । (२१) इति पूर्वार्धं निबध्य, एतेन पादद्वयेनोक्तमर्थं स्वयमेव व्याचक्षते उत्तरार्धेन **'नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे'** ।। इति । अत्रेदं विव्रियते मनाक् -

अपरिच्छेद्यमहाविभूतिकत्वेन हेतुना वाङ्मनसातिभूमिः भवति भगवान् । अनन्तदयैकसिन्धुत्वेन हेतुना वाङ्मनसैकभूमिश्च स भवति । **'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह'** (तै.उ.आन. ९-१), **'यद्वाचाऽनभ्युदितम्'** (केन.उ.१-४) इत्यादिषु अभिप्रेतं परमयोगिनामपि वाङ्मनसाभ्याम् अपरिच्छेद्यत्वं यदस्ति भगवद्विभूतीनां, तत्तस्य परस्य पुंसो वाङ्मनसातिभूमित्वं जनयति । गोपगोपिकादीनामपि वाङ्मनसयोः एकभूमित्वं यदस्य समजनि, तत् तदीयाप्रतिमपरमकृपाबलप्रयुक्तं भवति इति भावः । एवमेव अत्रापि अतिशयितज्ञानवतामपि सताम् इत्थंभूतोऽयमिति स्वयत्नेन निर्धारयितुम् अशक्यः इति कथनम् अपरिच्छेद्यविभूतिकत्वप्रयुक्तम् ; भगवदनुग्रहपात्रत्वविरहप्रयुक्तं वा भवितुमर्हति ।

### [अत्र प्रमाणानि]

**'समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं,भक्तजनैरदुर्लभम्'** (व.स्त.१०१) इति श्रीकूरनाथगुरुवरसूक्तिश्च अत्रानुसन्धेया वरदराजस्तवीया । **'दाशाय कीशाय च राक्षसाय', 'निषादानां नेता कपिकुलपतिः काऽपि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति'** (द.श.६५) इत्याद्युक्तरीत्या क्षोदीयांसः इति भावयितुम् अर्हाणां गुहादीनामपि हि सुलभः सुगमश्च समभूत् भगवान् । **'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम्'** (मुण्ड.उ.३-२-३) इत्यौपनिषदी सरस्वती चात्र साक्षिणी बोभवीति ।

### [भगवान् नामरूपविशिष्टः इति सिद्धान्तोक्तिः]

परस्सहस्रैः नामभिः तदनुगुणरूपविशेषैश्च: उपलक्षितः - महाभारते भीष्मः प्राह - **'सहस्रास्यस्सहस्राक्षः सहस्रचरणो विभुः । सहस्रबाहुस्सर्वज्ञो देवो नामसहस्रवान्'** ।। इति । कल्याणगुणवत्ताप्रकाशकत्वेन स्वरूपवाचकत्वेन च प्रथमानानि भगवन्नामानि परस्सहस्राणि ; तत्तन्नामावबोधितानि रूपाणि च तथा । एवं सत्यपि भगवदनुग्रहपात्रताविरहितैः विमतजनैः हन्त ! नामरूपविरहितत्वेन प्रतीयते । अत्र यद्यपि विमतानां विवादोऽस्ति, परमैकान्तिनां तु नैव विवादगन्धोऽपि ।

### [प्रतिपदार्थ]

**हिन्दी - भगवान ऐसे स्वभाव से युक्त हैं कि अत्यधिक ज्ञानवाले भी अपने प्रयत्न से उन को ठीक नहीं जान सकते ; और अत्यल्प ज्ञानवाले भी निर्हेतुक**

**भगवत्कृपापात्र होने पर उन को ठीक जान लेते हैं । एवं वे हजारों शुभनामों से एवं तदनुगुण रूपों से युक्त हैं । ऐसे हमारे स्वामी भगवान के विषय में नित्यविवाद चलता है । कोई उन को नामरहित व रूपरहित कहते हैं और वैदिकलोग उन को नामरूपयुत मानते हैं ।**

**[भगवान अनन्त विभूतिमान और दयावान हैं]**

**'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह'** (तै.उ.आन.९-१), **'यद्वाचाऽनभ्युदितम्'** (केन.उ.१-४) इत्याद्युपनिषद के अनुसार भगवान के स्वरूप व स्वभाव इतने विलक्षण होते हैं कि बडे बडे ज्ञानी लोग भी उन को ठीक नहीं जान सकते ; उन की कल्पना तक नहीं कर सकते । किं तु कल्पनातीत कहने का यह अर्थ नहीं कि वह वस्तु तुच्छ (माने असत्) है ; वस्तु तो अवश्य है, परंतु बात इतनी है कि हमारी वाणी अथवा कल्पना वहां तक पहुंच नहीं सकती । तथापि उस भगवान की निर्हेतुक कृपा का पात्र बननेवाला मानव उन को ठीक जान भी सकता है । जब स्वयं भगवान ही किसी व्यक्ति पर कृपा कर उस को अपने (भगवान के) स्वरूप व स्वभाव दिखाएँ, तो उन को जानने में क्या क्लेश है ? 'दिव्यं ददामि ते चक्षुः' कह कर जब श्रीकृष्ण भगवान ने अर्जुन को विश्वरूप दिखाया ; तब अर्जुन ने सानंद उन के दर्शन पाये न ? तथा च यह अर्थ सिद्ध हुआ कि कोई भी मानव अपने प्रयत्न से भगवान का वैभव नहीं जान सकता ; उन के कृपापात्र बनने पर तो अवश्य ही ठीक जान सकता है । श्री यामुनचार्यस्वामीजी ने भी स्तोत्ररत्न में इसी अर्थ का वर्णन किया - **'नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये'** । (स्तो.र.२१) एक ही वाक्य में भगवान को वाङ्मनसागोचर और वाङ्मनसगोचर भी कहना तो एक समस्या-जैसा वचन है । अतः स्वामीजी उत्तरार्ध में स्वयं इस का विवरण करते हैं - **'नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे'**। (स्तो,र.२१) इस का यह भाव है कि अनंतमहाविभूति, यानी अपरिमित वैभववाले, होने से भगवान वाङ्मनसागोचर होते हैं ; एवं अपार दया सागर होने से उस दया के पात्र बननेवाले धन्य पुरुष के लिए वाङ्मनसगोचर होते हैं ।

**[ज्ञान के दुर्लभ, भक्ति के सुलभ कहने के प्रमाण]**

श्री कूरनाथ स्वामीजी ने भी वरदराजस्तव में गाया - **'समाहितैस्साधु सनन्दनादिभिः सुदुर्लभं भक्तजनैरदुर्लभम्'** । (१०१) इस का भी तात्पर्य यही है कि

स्वप्रयत्न में विश्वास करने पर सनक सनंदनादि बडे समर्थ योगी भगवान को नहीं जान अथवा पहुंच सकते हैं और भक्त लोग (उन के कृपापात्र) तो सर्वथा उन को जान सकते हैं और पाते भी हैं । **'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्'** ।। (मुण्ड.उ.३-२-३) यह श्रुति भी इस विषय में प्रमाण है । इस का यह तात्पर्य है - (केवल) प्रवचन, मनन, श्रवण आदि से भगवान अज्ञेय हैं ; परंतु जिस व्यक्ति को स्वयं भगवान अपने प्रिय मानकर वरण करेंगे, उस के लिए वे सुलभ होते हैं । शास्त्रों की यह घोषणा है कि श्रवण मनन इत्यादि भगवत्प्राप्ति के साधन हैं ; इस से विरुद्ध अर्थ का वर्णन तो नहीं किया जा सकता । अतः प्रकृत वाक्य का तात्पर्य यही है कि भगवत्कृपा से उत्पन्न भक्ति से विरहित शुष्क श्रवण मननादि व्यर्थ है । भगवद्गीता के विश्वरूपाध्याय में भगवान ने भी इसी अर्थ का वर्णन किया - **'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।। भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप'** ।। (भ.गी.११-५३,५४) भगवद्-ज्ञान व प्राप्ति के साधन के रूप में शास्त्रों में उपवर्णित वेदाध्ययन, तपस्या, दान, यज्ञ इत्यादि स्वयं उक्त कार्य करने में असमर्थ हैं । अनन्य भक्ति से ही भगवान के ज्ञान, दर्शन व लाभ हो सकते हैं । ऐसी भक्ति तो उन की कृपा से ही मिलनेवाली वस्तु है ।

**[शास्त्रों का सिद्धान्त है कि भगवान नामरूपविशिष्ट हैं]**

गाथा के उत्तरार्ध में भगवान का और एक चमत्कार बताया जाता है । शास्त्रों में स्पष्ट बताया गया है कि भगवान के हजारों शुभ नाम होते हैं । श्रीविष्णुसहस्रनाम, गोपालसहस्रनाम इत्यादि अनेक सहस्रनाम तो प्रसिद्ध ही हैं । ये सभी नाम भगवान के कल्याणगुणों का वर्णन करते हैं । एवं एकैक नाम उक्त कल्याणगुण के प्रकाशक भगवान के एकैक रूप का बोधक होता है । तथा च भगवान के अनंत नाम व रूप सिद्ध हुए । भगवत्कृपापात्र भक्तजन तो इन नामों का सानंद अनुभव करते है ; कृपारहित दूसरे लोग तो यह नहीं जान सकते और कह डालते हैं कि भगवान नामरूपशून्य हैं । इस प्रकार भक्ताभक्तों के बीच में यह विवाद नित्य चलता रहता है । शास्त्रों में क्वचित् भगवान को जो नामरूपरहित बताया गया हैं, उस का पूर्वोक्त

रीति से अर्थ समझनेवाले परमभक्ताग्रेसर तो कभी इस विषय में विवाद अथवा शंका नहीं करते कि क्या भगवान वास्तव में नामरूपों से शून्य है या युक्त हैं ।

**पिणक्कर वरुवहैच्मयमुम् नेरियुळ्ळि युरैत्त**
**कणक्करु नलत्तनन् अन्दमिलादि अम्बहवन्**
**वणक्कुडैत्तवनेरि वळिनिन्रु पुरनेरि कळैकट्टु**
**उणर्क्कुमिन् पशैयर अवनुडै युणर्वुकोण्डुणर्न्दे ।। ५ ।।**

**(गाथा) -** **एवं षट्समयैश्च वादसरणिर्नश्येदिति श्रीधरो**
**वेदान्तार्थसुधारसं हि भगवान् कल्याणशीलोऽब्रवीत् ।**
**आदिश्चान्तविवर्जितः किल हरिस्तद्भक्तिमार्गं शुभं**
**प्राप्यानन्यपरायणाश्च भवत प्रध्वस्तकर्माशयाः ।। ५ ।।**

[प्रतिपदार्थः]

**विवरणम् - वैदिकसमयविप्रतीपानां सांख्ययोगकाणादजैनबौद्ध-पाशुपताख्यानां षण्णां दर्शनानां वैदिकसमयेन सह स्थितस्य विरोधस्य शमनार्थम् असंख्येयकल्याणगुणगणशालिना अपरिच्छिन्नवैभवशालिना जगन्निदामभूतेन च भगवता परमात्मना अवतारिते गीताशास्त्रे निष्णाताः सन्तो भो जनाः ! तत्प्रोक्तभक्तिमार्गे प्रतिष्ठिताः भूत्वा विषयान्तरसङ्गं सवासनं विहाय तस्य परमात्मनो भजनप्रकारं बुध्वा प्रकृतिसंबन्धं सवासनं शोषयत । (इति परेभ्यः उपदिशति ।।)**

**[गीताशास्त्रं प्रमाणमिति सूच्यते]**

गाथायामस्यां गीताशास्त्रं प्रमाणीक्रियते । **'वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम् । भारते भगवद्गीता धर्मशास्त्रेषु मानवम्'** ।। इत्युक्तप्रक्रियया महाभारतमात्रसारभूतं न गीताशास्त्रम् ; अपि तु सर्वोपनिषत्सारभूतं च प्रथते । सद्वारकशास्त्रेभ्योऽपि अद्वारकशास्त्रस्य अभ्यर्हितत्वात् भगवता वासुदेवेन स्वयम् अवतारितमिति हेतुना विशिष्यते चैतद्गीताशास्त्रम् । तदिदम् अस्यां गाथायां कस्मिन्नंशे प्रमाणीक्रियते इति चेत् ; अधस्तनगाथाप्रस्तुतो विवादो न प्रामाणिकः इत्यंशे, भजनोपायबोधनांशे च ।

बाह्यसमयषट्कस्य वैदिकसमयेन सह विरोधो वर्तते इत्येतत् सुप्रसिद्धमेव ननु वेदान्तिनां समाजे । भगवद्गीताप्रपञ्चितार्थसार्थतः बाह्यदर्शनार्थप्रत्याख्यानसंभवेन विरोधशमनं जायते इत्यभिसन्धिः । तथा च बाह्यदर्शनार्थनिरासकगीताशास्त्रप्रदायकत्वरूपं वैभवमिह भगवतः प्रतिपादितं भवति ।

[भगवत्स्वरूपनिरूपणम्]

स भगवान् कीदृशः ? **'कणक्करु नलत्तनन्'** - असंख्येयकल्याणगुणगणविभूषितः । अथवा अपरिच्छेद्यप्रेमभरितः । **'न काङ्क्षे विजयं कृष्ण'** (भ.गी.१-३१) इत्यभिधाय विसृज्य सशरं चापं रथोपस्थे उपविष्टः पाण्डुतनयो, यद्यपि **'पृच्छामि त्वा धर्मसंमूढचेताः शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् । यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे'** (भ.गी.२-७) इति प्रार्थितवान् तथाऽपि, अधुना गीतायाम् उपलभ्यमानानाम् उपायविशेषाणाम् अशेषाम् अपदेष्टव्यतां स मनसाऽपि न आकलयति स्म ; तस्य युद्धप्रोत्साहनार्थं यावदुपदेष्टव्यम्, न हि खलु तावदेव उपदिष्टमिह ; तत्तदधिकारानुरूपाणां भूयसाम् अपायानां यदस्ति प्रतिपादनमिह, तत्सत्यम् अस्मादृशेषु संसारिषु प्रेमपारवश्यादेव खलु ; तदेव सूच्यते अपरिच्छेद्यप्रेमभरितत्वविशेषणेन । सः भगवान् पुनः कीदृशः ? भगवच्छब्दवाच्यत्वेन अपरिच्छिन्नवैभवशाली, जगन्निदानभूतश्च । **'निदानं त्वादिकारणम्'** । (अ.को.१-५-२८)

[गीतोक्तप्रकारेण आचरत इत्युपदेशः]

एतादृशेन भगवता अनुगृहीते अध्यात्मशास्त्रतल्लजे श्रीमति गीताशास्त्रे **'मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां भक्त्या तुष्यन्ति च रमन्ति च'** ।। (भ.गी.१०-९) **'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः'** ।। (भ.गी.१९-६५) इत्यादितः प्रतिबोधिते तपोरूपभक्तिमार्गे निष्णाता भूत्वा विप्रतीपमार्गश्रद्धाव्युदसनपूर्वकं व्याप्रियध्वम् । **'विषया विनिवर्तन्ते निराहारस्य देहिनः । रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते'** ।। (भ.गी.२-५९) इति गीतोक्तरीत्या परमपुरुष-दृष्ट्यनन्तरभाविनिवृत्तिको रसोऽपि यथा नाम अत्रैव शुष्येत् तथा व्याप्रियध्वम् ।

[प्रतिपदार्थ]

**हिन्दी - (सांख्य-योग-काणाद जैन-बौद्ध-पाशुपतरूप) छह अवैदिक दर्शनों से विरोध परिहार करने के लिए वेदमार्ग का ठीक विवेचन करके (गीताशास्त्र के) उपदेश करनेवाले, असंख्येयकल्याणगुणगणपरिपूर्ण,**

**जगत्कारणभूत, असीम वैभववाले, सुंदरज्ञानादि षाड्गुण्यपरिपूर्ण भगवान के श्रेष्ठ भक्तिमार्ग में निष्णात हो कर, वासना के साथ विषयांतर-संग छोडकर, उन के उपदेश (गीताशास्त्र) से ज्ञान प्राप्त कर, प्रकृति संबंध को भी वासना के साथ सुखा दें ।**

**[गीताशास्त्र प्रमाण है]**

इस गाथा में भगवद्गीताशास्त्र प्रमाण बताया जाता है । यह शास्त्र न केवल महाभारत का, अपितु समस्त उपनिषदों का भी सार है । एवं साक्षात् भगवान के श्रीमुख से निकलने का भाग्य भी इसे मिला है । ऐसा वैभवोपेत यह शास्त्र पूर्वगाथोक्त विवाद को अप्रामाणिक बताता है ; और भगवत्प्राप्ति के लिए उपाय बताता है । एवं अवैदिक दर्शनोक्त अपार्थों को दूर कर यह शास्त्र वैदिक दर्शन का उन से विरोध शांत कर देता है । तथा च भगवान का यह वैभव बताया गया कि वे ऐसे महान गीताशास्त्र के प्रदाता हैं ।

**[असीम प्रेम से भगवान ने गीतोपदेश किया]**

भगवान का यह एक विशेषण दिया गया है कि **कणक्करु नलत्तनन्** - अर्थात् असंख्येयकल्याणगुणगणपरिपूर्ण ; अथवा असीम प्रेमवाले । इस का यह भाव है - भगवान ने केवल अर्जुन को लक्ष्यकर गीता का उपदेश नहीं दिया ; परंतु हमारे जैसे संसारियों के उद्धार को भी अपने लक्ष्य में रखकर ही उन्हों ने इस विस्तृत शास्त्र का उपदेश दिया । तथाहि - यद्यपि अर्जुनविषादयोग नामक पहले अध्याय में तथा विशेषतः दूसरे अध्याय के प्रारंभ में अर्जुन ने भगवान से धर्माधर्मों के निर्णय का उपदेश मांगा ; जिस के प्रत्युत्तर रूप में ही भगवान ने गीता का प्रदान किया । अर्जुन को कर्म, ज्ञान, भक्ति, शरणागति इत्यादि वेदांतार्थो की जिज्ञासा नहीं थी । युद्ध में अर्जुन को प्रोत्साहित करने के लिए भगवान को इतना लंबा उपदेश देने की आवश्यकता भी नहीं थी । अतः सुदृढ रूप से समझ लेना चाहिए कि दूसरे तत्वजिज्ञासुओं को लक्ष्य करके ही भगवान ने यह विस्तृत उपदेश दिया । इस का कारण संसारियों के प्रति भगवान का असीम प्रेम ही है ।

**[गीता के निर्देश पर चलने का उपदेश]**

ऐसी गीता में '**मच्चिता मद्गतप्राणाः**,' (भ.गी.१०-९) '**मन्मना भव मद्भक्तः**' (भ.गी.१९-६५) इत्यादि अनेक श्लोकों से प्रतिपादित भक्तिमार्ग में चित्त लगा कर,

**'रसोऽप्यस्य परं दृष्ट्वा निवर्तते'** (भ.गी.२-५९) इत्युक्त रूप से वासनानिवृत्त भी हो कर और अन्य मार्गों में श्रद्धा छोड कर एकनिष्ठ होने का उपदेश देना प्रकृत गाथा का उद्देश्य है ।।

**उणर्न्दुणर्न्दु इळिन्दहन्नु उयर्न्दुरु वियन्द विन्निलैमै**
**उणर्न्दुणर्न्दु उणरिलुम् इरैनिलै युणर्वु अरिदु उयिर्हाळ्**
**उणर्न्दुणर्न्दु उरैत्तुरैत्तु अरिययनरनेन्नु मिवरै**
**उणर्न्दुणर्न्दु उरैत्तुरैत्तु इरैञ्जुमिन् मनप्पट्टदोन्ने ।। ६ ।।**

**(गाथा) - ज्ञातृत्वात्सततं च चिन्तनपरास्सर्वासु दिक्षु स्वयं**
**ज्ञानस्य प्रसरं विरच्य च जडाद्यावृत्तिमेतां निजाम् ।**
**निश्चित्य श्रवणात्पुनश्च मननाद्योगाच्च मध्यस्थितिं**
**विष्णोर्वित्थ जनास्त्रिमूर्तिषु हृदा वाचा भजध्वं परम् ।। ६ ।।**

[प्रतिपदार्थः]

**विवरणम् - ज्ञातृत्वैकस्वरूपं ज्ञानतः सर्वगतं प्रकृतिविनिर्मुक्तस्वरूपं (जीवात्मस्वरूपम्) यद्यपि यथायथं विशदमवबोद्धुं शक्येत, तथाऽपि आश्रयणरुचिशालिभक्तजन - समाश्रयणीयत्वादि विशेषणविशेष्यादिरूपेण अवतीर्णः स एष सर्वेश्वरो ब्रह्मा वा ? शिवो वा ? नारायणो वा ? इति संदेहम् अपहाय निष्कृष्टार्थावबोधनं असुलभम् । तर्हि का गतिरिति चेत्, हरिः, अजः, हरः इत्येताः तिस्रो देवताः अधिकृत्य बहुशास्त्रश्रवणमननानि आकलयत । तथा करणे एकैव देवता संप्रतिपन्नसर्वेश्वरत्वेन भायात् ; अथ तामाश्रयत ।।**

**[शास्त्रपरिशीलने सर्वेश्वरत्वेन नारायण एव भाति इत्युक्तिः]**

सूरिवरस्य अस्य उपदेशं श्रुतवतां संसारिणाम् इयं पृच्छा समजनि - भगवन् मुनिसार्वभौम ! अवतारे समाश्रयत इत्युपादेशि तत्र भवता ; **'मध्ये विरिञ्चगिरिशं प्रथमावतारः'** (श्रीरङ्गराजस्तवे उत्तरशतके - ५१) इत्युक्तरीत्या ब्रह्मरुद्रयोः मध्ये अवतरणं प्रथमावतरणं श्रूयते ; तत्र त्रयो देवाः तुल्यकार्यत्रयाधिकृता इति हेतुना त्रयोऽपि देवाः

प्रधानभूताः किमु ? त्रिषु एकः प्रधानतमः किमु ? उताहो त्रिभ्योऽप्यन्यः कोऽपि अभ्यर्हितः ? इत्येवमेवं संदेहाः उपजायन्ते नः ; निस्संदेहं निष्कृष्य सम्प्रतिपन्नदेवताश्रयणेन समुज्जीवितुम् अशक्तानाम् अस्माकं परदेवतापारमार्थ्यनिष्कर्षपूर्वकं आश्रयणीयवस्तुनिर्देशः किं न क्रियेत तत्र भवता इति । तत्रः उत्तरमुदीर्यते गाथयाऽनया । **'प्रत्यक्षपरिदृश्यमानो देहः एव आत्मा'** इत्येवंविधं भ्रमम् अपहाय देहातिरिक्तं किमपि आत्मवस्तु अस्तीति अवबोधो न सुलभः ; कथञ्चित् तत्सौलभ्ये संजातेऽपि, ब्रह्मरुद्रादिशरीरकस्य सर्वान्तर्यामिणः सर्वेश्वरस्य प्रक्रिया दुरवबोधा कामम् ; शृणुत ; यूयं न तावदचेतनाः, चैतन्यफलभूतायाः विवेकशक्तेः किमहो प्रयोजनं नार्जनीयम् ? ननु भवन्तः एव विविञ्चताम् । हरिश्च अजश्च हरश्चेति देवतात्रितयस्य स्वरूपं स्वभावं च श्रवणमननादिभिः सम्यक् परिशीलयत ; तथा नाम परिशीलने कृते **'वेदापहारगुरुपातकाद्यापदाश्रयभूतं देवताद्वितयम् ; तत्तादृशापद्विमोचनमहिष्ठफलप्रदानादिभिः अनन्यसामान्यरक्षणक्रियास्पदभूतो देवताविशेषः'** इति स्वत एव मनसि भायात् ; पक्षे पतनम् अन्तरा, मनसि स्फुरन्तीम् एकां देवताम् आश्रयत । सा च नारायणः एव - इति ।

**[एषा व्याख्या श्रीशठकोपसूर्यभिमता]**

अत्र केचित् प्रत्यवतिष्ठन्ते गुरुकुलवासविमुखाः ; **'श्रीमान्नारायणः एव युष्माकम् आश्रयणीया देवता'** इति सुदृढमवधार्य प्रतिपादयितव्ये तथा प्रतिपादनम् उत्सृज्य मनसि प्रतिभातां कामपि देवतां समाश्रयत इति प्रतिपादनमिह सूरिवरस्य अस्य तटस्थतां पिशुनयति ; एवंस्थिते तत्त्वे नारायणपारम्यप्रतिपादनपरत्वेन व्याख्यानम् अभिमानकृत्य मिति । इदमिह अवधेयम् । श्रीशठकोपमुनीन्द्रस्य चतुर्थोऽयं दिव्यप्रबन्धः ; गतेषु त्रिषु प्रबन्धेषु श्रीमन्नारायणस्यैव परत्वं भूरिशो निर्णीतम् । अस्यामपि सहस्रगीत्याम् अधस्तात् उपरिष्टाच्च स एष निर्णयो निराबाधः । एवं च प्रबन्धुः अभिसन्धेः अनुरूपतयैव व्याख्येयत्वात् विप्रतीपव्याख्यानम् उत्सृष्टम् इति सर्वथा साधु । प्रामाणिकानाम् आप्तानां सूक्तिवैखरी तावदुच्चावचा ; तासु इयमन्यतमेति प्रतिपत्तव्यम् । समनन्तरगाथाश्च एनमर्थं व्यवस्थापयन्ति इति प्रेक्षितव्यं प्रेक्षकैः । अष्टमगाथायां श्रियःपत्युः अस्मत्स्वामिनः चरणारविन्दे नमस्कुरुत इति सुस्पष्टम् अनुगृहीतमवधेयम् । तत्त्वहितपुरुषार्थेषु सुनिष्कृष्टज्ञानशालिषु दिव्यसूरिषु मध्ये स एषः दिव्यसूरिवरोऽग्रेसरः इति न कदाऽपि विस्मर्तव्यम् ।

**[प्रतिपदार्थ]**

**हिन्दी - ज्ञातृत्वैकस्वरूप, सर्वदिशाओं में व्याप्त ज्ञानवाले तथा जडपदार्थों से विलक्षण इस आत्म स्वरूप को यद्यपि हम श्रवण-मनन-योगों से स्पष्ट**

**जान सकते है, तथापि (भक्तों के समाश्रयणीय) भगवान का स्वरूप जानना कठिन है । (इस शंका का समाधान यह है कि) हे चेतनों ! विष्णु ब्रह्मा व रुद्र नामक इन त्रिमूर्तियों में एकैक के भी गुण आदियों का ठीक चिंतन कर, तदनुकूल प्रमाणों का भी ठीक विवेचन करें । तब तुम्हारे मन में जो एक देव सर्वेश्वरत्वेन प्रतीत हो, उसी का अनवरत ध्यान कर, उस का नाम, मंत्र आदियों को वारंवार जपते हुए उसी की उपासना करें ।**

**[शास्त्रविवेचन से सिद्ध होता है कि नारायण ही सर्वेश्वर हैं]**

आळ्वार के उपदेश सुननेवाले संसारियों का यह प्रश्न हुआ- 'भगवन ! भगवान के किसी अवतार का आश्रयण करने का आप उपदेश दे रहे हैं ; सो ठीक है । परंतु सुना जाता है कि ब्रह्मरुद्रों के बीच में विष्णु के रूप में भगवान ने पहला अवतार लिया । अब इन त्रिमूर्तियों में यह निष्कर्ष करना सुतरां अशक्य प्रतीत होता है कि क्या सृष्टि स्थिति संहार रूप मुख्य कार्य करनेवाले ये तीनों देव प्रधान हैं ? अथवा इन में से एक ही प्रधान है ? अथवा तीनों से भी अलग दूसरा कोई परदेवता है । अतः आप स्पष्ट बता दें कि हमें कौन सी देवता की उपासना करनी चाहिए' ? इस प्रश्न का उत्तर देना प्रकृत गाथा का उद्देश्य है । इस का यह भाव है - शास्त्रार्थों को ठोक ठीक समझना अवश्य ही कठिन है । प्रारंभ में प्रत्यक्ष दिखनेवाले शरीर में आत्मबुद्धि छोडकर, उस से अतिरिक्त आत्मवस्तु को ठीक समझना ही कठिन है । तथापि कोई समर्थ पुरुष उपदेशादि उपायों से कथंचित् इस आत्मस्वरूप को समझ भी सकेगा । परंतु सर्वांतर्यामी और अत एव ब्रह्मरुद्रादियों के भी अतंर्यामी एवं सर्वेश्वर भगवान का स्वरूप समझना इस से भी बहुत कठिन होता है । तथापि उपाय बताता हूँ, सुनो । तुम तो अचेतन कोई जडपदार्थ नहीं ; परंतु चेतन हो । चैतन्य का फल ही सारासारवस्तु-विवेचन है । तुम्हीं त्रिमूर्तियों के स्वरूपस्वभावादियों का ठीक विवेचन करो । तब तुम्हें मालूम पडेगा कि दो देव वेदापहार, गुरुपातक इत्यादि आपत् पानेवाले होते हैं और तीसरा देव उन आपदों का निवारक है । इतने विचार करने पर, पक्षपात छोडकर, जो परदेवता प्रतीत होगी उस की उपासना करो । स्पष्ट ही वह देवता नारायण हैं ।

**[नारायण को सर्वेश्वर कहना श्रीशठकोपसूरी का अभिमत है]**

यहां पर गुरूपदेश से विरहित साधारण लोग यह शंका उठाते हैं कि परदेवता-निष्कर्ष करने के इस समय में आळवार स्पष्ट उपदेश नहीं देते कि 'श्रीमन्नारयण ही तुम्हारे उपास्य देवता हैं ; 'परंतु वे इतना ही कहते हैं कि' त्रिमूर्तियों में अपने अभिमत किसी देवता की उपासना करो । इस से स्पष्ट होता है कि आळवार तटस्थ बुद्धिवाले हैं, माने त्रिमूर्तिसाम्यवादी हैं । अतः उनके सिर पर नारायण पारम्यवाद लादना अनुचित है । इस का यह समाधान है - यह सहस्रगीति आळवार के विरचित चौथा दिव्यप्रबंध है । पहले तीन प्रबंधों में वारंवार यह अंश स्पष्ट बताया गया है कि नारायण ही परदेवता है । एवं प्रकृत सहस्रगीति में भी अनेकत्र परदेवता का निर्णय किया गया है और किया जायगा भी । अतः यह स्पष्ट है कि आळवार परदेवता का ठीक निर्णय करनेवाले हैं, न तु अनिश्चितबुद्धिवाले । अतः प्रकृतगाथा में भी ऐसे निश्चयात्मक अर्थ का ही वर्णन करना उचित व आवश्यक है । आप्त आचार्यों की वाणी सर्वदा एक रूप ही नहीं, परंतु नानाप्रकार की रहती है । अर्थात् वे एक अर्थ का कहीं विवरण करते हैं और कहीं उसे गूढरूप से कह देते हैं । अतः उनके समग्र उपदेश पर पूरा ध्यान देकर और विवेचन करके ही अर्थनिर्णय करना आवश्यक होता है । प्रकृत में तो अर्थनिर्णय करने के लिए बहुत दूर जाने की आवश्यकता नहीं रहती । क्यों कि आगे की गाथाओं में ही इस का विवरण मिल जाएगा । आठवीं गाथा की यह स्पष्ट श्रीसूक्ति है 'हमारे स्वामी लक्ष्मीपति के चरणारविंदों में प्रणाम करें' । दूसरों से आळवारों की यही विशेषता है कि ये तत्व हित पुरुषार्थों में सर्वथा निष्कृष्टज्ञानवाले होते हैं ; न तु अनिश्चित बुद्धिवाले । ऐसे आळवारों की गोष्ठी में प्रकृत नम्माळवार अग्रेसर हैं । अतः इन की वाणी में कोई अनिश्चित अर्थ का वर्णन नहीं रह सकता ।

**ओन्नेनप् पलवेन अरिवरुम् वडिविनुळ् निन्न**
**नन्नेळिल् नारणन् नान्मुहन् अरनेन्नु मिवरै**
**ओन्न नुम्मनत्तु वैत्तु उळ्ळि नुम्मिरुपशै यरुत्तु**
**नन्नेन नलमू शेय्वदु अवनिडै नम्मुडै नाळे ।। ७ ।।**

(गाथा) - एकानेकतयाऽपि संशयकरान् नारायणं तं चतुर्वक्त्रं
रुद्रमिमान् विचिन्त्य बहुधा यूयं हृदि श्रीधरम् ।
तं प्राप्तुं सहसाऽप्यनन्यहृदया नारायणं स्वामिनं
यावच्चायुरिदं न नश्यति तदा भक्तिं कुरुध्वं पराम् ।। ७ ।।

[प्रतिपदार्थः]

**विवरणम् - नारायणश्चतुर्मुखो हर इत्येतन्मूर्तित्रयम् एकात्माधिष्ठितं वा ? अनेकात्माधिष्ठितं वा इति प्रतिपत्तुमयोग्ये प्रकारेऽवस्थितं तन्मूर्तित्रयमुद्दिश्य श्रवणमनननादिकम् अवहितेन मनसा कलयत । मूर्तित्रये तस्मिन् एकैव मूर्तिः सर्वैश्वर्यसम्पन्ना इति वो मनसि भायात् । ब्रह्मरुद्रयोः सर्वात्मनाऽपि असंभावितान् कल्याणगुणान् बिभ्राणो नारायणः एव तादृशी व्यक्तिरिति सत्यं भायात् । ततश्च तद्व्यतिरिक्तब्रह्मरुद्रविषयिणीम् ईश्वरत्वशङ्कामुत्सृज्य भगवन्नारायणे एकस्मिन्नेव अनन्यप्रयोजनतया अस्मदीय शरीराद्युपकरणैः वरिवस्याविरचनेन कालयापनं संप्रतिपन्नम् । अस्थिरस्य जीवितकालस्य मोघीकरणं मा भूत् ।।**

[मूर्तित्रयमधिकृत्यम् विप्रतिपत्तिः]

अधस्तनगाथायाः एव शेषभूता सेयमपि गाथा । विशेषांशस्तु अल्पायुष्ट्वम् आत्मनाम् अनामृश्य वृथा कालहरणमयुक्तम् ; आवापोद्वापतो विमर्शपूर्वकम् एकैव देवता सर्वाधिकेति विनिश्चित्य तस्यां क्षिप्रं प्रवणा भवत इत्युक्तिः । मूर्तित्रयम् एकात्माधिष्ठितं वा ? अनेकात्माधिष्ठितं वेति निर्धारणमशक्यमिति यदत्र प्रतिपाद्यते, तत्रेदं प्रतिपत्तव्यम् । आत्मा तु प्रतिशरीरं भिन्नः इति जानन्ति नाम सर्वे । ब्रह्मरुद्रनारायणाख्यमूर्तित्रये एकः एवात्मा व्यासज्य वर्तते वा ? उत भिन्नभिन्नः आत्माऽवतिष्ठते वा ? इति विचिकित्सायां जातायां, यदा मूर्तयस्तिस्रः, तदा आत्मानोऽपि त्रयः इति कश्चन कल्प उदियात् । अथ च **'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम्, तच्छेषतैकस्वरूपं तत्तस्य शरीरम्'** इति परिष्कृतस्य शरीरलक्षणस्यैव प्रजापतौ पशुपतौ च सद्भावेन शरीरमात्रमेव तौ, आत्मा तु नारायण एव इति अपरः पक्षः उदियात् । वस्तुतः अयमेव ध्रुवमुदारः कल्पः ; तथाऽपि कल्पेऽस्मिन् दृढप्रत्ययस्य दुर्घटत्वात् प्रतिष्ठितप्रज्ञा असंभविनी इत्यभिसन्धिना प्रतिपत्तुम् अयोग्या इति मुनिवरः प्राह ।

**[परत्वविशिष्टः नारायणः एवेति निरूपणम्]**

सुबालोपनिषदि **'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः'** (खं.७) इति यदाम्नातं तदेव हृदि निदधानो मुनिवरोऽत्र द्वितीयपादोपक्रमे नारायणं सविशेषमुपादत्ते नन्नेळिल् नारणन् इति । **'रूपश्रिया परमया परमेण धाम्ना चित्रैश्च कैश्चिदुचितैर्भवतश्चरित्रैः । चिह्नैरनिह्नवपदैरपरैश्च कैश्चिन्निश्चिन्वते त्वयि विपश्चित ईशितृत्वम्'** ।। इति (श्रीवैकुण्ठस्तवे.२८) श्री कूरनाथगुरुवरोपपादितरीत्या परत्वस्य असाधारणास्पदभूतो नारायणः इति तदर्थः । उपात्तसुबालोपनिषद्वाक्यस्य तावदयमर्थः ; एष सर्वभूतान्तरात्मा - अत्र भूतशब्दस्य सत्तायोगिवस्तुवाचकत्वात् उभयविभूत्यन्तर्गतं चिदचिद्वस्तुजातम् अनेन भूतशब्देन निर्दिश्यते । अपहतपाप्मा - पूर्वोक्तपृथिव्यादितमःपर्यन्तेषु वस्तुषु अन्तर्यामितया सन्नपि तद्गतदोषैरसंस्पृष्टः । दिव्यः - दिवि स्थितः ; एकः - अद्वितीयः समाभ्यधिकरहित । **'एकश्चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले' । इति तत्तुल्यनृपतिनिवारणपरं वचः ।। न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारणम्'** ।। इति भगवद्यामुनार्यसूक्तिरत्नम् इहानुसन्धेयम् ।

**[परः नारायणः एवेति विमृश्य स एव प्रतिपत्तव्यः इत्युक्तिः]**

तथा च एतादृशवैलक्षण्यविशिष्टे नारायणे चिन्तितमात्रे सत्येव तस्य स्वव्यतिरिक्तसर्ववस्तुप्रकारित्वं इतरयोः विधिशिवयोः सृष्टिसंहारोपकरणत्वं च मनसि प्रतिष्ठितं भविष्णु ; ततश्च **'न्यायस्मृतिप्रभृतिभिर्भवता निसृष्टैर्वेदोपबृंहणविधावुचितैरुपायैः । श्रुत्यर्थमर्थमिव भानुकरैर्विभेजुः त्वद्भक्तिभावितविकल्मषशेमुषीकाः'** ।। इति (श्रीवैकुण्ठस्तवे.१५) श्रीकूरनाथगुरुवरोक्तरीत्या न्यायश्रुत्यादिसहकारेण च सुविमर्शे कृते नारायणस्यैव परिबृढत्वम् इतरयोः अवरत्वं च हृदयम् अवगाहेत वः । तदा तस्यामेव परदेवतायाम् अनन्यप्रयोजनभक्तिविरचनं वरम् इत्युक्तं भवति ।

**[आयुषोह्यल्पत्वसङ्केतः]**

एवं कथयति मुनिवरे 'भवतु नाम ; भविष्यति तावत् कालक्रमेण; का स्विदिदानीं त्वरा' ? इति स्थितेषु संसारिषु, अथ विशेषोह्यभिधीयते **नम्मुडै नाळे** इति । स्वकीयमल्पायुष्ट्वं नावगच्छथ यूयमिति प्रोक्तं भवति । **'नन्दत्युदित आदित्ये नन्दत्यस्तमिते रवौ । आत्मनो नावबुध्यन्तो मनुष्या जीवितक्षयम्'** ।। (रामा.अ.कां.१०५-७) इति भरतं प्रति रामश्चित्रकूटे प्राह यत् तदिह स्मर्तव्यम् । आदित्ये उदिते नन्दन्ति - यदा सूर्यः उदेति,

तदा द्रव्यार्जनकालः समुपस्थितः इति मोदन्ते मर्त्याः । रवौ अस्तमिते च नन्दन्ति - उदिते सूर्ये अस्तं गच्छति अर्जितद्रव्यविनियोगेन क्षुद्रविषयोपभोगकालः समुपस्थितः इति प्रमोदन्ते । आयुषो वृथा क्षयमवेक्ष्य शोचन्मनुष्यः नैकोऽपि हन्त ! **'यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सापि विक्रिया'** ।। (ग.पु.पू.खं.२२२-२२) **एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं नृणाम्** ।। इत्यादि प्रमाणगतीहह ! नानुसन्दधते जडाः जनाः इति मुनिवरस्य हार्दो निर्वेदः शब्दसन्दर्भगर्भितः ।

## [प्रतिपदार्थ]

**हिन्दी - यद्यपि नारायण, ब्रह्मा व हर नामक ये तीन मूर्तियाँ ऐसी हैं, जिन के विषय में यह निश्चय करना अशक्य प्रतीत होता है कि क्या ये तीनों एक ही आत्मा से अधिष्ठित हैं अथवा अलग अलग आत्माओं से । तथापि बडी सावधानी से उन के प्रति श्रवणमननादि रूप विवेचन करें । तब तुम्हें अवश्य ही ऐसा प्रतीत होगा कि उक्त तीनों में एक ही मूर्ति सर्वैश्वर्यसंपन्न है । अर्थात् तुम यह जानोगे कि ब्रह्मरुद्रों में सर्वथा असंभावित कल्याणगुणवाले श्रीमन्नारायण ही परदेवता हैं । फिर उक्त दो देवों में ईश्वरत्वबुद्धि छोडकर, अपने शरीरादि उपकरणों से श्रीमन्नारायण एक ही की अनन्यप्रयोजन सेवा करते हुए अपने जीवित तक कालक्षेप करना उचित होगा ।**

## [त्रिमूर्तिविषयक भ्रम]

पूर्वगाथा का विवरण करना प्रकृतगाथा का उद्देश्य है । इस में इतना विशेष उपदेश दिया जाता है - 'अपने अल्प जीवन पर ध्यान न देते हुए वृथा काल बिताना अनुचित है ; अतः पूर्वोक्त त्रिमूर्तियों के स्वरूप स्वभावादियों का ठीक विवेचन करके, उन में से एक को सब से अधिक मानकर शीघ्र ही उस की उपासना करो' । गाथा के उपक्रम में त्रिमूर्तियों की एकात्मता या अनेकात्मता इत्यादि जो बताया गया है, उस का यह भाव है - प्रायः सभी लोग यह जानते हैं कि देवमनुष्यादि शरीरों में एकैक में भी अलग अलग एकैक आत्मा रहती है । 'त्रिमूर्तियों में क्या ऐसी अलग अलग तीन आत्माएं हैं अथवा एक ही आत्मा तीनों में भी रहती है' ? इस प्रश्न का एक साधारण प्रत्युत्तर मिलेगा कि जब शरीर तीन हैं, तब आत्माएं भी अवश्य तीन

होंगी । दूसरा यह भी एक प्रत्युत्तर होगा - **'जगत्सर्वं शरीरं ते'** (रामा.पु.कां.१२०-२९) इत्यादि प्रमाणानुसार भगवान नारायण ही सब के आत्मा हैं, और ब्रह्मरुद्र उन के शरीरमात्र । यही उत्तर शास्त्र संमत है । तथापि इस विषय में दृढ निश्चय पाना अशक्य है । अतः आळ्वार ने कहा कि यह निश्चय करना अशक्य-सा है ।

**[नारायण ही परत्त्वगुणसम्पन्न हैं]**

दूसरे पाद के प्रारंभ में 'नन्नेळिल् नारणन्' अथवा विलक्षणकल्याणगुण परिपूर्ण नारायण कहने का यह तात्पर्य है कि नारायण, परत्व के असाधारण समस्त कल्याणगुणों से परिपूर्ण हैं । यह अर्थ सुबालोपनिषद में **'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः'** (खं.७) इत्यादि वाक्यों से प्रतिपादित है । इस वाक्य में सत्तार्थक 'भूधातु' से निष्पन्न भूतशब्द का अर्थ उभय विभूति के अंतर्गत चेतनाचेतनरूप समस्त पदार्थ हैं । तथा च यह अर्थ हुआ कि भगवान समस्त पदार्थों के अंतर्यामी हैं । अपहतपाप्मा-माने पापदूर । कहने का यह तात्पर्य है कि भगवान पूर्वोक्त प्रकार समस्त चेतनाचेतन पदार्थो के अंतर्यामी होने पर भी उन के दोषों से दूर ही रह जाते हैं । दिव्यः - देवलोक में, माने परमपद में विराजमान । देवः - प्रकाशादि गुण विशिष्ट । एकः - अद्वितीय, अर्थात् सर्वश्रेष्ठ, जिस के समान अथवा जिस से अधिक न हो । यह अद्वितीय शब्द दूसरों को भ्रम में डालता है । वे इसका यह अर्थ बताते हैं कि एकमात्र नारायण सत्य है, दूसरे सब मिथ्या, इत्यादि । परंतु ऐसा अर्थ करने पर इसी वाक्योक्त सर्वभूतान्तरात्मा इत्यादि सभी विशेषण एकदम व्यर्थ बन जाते हैं । जब दूसरी कोई वस्तु ही न हो, तब भगवान कैसे उस के अंतर्यामी होंगे ? अतः भगवान को सर्वांतर्यामी कहने पर सर्वपदार्थों की सत्ता अवश्य स्वीकार्य है । फिर अद्वितीयशब्द का अर्थ पूर्वोक्तरीति से अनितर साधारण' ही होगा । इस विषय में श्रीयामुनाचार्य स्वामीजी का एक वचन बडा सुंदर है, जिस का यह तात्पर्य है - मान लीजिए कि कोई कविराज किसी एक राजा की प्रशंसा करता है कि 'यह राजा सारे भूमंडल में अद्वितीय है' । क्या इस वाक्य का यह अर्थ हो सकता है कि राजा के राज्य नहीं है, धन नहीं है, रहने का प्रासाद नहीं है, पत्नीपुत्रादि बंधुजन नहीं हैं, भृत्यवर्ग नहीं है ; परंतु यह एकाकी भटक रहा है ? नहीं, परंतु यही तात्पर्य होगा कि इस राजा के समान शौर्य वीर्य संपदादियुक्त दूसरा कोई राजा इस पृथ्वीतल पर नहीं है । यही राजा की सत्य प्रशंसा है । इसी प्रकार भगवान को भी अद्वितीय

कहने का यही तात्पर्य है कि समस्त चेतनाचेतनों की अंतर्यामी सकल कल्याणगुण परिपूर्ण व्यक्ति एकमात्र भगवान को छोडकर दूसरा कोई नहीं है । अर्थात् **'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः'** (भ.गी.११-४३) इत्यादि अनेक शास्त्र प्रतिपादित प्रकार, भगवान के समान अथवा उन से अधिक व्यक्ति दूसरा कोई भी नहीं मिलता ।

### [नारायण की भक्ति करना ही उचित है]

तथा च, नारायण के ऐसे विलक्षण वैभव का ठीक चिंतन करने पर यह अर्थ स्पष्ट प्रतीत होगा कि वे ही सब के अंतरात्मा हैं और ब्रह्म रुद्र तो सृष्टि व संहार करने में उन के उपकरणमात्र । तथा च श्रुति, स्मृति, न्याय इत्यादियों की सहायता लेकर, ठीक विवेचनकर, नारायण को परदेवता समझकर, उन्हीं पर अनन्यप्रयोजन भक्ति करना उचित है ।

### [अल्पायुष्य का संकेत]

यह उपदेश सुनकर किसी ने कहा - 'ठीक है ; धीरे धीरे ऐसे ही करेंगे । इस के लिए अभी त्वरा करने की आवश्यकता कौन-सी है ? अब तो हमें अपने सांसारिक कृत्य करने दें' । इस के उत्तर में आळ्वार कहते हैं - **नम्मुडै नाळे** - अहो ! तुम लोग अपने को अमर मान बैठे हो ; तुम नहीं जानते कि मानव का आयुष्य अत्यल्प होता है । चित्रकूट में श्रीरामचंद्रजी ने भरतजी को एक सुंदर उपदेश दिया - **'नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ । आत्मनो नावबुद्ध्यन्ते मनुष्याः जीवितक्षयम् ।।** (रामा.अ.कां.१०५-७) 'इस का यह तात्पर्य है - सूर्य का उदय देखकर संसारी लोग आनंदित होते हैं - 'अब हमें द्रव्य कमाने का प्रातःकाल आ गया' । एवं सूर्य का अस्तमय देखकर आनंदित होते हैं - 'दिन भर कमाया हुआ द्रव्य देकर विषयोपभोग करने का समय आ गया' । परंतु वे इस बात पर ध्यान नहीं देते कि सूर्य के इन्ही उदयास्तमयों से अपने जीवित का क्रमशः क्षय हो रहा है । आयुष्य के इस क्षय पर ध्यान देकर शोक करनेवाला कोई भी मानव नहीं मिलता । एवं आळ्वार का यह भी भाव हो सकता है - अहो ! ये संसारी मूर्ख लोग क्षुद्रविषयों के अलाभ से दुःख पाते हैं ; भगवद्ध्यान की कीमत इन को अविदित है । परंतु ज्ञानियों का यह अभिप्राय है - यदि एक मुहूर्त अथवा एक क्षण मात्र भी भगवान का ध्यान छूट जाय, तो वही बडी हानि है, समस्तदुःखों का मूल है, भ्रांति है और विकार भी है । भगवान के ध्यान के विना

यदि एक भी क्षण, क्यों न हो, बीत जाय, तो डाकुओं से लूटे जानेवाले की तरह बडी ध्वनि से रोना चाहिए, इत्यादि ।।

**नाळु निन्नडु नमपळमै अङ्गोडु विनैयुडने**
**माळुम् ओर् कुरैविल्लै मननह मलमरक्कळुवि**
**नाळु नन्दिरुवुडै यडिहळ् तम् नलङ्गलल् वणङ्गि**
**माळु मोरिडत्तिलुम् वणक्कोडु माळवदु वलमे ।। ८ ।।**

**(गाथा) - चेतोदोषहरा वयं यदि हरेश्श्रीशस्य पादद्वयं**
**प्राप्तास्सन्ततताषकारिदुरितावळयास्तु नाशो भवेत् ।**
**इष्टार्थेषु न रिक्तता किल भवेत् कायस्य विश्लेषतो**
**निर्याणेऽन्तिमकालतोऽपि भजनं विष्णोर्भवेत्सार्थकम् ।। ८ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - मानसं त्रिमूर्तिसाम्याशङ्काजनितसंशयात्मकमलविहीनं अत एव विशुद्धं विधाय, श्रियः पत्युः परमपुरुषस्य परमभोग्यचरणारविन्दवन्दने कृते निरन्तरमस्माकं विविधां बाधामुत्पादयन्ति अनादिकालसञ्चितानि भगवदनुभवविरोधीनि पापानि सद्य एव क्षीयेरन् ; न काचिदपि भवित्री न्यूनता । निर्याणकालेऽपि वा 'द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्' इत्युक्तवतो रावणस्येव विषमं व्रतं विसृज्य प्रह्वीभावेन मरणं वरम् ।।**

**[भगवत्प्रतिपत्तिमात्रेण सकलदुरितनाशो भवति]**

उपदेशपात्रभूतासु जनतासु स्वकीयदुरितप्राबल्यमनुचिन्त्य 'प्रबलदुरितभरितानाम् अस्माकं हन्त ! कथमिव घटेत मुनीन्द्र ! भवदीयोपदेशसार्थक्यसम्पादनम्' इति विचारविह्वलासु सतीषु **'मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः । केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति'** ।। (वि.ध.७८६) इत्यादि प्रमाणगतीः अनुसंदधानो मुनीन्द्रः प्रतिजानीते भगवत्प्रणत्याभिमुख्यमात्रे जाते सकलपापक्षयः सद्यो भविता इति । गाथायामस्यां साधनं साध्यं चेति उभयमुपदिश्यते । निःशेषपापविलयः साध्यम् । लक्ष्मीपतिचरणारविन्दवन्दनं

साधनम् । भगवच्चरणारविन्दवन्दनमात्रेण सकलदुरितविततिविलयः प्रोच्यमानः इह कथमिव घटेत ? पाप्मनाम् अनुभवैकविनाश्यत्वं हि व्याहरन्ति **'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि'** (ब्र.वै.प्र.का.२६-७०) इत्यादीनि शास्त्राणि ? इति चेत्; तिष्ठन्तु नाम तथाविधानि सामान्यवचनानि । **'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते,'** (छां.उ.५-२४-३) **'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवम् एवंविदि पापं कर्म न श्लिष्यते',** (छां.उ.४-१४-३) **'तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन'** (काठक.यजु.१२) इत्यादीनि औपनिषदवचनानि बलीयांसि हि जाग्रति । ब्रह्मविदां विषये पूर्वाघविनाशः उत्तराघाश्लेषश्च प्रामाणिकः इति प्रतिपत्तव्यम् । भगवच्चरणारविन्द-वन्दनसमनन्तरक्षणे एव पापानि सकलानि प्रणश्येयुरिति यदत्र प्रतिपादितम्, तदिदं ब्रह्मविद्यापर्यन्तसिद्धिमद्विषयमेव इति ग्राह्यम् । **'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते'** (पु.सू.१७) इत्यादीन्यपि प्रमाणानि अत्रानुसन्धेयानि । अव्याजकरुणानिधिः भगवान् ब्रह्मविद्यासिद्धिविरहितानपि भक्तान् स्वचरणकमलप्रणाममात्रतः एव प्रसन्नस्सन् यदि निष्पन्नब्रह्मविद्यान् इव अनुगृह्णीयात् तदा **'नैष परमपुरुषो दण्डवारितो भवितुमर्हति'** इति सहस्रनामभाष्ये भट्टपादानामनर्घाभिसन्धिप्रदर्शनम् इहानुसन्धेयम् ।

### [वन्दनफलं कदापि न हीयते इति प्रदर्शनम्]

न काचिदपि भवित्री न्यूनता इत्यस्य हृदयं द्वेधा; (१) विरोधिव्यपगममात्रमेव न; सकलविधसम्पत्समृद्धिरपि स्यादिति । (२) युष्माभिः आचर्यमाणं वन्दनं फलं प्रदाय न विरमेत्; **'शुभानि पुष्णाति न जातु हीयते'** इतिवत् भगवतः चेतसि नित्यप्रतिष्ठितं स्यादिति च ।

### [श्रियः पुरुषकारत्वनिर्देशः]

तृतीयपादे लक्ष्मीसनाथस्य भगवतः पादवन्दनविधानबलेन **'लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्'** ।। इति भगवच्छास्त्रसिद्धपुरुषकारत्वविशिष्टां श्रियं पुरस्कृत्य भगवन्तं प्रपद्यमानानां न फलव्यभिचार इति शास्त्रार्थोऽवबोध्यते । श्रीपराशरभट्टार्यसकाशे नञ्जीयर्नामा वेदान्तियतिवरः पप्रच्छ - 'स्वतःपरमकारुणिकस्य भगवतः प्रपदने किमहो फलं व्यभिचरेत् ? कास्विदावश्यकता लक्ष्मीपुरस्करणे' ? इति । तदा भट्टार्यः इमामेव गाथां प्रमाणमूर्धन्यत्वेन उपन्यास्थत् इत्याचार्याः ।

**[भगवान् व्याजमात्रापेक्षी]**

निर्याणकालेऽपि वा प्रह्वीभावेन मरणं वरम् इत्यनेन स्वतः एवानुग्रहोन्मुखस्य भगवतो यत्किञ्चिद्व्याजमात्रप्रतीक्षिता प्रोक्ता भवति । यावच्छरीरपातं प्रातिकूल्यं व्यवसिताः स्थिताः अपि अन्त्यकाले यदि प्रह्वीभूताः सन्तो म्रियेरन् तर्हि द्वारकाङ्क्षी भगवान् मामयं प्रणमन्नेव प्रामीयत इति प्रमोदमानः प्रसीदेत् इत्युक्तं भवति । **'द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्'** (राम.यु.कां.३६-११) इति कृतसंकल्पात् रावणादल्पीयसीं व्यावृत्तिमेव निरीक्षते लक्ष्मीपतिरिति वस्तुस्थितिः ।। **'सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वाद्र(क्ष्या)क्षापेक्षां प्रतीक्षते'** ।। इति प्रमाणोदितरक्षापेक्षायाम् इदमप्यन्तर्भावयति भगवानिति मुनिवरस्य हृदयमिव ।

**[प्रतिपदार्थ]**

**हिन्दी - विवेक से अपने मनोगत त्रिमूर्तिसाम्यशंका रूप मल धोकर, (और मन को शुद्ध बनाकर) हमारे योग्य स्वामी लक्ष्मीपति के सुंदर चरणारविंदों का वंदन करने पर, हमें नित्य नानाविध दुःख देनेवाले, अनादिकाल से हमारे कमाये हुए, भगवदनुभव के विघ्नकारी हमारे सभी पाप तुरंत मिट जाएँगे । किसी प्रकार की न्यूनता न रहेगी । अंततः मरने के समय भगवान के चरण में नतमस्तक होकर मरना अच्छा है ।**

**[भगवद्भक्ति से पापों का नाश हो जाता है]**

आळ्वार के उपदेश सुनकर कितने लोगों ने सोचा और शोक किया होगा - 'अहो ! अतिप्रबल पाप से समाक्रांत हम कैसे भगवान का भजन कर सकते हैं' ? यह जानकर आळ्वार इस गाथा से उन को आश्वासन देते हैं - 'भगवान का पादवंदन करने का प्रारंभ करते ही हमारे सभी पाप नष्ट होंगे ; फिर चिंता करने की आवश्यकता कौन-सी है' ? इस पर यह शंका हो सकती है कि भगवच्चरणारविंदो के प्रणाम करने मात्र से हमारे समस्त पाप कैसे नष्ट हो सकते हैं ? शास्त्र अवधारित करता है कि फलानुभव किये विना कोई भी पाप नष्ट नहीं होता । इस का यही प्रत्युत्तर है कि अनेक उपनिषद्वाक्य स्पष्टशब्दों में बताते हैं - 'अग्नि में डाले हुए कपास की तरह ब्रह्मज्ञानी के सभी पाप जल जाते हैं', 'जैसे कमलपत्र में पानी नहीं लगता, ऐसे

ब्रह्मज्ञानी में पाप कर्म लगते नहीं, **'भगवान के स्वरूप ठीक जाननेवाला पाप से लिप्त नहीं होता'** इत्यादि ब्रह्मसूत्र में भी इस विषय की चर्चा की गई है । तथा च इन प्रमाणों के अनुसार, ब्रह्मविद्यापारंगत महात्मा के विषय में, भगवच्चरणारविंद के लिए प्रणाम करने के बाद, तुरंत ही उस के समस्त पाप अवश्य ही मिट जायंगे । इस प्रसंग में श्रीविष्णुसहस्रनाम भाष्य में श्री पराशरभट्टार्यस्वामीजी से प्रदर्शित यह भाव अवश्यानुसंधेय है - अहेतुक कृपासागर भगवान ब्रह्मविद्या से वियुक्त किसी व्यक्ति पर अकस्मात् दया दिखाते हुए, अपने चरणकमलवंदनमात्र व्याज से, उस को भी ब्रह्मविद्यानिष्ट की तरह अगर अनुगृहीत करे, तो कोई भी दंड लेकर उन को ऐसे करने से रोक नहीं सकता । अर्थात् किसी प्रकार के निर्बंध के विना अपने अपेक्षित काम करने में समर्थ भगवान यदि कदाचित् किसी के प्रति यत्किंचित् व्याज मात्र से, अथवा उस के भी विना, कृपा करना चाहें, तो उन को कोई न रोक सकता । एवं **'ददामि बुद्धियोगम्'**, (भ.गी.१०-१०) **'तेषामहं समुद्धर्ता'** (भ.गी.१२-७) इत्यादि कहनेवाले भगवान का यह भी स्वभाव है कि भगवत्प्राप्तिकाम चेतन के समस्त पापों को स्वयं दूर कर, वे ज्ञान भक्ति इत्यादि का प्रदान भी करके, उस का उद्धार करते हैं । अतः भगवत्पादवंदन से समस्त पापों का नाश होने की बात सर्वथा उचित व सत्य है ।

**[नमन का फल कभी नष्ट नहीं होता]**

किसी प्रकार की न्यूनता न रहेगी कहने का तात्पर्य दो प्रकारों से हो सकता है - (१) उक्त वंदन से न केवल पापों का विनाश होगा, किंतु समस्तविध श्रेय भी मिलेगा । (२) वंदन, फल दिए विना कभी न रहेगा ; अपि तु भगवान के हृदय में स्थिरप्रतिष्ठित होकर नित्य फलप्रद होगा ही । स्तोत्ररत्न का यह पद्य - **'त्वदङ्घ्रिमुद्दिश्य......न जातु हीयते'** (२८) प्रकृत गाथा का विवरणरूप है ।

**[लक्ष्मी के पुरुषकारत्व का भाव]**

तीसरे पाद में लक्ष्मीविशिष्ट भगवान के पादवन्दन करने के उपदेश का यह तात्पर्य है कि **'लक्ष्मीः पुरुषकारत्वे निर्दिष्टा'** इत्यादि श्रीपांचरात्र शास्त्रोक्त प्रकार लक्ष्मीजी की सिफारिश लेकर भगवान के पादवंदन करने से अवश्य ही फल मिलेगा । इस विषय में हमारे आचार्य एक सुंदर इतिहास बताते हैं - एक दिन श्रीवेदांति मुनि

नामक नञ्जीयर स्वामीजी ने अपने गुरु श्रीपराशर भट्टार्य स्वामीजी से पूछा - 'हे गुरुवर ! परमकारुणिकत्वेन प्रसिद्ध भगवान क्या अपनी शरण में आनेवालों की रक्षा स्वयं न करेगे ? लक्ष्मीजी की सिफारिश पाने की आवश्यकता कौन-सी है' ? तब भट्टर स्वामीजी ने प्रकृत गाथा को ही मुख्यप्रमाण बता कर उन को ठीक समझाया ।

**[भगवान व्याजमात्र की अपेक्षा करते हैं]**

मरने के समय नतमस्तक होकर मरना अच्छा है-कहने का यह भाव है - भगवान स्वत एव सर्वदा इस चेतन पर अनुग्रह दिखाते हैं । परंतु यह चेतन **'दो टुकडे होने पर भी मैं पीछे ही गिरूंगा, सामने सिर न झुकाऊँगा'** कहनेवाले रावण की तरह गर्वी होकर भगवान के सामने अपना सिर झुकाना भी नहीं चाहता । ऐसी व्यक्ति पर भगवान कृपा नहीं कर सकते । वे तो चेतन की ओर से थोडी अनुकूलता माँगते हैं । अतः यदि कोई भी मानव जन्मभर द्वेषी होते हुए भी, अंतकाल में भगवान का वंदन करे, तो भगवान मानते हैं - **'अहो ! यह मानव मेरा वंदन करता हुआ मर गया ; अवश्य ही यह मेरा भक्त है,'** और उस पर बहुत प्रसन्न होते हैं । आळ्वार का अभिप्राय है कि परम कारुणिक एवं चेतनों के उद्धार करने के लिए कटिबद्ध होने पर भी भगवान, संसार के संचालक होने से, अपने ऊपर पक्षपातादि दोषों का अवकाश न देते हुए, चेतन की ओर से अल्प आनुकूल्य की प्रतीक्षा करते हैं । प्रकृत गाथोक्त चरणवंदन भी उस आनुकूल्य का एक प्रकार है ।

**वलत्तनन् तिरिपुर मेरित्तवन् इडम्पेरत्तुन्दि**
**त्तलत्तु एळु तिशैमुहन् पडैत्त नल्लुलहमुम् तानुम्**
**पुलप्पडप्पिन्नुम् तन्नुलहत्तिल् अहत्तनन् ताने**
**शोलप्पुहिल् इवै पिन्नुम् वयित्तुळ इवैयवन् तुयक्के ।। ९ ।।**

**(गाथा) - ब्रह्मा चापि चतुर्मुखस्स्वजगता नाभीपुटे वर्तते**
**रुद्रश्च त्रिपुरान्तकः किल हरेः पार्श्वं श्रितो दक्षिणम् ।**
**प्रत्यक्षोऽपि भवेन्निजे तु जगति स्वस्यावतारादसौ**
**यद्युच्येत हरेः प्रभावजलधिर्भूयानगाधोऽद्भुतः ।। ९ ।।**

[प्रतिपदार्थः]

**विवरणम् - त्रिपुरदहनकर्ता रुद्रो दक्षिणपार्श्वमाश्रित्य लब्धसत्ताकः ; चतुर्मुखोऽपि स्वोत्पादितभुवनवर्गेण सह सविकासनाभीकमलमाश्रित्य लब्धसत्ताकः । स च भगवान् स्वयं सकलमनुजनयनविषयतां प्रेप्सुः जगति नानावतारान् वितनोति केवलनिजेच्छया । अवतीर्य तेन कृतानां क्रियमाणानां च चेष्टितानां अपरिच्छेद्यतया, बहुशः कथनेऽपि सशेषतैव सत्यम् । तस्य माया च महती बत !।।**

[भगवतोऽवतारचेष्टितानि अपरिच्छेद्यानि]

अधस्ताद् ब्रह्मरुद्रयोः अवरत्वं श्रीमतो नारायणस्य पारम्यं च प्रत्यपादि । अधुनाऽस्यां गाथायां ते उभे अपि दैवते भगवन्तमाश्रित्य लब्धसत्ताके इति प्रतिपादनपूर्वकं भगवतोऽवतारचेष्टितानाम् अपरिच्छेद्यत्वं व्यामोहकत्वं च प्रतिपाद्यते । अवतारावसरेषु स्वकीयपरत्वानिह्नवमपि कासु कासुचित् चर्यासु प्रदर्शयति यतः, तत एव व्यामोहकत्वप्रतिपादनमप्यत्र जातम् ।

[भगवतः शीलगुणातिशयः द्योत्यते]

त्रिपुरदहनकर्ता रुद्रो दक्षिणं पार्श्वमाश्रित्य लब्धसत्ताकः इत्यत्र पूर्वाचार्याः प्रमाणद्वितयं प्रदर्शयन्ति । **'पश्यैकादश मे रुद्रान् दक्षिणं पार्श्वमाश्रितान्'** (महा.भा.मो.ध.प.१६८-५१) इति मोक्षधर्मवचनं षट्त्रिंशत्सहस्रिकायाम् उदाहृतम् । **'तपसा तोषितस्तेन विष्णुना प्रभविष्णुना । स्वपार्श्वे दक्षिणे शम्भोर्निवासः परिकल्पितः'** ।। इतीदं वचनं चतुर्विंशतिसहस्रिकायामुपात्तम् । प्रमाणद्वितयेनापि भगवतः शीलगुणातिशयो द्योतितो भवति । यस्मिन्वक्षस्स्थले भगवान् दिव्यमहिषीं श्रियं बिभर्ति तस्यैव वक्षसः पार्श्वविशेषे तामसदेवतायाः अपि अवकाशम् अदिशदिति महत्तरो ह्ययं शीलगुणः । रुद्रस्येव चतुर्मुखस्यापि स्ववक्षसि स्थानं दत्तवानिति मुनिवरोऽसौ प्रतिपादयति असकृत् । उपरि चतुर्थशतके अष्टमदशकप्रथमगाथादिषु प्रेक्ष्यमेतत् ; एवं लक्ष्म्या सह तयोरप्यवकाशप्रदानं किं ननु सार्वदिकमिति केचित् आशङ्केरन् । आशङ्कामिमाम् आचार्या एव स्वयमुत्थाप्य समादधिरे । आपत्कालविशेषेषु भगवांस्तयोः आत्मनेः वक्षसि स्थानं दिशति ; तदेतन्महान् हि गुणविशेषः । गुणविद्धा दिव्यसूरयस्तदिदं सार्वदिकमिव संचक्षते - इति समाहितिसारः ।

**[भगवान भक्तों के ही दृष्टिगोचर होते हैं]**

**यदि वे नारायण दिखाई देंगे तो** कहने का यह तात्पर्य है - **'न चक्षुषा पश्यति कश्चनैनम्'** (कोई भी अपने नेत्र से भगवान को देख नहीं सकता।) इत्यादि वेदवाक्योक्तप्रकार भगवान आंखों के विषय न बनते हैं । तथापि कदाचित् **इच्छागृहीताभिमतोरुदेहः** (वि.पु.६-५-८४) (अपनी इच्छा से परिगृहीत, अपने इष्ट श्रेष्ठ दिव्यमंगलविग्रहवाले, **'तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः । पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः'** ।। (भाग.१०-३२-२) (रासक्रीडा के मध्य में अकस्मात् अदृश्य हुए श्रीकृष्ण भगवान के विरह से संतप्त होकर जब गोपियां बहुत दुःखी हुई थीं, तब फिर भगवान पीतांबर और दिव्यमालाओं से अलंकृत होकर, एवं कामदेव के भी चित्त के मथन करने में समर्थ अत्यद्भुत सौंदर्यवाले होकर, मंदहास दिखाते हुए, उन के सामने प्रकट हुए ।) इत्याद्युक्त प्रकार असीम सौंदर्यलावण्यादियुत दिव्यमंगलविग्रह लेकर, एवं हजारों सिर पाद नेत्रादिवाला विश्वरूप भी लेकर, यहां पधारकर, मुझ से मिलकर, मेरा सारा सार निकालने के बाद लौटकर पुनरपि शायद उन्हों ने अपने अतींद्रिय रूप का ही स्वीकार कर लिया । अतः यद्यपि उन के दर्शन मिलना कठिन है, तथापि **'भक्त्या त्वनन्यया शक्यः'** (भ.गी. ११-५४) इत्यादि श्रीमुख की वाणी के अनुसार वे तुम्हारे जैसे भक्तों के प्रत्यक्ष भी होंगे ।

**[पण्डित ही 'बक' शब्द से विवक्षित हैं]**

इस गाथा में बक का संबोधन किया गया है । बकशब्द का व्यंग्यार्थ पहली गाथा की टीका में बताया गया है । बक तो स्वभाव से सफेद ही होता है, तथापि उसे फिर 'श्वेत बक' कहने से, बक शब्द के विवक्षित महात्माओं की अंतश्शुद्धि सूचित की जाती है; जैसे कि विभीषणशरणागतिप्रकरणमें, श्रीरामचंद्र जी से ठीक समझाये जाने पर सुग्रीव जी ने कहा - **'मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम्'** । (रामा.यु.कां.१८-३१७) (मेरी आत्मा भी विभीषण को शुद्ध मानती है ।) इस वाक्य का यही तात्पर्य होगा कि विभीषण का मन शुद्ध है । बाल बक कहने से बालक की तरह निष्कपट एवं निराडंबर व्यक्ति सूचित की जाती है । **समृद्ध जलयुत सुशीतल उपवनों में शिकार** करने का यह अर्थ है कि मधुर रसभरित शास्त्रों से नानाविध सरस अर्थ ढूंढ निकालना ।

**['अश्रुपूर्णनयना' आळ्वार का एक नामांतर है]**

**अश्रुपूर्णनयनवाली मेरी** कहने से आळ्वार अपने उस स्वभाव का वर्णन करते हैं, जो **'आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणाविष्टः द्रष्टव्यस्सर्वदेहिभिः'** ।। (वि.त.२) इत्यादि से बताया गया है । उक्त पद्य का यह भाव है - नेत्र से शीतल आनंदाश्रु बहानेवाले, रोमांचित शरीरवाले, और भगवद्गुणों में तन मन लगानेवाले भक्त के दर्शन प्रत्येक मानव का अवश्य कर्तव्य है । इस भक्तलक्षण का पहला लक्ष्य आळ्वार ही हैं । प्रथम प्रबंध **'तिरुविरुत्तम्'** की दूसरी गाथा में ही आळ्वार ने अपने आनंदाश्रुवाहकत्व का वर्णन कर दिया । अतः यहाँ भी इसी अर्थ की सूचना की जा सकती है ।।

**अरुळाद नीररुळि अवरावि तुवरामुन्**
**अरुळाळि प्पुळ्कडबीर् अवर् वीदियोरुनाळेन्नु**
**अरुळाळि यम्मानै क्कण्डक्काल् इदुशोल्लि**
**अरुळाळि वरिवण्डे यामुमेन् पिळैत्तोमे ।।६।।**

**(गाथा) - रम्यस्वोचितपत्रझंकृतियुतस्त्वं भृङ्ग ! दृष्ट्वा हरिं**
**नाथं भक्तकृपाळुचक्रधरमेवेदं वचो मे वद ।**
**निष्कारुण्यगुणोऽसि जातु कृपया तस्यास्तु जीवावधौ**
**तद्वीथ्यां गरुडं च ते गमय भो ! देवेति, किं मेऽस्त्यघम् ?।।६।।**

**[प्रतिपदार्थः]**

**विवरणम् - अयि गभीरस्वभावाञ्चितसुन्दरभ्रमर! करुणावरुणालयो भगवानवलोकितश्चेत् तमुद्दिश्य कथयतादेवम् ; 'अद्यापि निर्घृणः भवान् स्वाभाविकीं घृणां प्रदर्श्य (कुरुकापुरवासिनः शठकोपनाम्नः) तस्य व्यक्तिविशेषस्य पञ्चताप्राप्तेः पुरस्तादेव परमकारुणिकं गरुत्मन्तं तद्वीथीपथेन सकृदपि वा संचालयतु भगवन् ।' इति । इत्थं त्वया कृपा कर्तव्या भो भृङ्गराज ! किमपराद्धमस्माभिः हन्त! ।।**

**[सत्तालम्बनोपायः]**

अधस्तनगाथायां स्वकीया नारायणसमाख्या संरक्षणीया इति कथय इति बकपक्षिणम् उद्दिश्य प्रोक्तम् । एवं प्रोक्ते सति भगवानथ किमपि दारुणमुत्तरं ब्रूयादिति

मेने पराङ्कुशनायिका ; (किं तदिति चेत् ;) "मदीयं नारायणत्वं भज्यतां कामम् ; दोषभूयिष्ठया तया सह संश्लिष्य अवद्यलाभादपि नारायणत्वभङ्गसम्पादनं वरमिति मन्ये" इति भगवान् प्रत्युत्तरयेदपि इति । मत्वा एवमस्यां गाथायामाह - तस्याप्यवद्यं मा भूत् ; ममापि सत्ताहानिः माभूत् ; तथा नाम कमपि कथयामि उपायविशेषम् ; भगवतः तस्य वीथीषु स्वच्छन्दविहारः, गजेन्द्रादिभक्ताभिरक्षणार्थं यात्राप्रस्थानम् इत्येवंप्रकाराः प्रयाणविशेषाः सन्ति खलु निसर्गतः ; तादृशसञ्चारमर्यादया ममापि वीथीपथेन सकृत् प्रयातु नाम ; एवं सति तस्य न किमपि स्यादवद्यम् ; मया सह संश्लेषे खल्ववद्यं स्यादिति सः मन्यते ; संश्लेषस्तु मा भूत् कामम् ; पतगराजमारुह्य सकृदेव मम वीथ्यां प्रयातु ; तावता मे सत्ता समुन्मिषेत् - इति ।।

**[भ्रमरशब्देन आचार्याः उद्दिष्टाः]**

भ्रमरापदेशेन आचार्याः एव विवक्षिताः ; तत्र एताः उपपत्तयोः अवधेयाः । (१) भ्रमर-चञ्चरीकादिव्यपदेशाः सततभ्रमण-सन्ततसञ्चरणप्रयुक्ता हि भवन्ति भृङ्गजातेः । एवं **'श्रीरङ्गं करिशैलमञ्जनगिरिं ताक्ष्र्याद्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम् । श्रीमद्द्वारवतीप्रयागमथुरायोध्यागयापुष्करं सालग्रामगिरिं निषेव्य रमते रामानुजोऽयं मुनिः'** ।। इत्याद्युक्तरीत्या नानादिव्यदेशसन्ततसञ्चरणशीलाः महान्तः अभिधित्सिताः । (२) भृङ्गजातेः मधुपानलोलुपत्वं तदन्यविमुखत्वं च प्रसिद्धम्, अत एव मधुपशब्दाभिधेयता च । एवं **'विष्णोः पदे परमे मध्व उत्सः'** इति श्रुत्युक्तरीत्या **'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति'** (स्तो.र.२७) इति भगवद्य मुनार्यसूक्तिरीत्या च भगवत्पादारविन्दमधुपानसमुत्सुकाः परमरसिकाः विवक्षिताः । (मध्व उत्सः) मधुनः इत्यर्थे मध्वः इति छान्दसं रूपम् । उत्सः - प्रवाहः ।। (३) भगवन्मन्दिरान्तःप्रवेशे अस्मादृशां क्षुल्लकानां प्रतिरोधो यद्यपि भवति, भ्रमराणां तु स नैव भवति ; स्वच्छन्दम् अनायासतश्च अन्तःप्रविश्य भगवतः सर्वेषु दिव्यावयवेष्वपि हि वलन्ते ते । एवं भगवदन्तरङ्गस्थानेषु सर्वत्र च अप्रतिहतगतयः भगवतः सर्वावयवसंश्लेषभाग्यभाजश्च महाचार्याः विवक्षिताः । पुरा कश्चन महाविद्वत्तल्लजः श्रीनिवासभगवत्सिसेविषया श्रीवेङ्कटाद्रिम् अयासीत् ; तत्र कतिपयानि दिनानि स्थित्वाऽपि मन्दिरान्तःप्रवेशलेशमपि अलभमानस्ताम्यन् **'ऐश्वर्यमदमत्तोऽसि मां न जानासि माधव । परैः परिभवे प्राप्ते मदधीना तव स्थितिः'** ।। इति विज्ञाप्य प्रणम्य

प्रयाणोन्मुखो यदाऽऽसीत् तदा अर्चकम् आविश्य परमकृपामयीम् अज्ञाम् अनुगृह्य विद्वद्वरेण्यं तं सरभसम् अन्तः आनाय्य परिपूर्णानुभवं प्रादात् इति इतिहासः प्रथते । एवं निरवग्रहानुग्रहपात्रभूतः महानुभावाः कालत्रितयेऽपि सुलभाः ननु । (४) श्रीशठकोप-मुनिवरोऽसौ स्वकीयप्रथमप्रबन्धे **(तिरुविरुत्ते-५५)** भगवत्सविधे संदेशप्रापणाय स्वेन आहूयमानान् द्विरेफानुद्दिश्य कथयति "जलजातेषु स्थलजातेषु तरुजातेषु च पुष्पेषु मधुपानेन सानन्दं चरतां वः किमपि ब्रवीमि भोः!" इति । कमलादीनि जलजातानि; मल्लिकामालतीप्रभृतीनि स्थलजातानि ; वकुलपाटलपारिजातादीनि पुष्पाणि तरुजातानि । एवं त्रिविधेष्वपि कुसुमेषु लोलुपता भृङ्गजातेः नैसर्गिकी । आचार्याः अप्येवम्। क्षीराब्धिनाथं व्यूहाधिष्ठितवासुदेवम् उपभुञ्जानाः महान्तो जलजन्मकुसुमोपभोक्तारः । स्थलविहरणेन मोदमानानां रामकृष्णादिविभवमूर्तीनां च अनुभवोत्सुकाः स्थलजन्मकुसुमानुभवसक्ताः । उत्तुङ्गस्थाने परमे पदे विराजमानं श्रीवैकुण्ठनाथम् इहैव अनुभवन्तो महान्तः तरुमूर्धजपुष्पोपभोक्तारः । अस्मदीयपूर्वपुरुषाणामेव केवलं योग्याभिः भोग्याभिश्च एवंविधविलक्षणानुभवप्रणालीभिः भृङ्गसाधर्म्यघटना सुशोभना । **अयि गभीरस्वभावाञ्चितसुन्दरभ्रमर !** इत्युक्तिबलेन **त्वया कृपा कर्तव्या** इति प्रार्थनाबलेन च महागुरुचरणाः एवात्र विवक्षिताः इत्यवधारणम् अनर्गलम् ।

### [मुनीन्द्रस्य आर्त्यतिशयः]

**'अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम'**। (रामा.यु.कां.१८-३३) **मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन'** (रामा.यु.कां.१८-३) इत्याद्यनर्घोक्तिप्रसादेन प्रकाशितपरमकरुणाबलस्य भगवतो विषये **अद्यापि निर्घृणो भवान्** इत्युक्तिः मुनिवरस्यास्य मुखात् कथमिव निस्सरति इति न विद्मो हन्त ! आर्त्यतिशयः खलु एवमाख्यापयति ।

### [गरुडारूढभगवत्सेवेच्छा]

पतगराजारूढभगवत्सिसेविषाप्रकाशनमिह स्थितम् ; **'केचित्तत्वविशोधने पशुपतौ पारम्यमाहुः परे व्याजह्रुः कमलासने नयविदामन्ये हरौ सादरम् । इत्येवं चलचेतसां करधृतं पादारविन्दं हरेस्तत्त्वं दर्शयतीव संप्रति नृणां ताक्ष्यर्ः श्रुतीनां निधिः'** ।। इत्युक्तरीत्या वेदात्मना विहगेश्वरेण करधृतिव्याजेन अयमेव परमः पुमानिति सुस्पष्टं संदर्श्यमानं परमतत्वं सर्वेऽपि विदित्वा सुप्रसन्नचेतसो भवन्तु इत्यभिसन्धिना ।

**[वीथीसञ्चरणोक्त्यर्थः]**

स्ववीथीपथेन संचरणार्थनमिह यदा तन्यते तत्रेदम् अवबोद्धव्यम् । श्रीकुरुकापुर्यां श्रीमदादिनाथभगवन्मन्दिरान्तः तिन्त्रिणीमूलधाम्ना सता मुनिवरेण तावदियं सूक्तिः अनुगृह्यते; तत्र वीथी न काचिदस्ति; तथाऽप्येवं प्रार्थितवतो मुनिवरस्य हृदयम् आकर्णयत । पश्चात् तत्रतत्र दिव्यदेशेषु स्वस्य मन्दिरप्रतिष्ठा भवित्री; तच्च मन्दिरं यत्र वर्तते तत्र "आळ्वार् तिरुवीथी" इति प्रथा भवित्री ; तस्यां वीथ्यां भगवतो गरुडारूढस्य यात्रा भूयादिति । सत्यमियम् आशंसा काञ्च्यां श्रीहस्तिगिरिक्षेत्रे चिरात् फलेग्रहि भवति इति सर्वेऽपि साक्षात्कुर्वते । अत एव प्रथमप्रबन्धप्रथमगाथायाः तृतीयचरणे अस्याः सहस्रगीतेः प्रथमगाथायाः तृतीयचरणे च देवाधिराजभगवन्नामग्रहणं दैवेच्छया समजनि । श्रीमान् वेङ्कटानाथार्योऽपि **'प्रथमशतके वीक्ष्य वरदम्'** इति पूर्वाचार्यपरम्परासमागतम् ऐतिह्यम् अन्ववादीत् - इति रस्यं रहस्यम् । अधस्तात् दशकस्यास्य प्रथमगाथायां पतगराजप्रस्तावे तस्य तैक्ष्ण्यम् उक्तवत्या पराङ्कुशनायिकयाऽत्र गरुत्मतः परमकारुणिकत्वेन विशेषणम् स्वकार्यस्य निष्प्रत्यूहसिद्धये। कस्याश्चन ललनायाः वीथ्याम् असकृत्सञ्चारे यः कोऽपि लोकापवादः समुन्मिषेदिति स मा स्म बिभेदिति विवक्षुरिव **सकृदि**ति सङ्गदति । **पञ्चताप्राप्तेः पुरस्तादेव** इत्यश्लीलवाचोऽपि व्याहरणम् अपरिच्छेद्यम् आर्त्यतिशयम् आविष्करोति । गरुत्मन्तम् अधिरुह्य समागच्छतात् इत्यनभिधाय "गरुत्मन्तं सञ्चालय भगवन्" इति प्रार्थनया व्यज्यते एतत् - भगवन्तं स्वस्कन्धमधिरोप्य समागतो गरुत्मान् ज्ञानभक्तिसौरभसंभृतमस्या दिव्यमङ्गलविग्रहमवेक्ष्य ततश्चलितुम् अशक्तस्सन् तत्रैव अवतिष्ठेत ; तदा **'चल चल'** इति भगवता कथयितव्यं भवेत् इत्युन्नयतीति ।।

**[प्रतिपदार्थ]**

**हिन्दी - हे गंभीरस्वभाववाले सुंदर भ्रमर ! दयासागर भगवान को देखने पर उन से यह कहो - 'अभी तक निर्दय रहनेवाले आप, अपनी स्वाभाविक कृपा दिखाते हुए, (कुरुकापुरी के शठकोपसूरी अथवा परांकुशनायिका नामक) उन के शरीर छूटने से पहले हि, परमकारुणिक गरुडजी को उन के मार्ग से (माने उन के घर के सामने से) अंततः एक ही बार चलाइये।' हे भ्रमरराज ! तुम मेरे ऊपर इतनी कृपा करो तो सही । हाय ! मैंने कौनसा अपराध किया ?**

**[सत्ता की सुरक्षा का उपाय]**

पिछली गाथा में नायिका ने भगवान के अपने नारायणत्व की रक्षा करने पर जोर दिया । फिर उस ने सोचा कि "मेरा यह संदेश सुनकर" भगवान अवश्य ही अप्रसन्न होंगे और यह फटकार सुनाएँगे कि 'मैं बेशक अपना नारायणत्व खो वैठ सकूँगा; न तु अतिदोषयुत उस से (नायिका से) मिल कर स्वयं भी दोषी बन सकूँगा' । अतः प्रकृत गाथा में भगवत्कृपा पर जोर डालकर यह संदेश भेजती हैं - मैं ऐसा एक सुंदर उपाय बताऊंगी जिस से भगवान को दोष, न लगेगा और मैं भी अपनी सत्ता के नाश होने से बच जाऊँगी । भगवान गजेंद्रादियों की रक्षा करने के लिए और लीलाविहार के लिए गरुडारूढ होकर कभी कभी वीथियों में निकलते हैं न ? ऐसी यात्रा के बहाने वे कदाचित् मेरी वीथी से भी यदि निकलने की कृपा करें, तो उतने मात्र से भी मैं कृतकृत्य हो जाऊँगी, और उन्हें भी कोई दोष न लगेगा । मैं मिलना नहीं माँगती ; गरुडारूढ उन के मेरे घर के सामने से निकलने मात्र से मेरी सत्ता सुरक्षित हो जायगी ।

**['भ्रमर'शब्द से आचार्य बताये जाते हैं]**

इस गाथा में भ्रमरशब्द से आचार्यों का ही संबोधन किया जा रहा है । इस में औचित्य इस प्रकार है - (१) भ्रमर, चंचरीक इत्यादि अपने नामों के अनुसार, भँवर सदा चलने फिरनेवाला कीट है; आचार्य भी तीर्थयात्रा, धर्मोपदेश इत्यादि व्याज से सदा फिरते रहते हैं ; जैसे कि श्रीरामानुजस्वामीजी के बारे में गाया जाता है - **'श्रीरङ्गं करिशैलमञ्जनगिरिं तार्क्ष्याद्रिसिंहाचलौ'** इत्यादि । (इसका यह भाव है - श्रीरामानुजस्वामीजी श्रीरंग, श्रीकांची, श्रीवेंकटाचल, श्रीयादवाद्रि, श्रीबदरीनाथ, नैमिशारण्य, श्रीद्वारका, प्रयागराज, श्रीमथुरा, श्रीअयोध्या, गया, श्रीपुष्करक्षेत्र, श्रीसालग्रामक्षेत्र इत्यादि दिव्यदेशों का सेवन कर आनंदित रहते हैं ।) (२) मधुप कहलानेवाला भँवर मधु पीने में ही आसक्त होकर दूसरा कुछ नहीं पीता; **'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति'** (स्तो.र.२७) इत्यादि स्तोत्ररत्नोक्त प्रकार आचार्य भी भगवत्पादारविन्द मधु का ही पान करने के परमरसिक होते हैं । (३) हमारे जैसे साधारण लोग कभी कभी भगवान के मंदिर में प्रवेश नहीं पाते हैं ; भ्रमर तो किसी रोकटोक के विना सदा अंदर जा सकते हैं और साक्षात् भगवान के

दिव्यावयवों का भी अनुभव कर सकते हैं ; एवं भगवान के अंतरंग कैंकर्य में निरत श्री कांचीपूर्णस्वामी, श्री पराशरभट्टरस्वामी इत्यादि महान लोग मंदिरों में संकोच के विना भगवत्संनिधि तक पहुंच सकते हैं और उनका अनुभव भी कर सकते है । इस विषय में एक ऐतिह्य जानने योग्य है - किसी समय एक महाविद्वान श्रीनिवास भगवान के दर्शन करने के उद्देश्य से श्री वेंकटाद्रि गये । परंतु बहुत प्रयत्न करने पर भी बहुत दिनों तक उन्हें दर्शन नहीं मिले । तब बहुत दु:खी होकर उन्होंने द्वार पर ही भगवान को लक्ष्य कर प्रणाम करते हुए यह विनती की - **'ऐश्वर्यमदमत्तोऽसि मां न जानासि माधव । परैः परिभवे प्राप्ते मदधीना तव स्थितिः'** ।। अर्थात् हे माधव ! ऐश्वर्यमद से मस्त होकर अब तुम मुझ पर ध्यान नहीं दे रहे हो । अस्तु ; परंतु याद रखो कि जब दूसरे लोग आकर तुम्हारे ऊपर नानाविध आक्षेप करें (अर्थात् निरीश्वरवाद अथवा देवतांतरपारम्यवाद के प्रकाशन करते हुऐ तुझे अनीश्वर बताए), तब तुम्हारी सत्ता मेरे अधीन होगी । (अर्थात् जबतक मैं तुम्हारा पक्ष लेकर उन दुर्वादियों के मत खण्डन कर तुझे ही भगवान सिद्ध न करूं, तब तक कोई तुझे भगवान नहीं मानेगा।) इतना कहकर, जब उस पंडित ने वहाँ से लौटना चाहा, तब भगवान ने अपने अर्चक पर आविष्ट होकर, उसे सबहुमान मंदिर के अंदर ले जाकर, अपने परिपूर्ण दर्शन भी दिये । इस प्रकार भगवान के विलक्षण अनुग्रह के पात्र कोई कोई महात्मा लोग तीनों कालों में मिलते हैं । (४) श्रीशठकोपसूरि अपने पहले प्रबंध **'तिरुविरुत्तम्'** में (गाथा ५५) भगवान के पास भ्रमरों को दूत बनाकर भेजते हुए, उन का वर्णन करते हैं - जल, स्थल व वृक्ष में समुत्पन्न पुष्पों में मधु पीकर सानंद फिरनेवाले हे भ्रमर ! "यह तो स्वभावोक्ति है कि भ्रमर", पानी में उगनेवाले कमल आदि, भूमि पर उगनेवाले मल्लिका आदि, तथा वृक्षों पर फूलनेवाले चंपक पाटली आदि, तीन प्रकार के पुष्पों के मधु चूसते हैं । इस से क्षीरसागरशायी भगवान के, श्री रामकृष्णादिरूप से तथा अनंत अर्चारूपों से भूतल पर विराजमान भगवान के, एवं श्री वैकुंठ नामक वृक्ष जैसे स्थल पर विराजमान भगवान के कल्याणगुणों का अनुभव करनेवाले महात्माओं की सूचना अवश्य ही मिलती है । अत: हमारे पूर्वाचार्य अपने ही असाधारण ऐसे अनेक प्रकारों से भ्रमर के समान माने जा सकते हैं । भ्रमर को गंभीर स्वभाववाले सुंदर भ्रमर कहने से, एवं उन की दया मांगने से यह स्पष्ट सूचित किया जाता है कि आचार्यों का ही यह संबोधन है ।

**[आळ्वार का सीमातीत दुःख]**

**'अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम,'** (रामा.यु.कां.१८-३३) (मैं अपनी शरण में आनेवाले को समस्त भूतों को अभय देता हूं) **'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन'** (रामा.यु.कां.१८-३) (मित्र की भावना से मेरी शरण में आनेवाले का, मेरा कुछ भी हो, त्याग नहीं करूंगा) इत्यादि परमशोभन अभयप्रदान करनेवाले परमारुणिक भगवान को, उन की कृपा से पूर्ण परिचित आळ्वार अब **अभी तक निर्दय रहनेवाले** कह रहे हैं ! यह तो अवश्य ही अत्याश्चर्य की बात है । सीमातीत दुःख ने ही उन के मुख से यह वचन निकाला है ।

**[गरुडारूढ भगवत्सेवा की अभिलाषा]**

यहां पर आळ्वार गरुडारूढ भगवान के दर्शन करना चाहते हैं । इस का यह तात्पर्य है - भगवान के अनेक वाहन होते हैं; परंतु गरुडजी में एक विशेषता है, जिस का वर्णन **'केचित्तत्वविशोधने पशुपतौ'** इत्यादि पद्य में किया गया है । (पूरा पद्य संस्कृत विभाग में दिया गया हैं ।) पद्य का यह भाव है - परतत्वनिर्णय करने में प्रवृत्त कितने ही लोगों ने शिवजी को परतत्व माना ; किन्हीं ने ब्रह्माजी को परतत्व बताया ; दूसरों ने हरि को ही परतत्व कहा । इस प्रकार विवाद होने से साधारण जनता व्याकुल हो उठी । यह दुरवस्था देखकर स्वयं वेदात्मा गरुडजी अपनी दोनों हथेलियों में भगवान के उभयचरणारविंद रखकर सब को बता देते हैं कि "यह देखो ! यही परतत्व है" । कहने का यह तात्पर्य हुआ कि गरुडवाहन भगवान के परत्व का बोधक वाहन है ।

**[वीथी संचार करने को कहने का भाव]**

आळ्वार अपनी वीथी से गरुडवाहन भगवन की सवारी निकालने की इच्छा प्रकट करते हैं । आळ्वार की जीवनी में बताया गया है कि उन्हों ने कुरुकापुरी में श्रीमदादिनाथ भगवान के मंदिर में एक इमली के पेड के नीचे ही विराजकर अपने सभी दिव्यप्रबंध गाये । उधर तो कोई वीथी है ही नहीं । फिर आळ्वार की इस विलक्षण इच्छा का अर्थ क्या होगा ? अपनी असाधारण दिव्यदृष्टि से आळ्वार ने देखा कि बाद में दिव्यदेशों में अपने (आळ्वार के) मंदिरों की भी प्रतिष्ठा होगी और

वहां आळ्वार तिरुवीथी नामक वीथियां भी होंगी । तब उन की ऐसी इच्छा हुई कि उक्त वीथियों में गरुडवाहन की सवारी निकलें । गरुडवाहन वारंवार होनेवाला उत्सव नहीं हैं ; परंतु सालभर में एक बार ही होगा । अतः एक बार सवारी निकालने की बात भी ठीक लगती है । आळ्वार की यह इच्छा श्रीकांची क्षेत्र में श्रीवरदराज भगवान के मंदिर में प्राचीन काल से ही सफल हो रही है । अर्थात् ब्रह्मोत्सव में (एवं और भी दो बार) जब भगवान का गरुडवाहनोत्सव होता है, तब वह सवारी 'आळ्वार तिरुवीथी' से ही निकलती है । मालूम पडता है कि देवाधिदेव श्रीवरदराज भगवान के प्रति आळ्वार का कोई विशेष भक्तिभाव था । अत एव उन के प्रथम प्रबंध **'तिरुविरुत्तम्'** की पहली गाथा के तीसरे पाद में, एवं प्रकृत सहस्रगीति की पहली गाथा के तीसरे पाद में उन्ही भगवान का नाम कीर्तित हुआ । श्री वेदांतदेशिक स्वामीजी ने भी अपने विरचित **'द्रमिडोपनिषत्सार'** में **'प्रथमशतके वीक्ष्य वरदम'** (सहस्रगीति का सारा पहला शतक वरदराज भगवान की स्तुति हैं) कहते हुए संप्रदाय परंपराप्राप्त इसी अर्थ का वर्णन किया ।

प्रकृत दशक की पहली गाथा में गरुडजी के तीक्ष्ण पक्षवाले कहनेवाले आळ्वार, यहाँ उन को परमकारुणिक कह रहे हैं । अपनी इच्छा की निर्विघ्न पूर्ति के लिए यह कहा गया है । एक ही वार निकलने की प्रार्थना इस लिए की जाती है कि वारंवार एक महिला की (परांकुशनायिका की) वीथी में से निकलने पर भगवान को कलंक लगने का भय हो सकता है । **उन के शरीर छूटने से पहले** इत्यादि अश्लील वार्ता कहने का भी कारण आळ्वार का अत्यधिक दुःख ही है । कहना था कि "गरुडवाहन हमारी वीथी से होकर निकलें" ; इसकी जगह "भगवान गरुडजी को हमारी वीथी से चलाएँ" कहने का यह तात्पर्य है - भगवान को अपने कंधों पर विराजमान कर निकलने वाले गरुडजी आळ्वार के मकान के सामने आनेपर, उन के ज्ञानभक्त्यादि विभूषित दिव्यमंगलविग्रह के दर्शन कर, परवशचित्त होकर वहीं खडे हो जायंगे ; तब भगवान को "आगे चलो चलो" कहते हुए उन को चलाना पडेगा ।।

**एन्पिळै कोप्पदुपोल प्पनिवाडै यीर्हिन्र**
**एन्पिळैये निनैन्दरुळि अरुळाद तिरुमालार्क्कु**
**एन्पिळैत्ताळ् तिरुवडियिन् तहविनुक्के न्रोरुवाय् श्चोल्**
**एन्पिळैक्कु मिळङ्गिळिये यान् वळर्त्त नीयलैये ।। ७ ।।**

**(गाथा) - मत्संवर्धित ! हे शुक ! त्वमधुना श्रीकान्तमेवं वद**
**क्लेशो मेऽस्ति हि दुस्सहोऽयमधुना बाष्पाद्रवस्त्राऽस्म्यहम् ।**
**आगांस्येव मम स्मरेत्किमु हरिः ? कारुण्यसिन्धुर्न किं ?**
**किं तादृङ्मम वर्धतेऽद्य दुरितं ? पात्रं दयाया न किम् ?।।७।।**

**[प्रतिपदार्थः]**

**विवरणम् - अयि भोः शुकशाब ! अस्थिग्रन्थौ तन्तुप्रवेशनवत् शिशिरः पवनो मां हिनस्ति हन्त ! अस्यां दशायां ममापराधमेव विचिन्त्य कृपाम् अकुर्वतो लक्ष्मीपतेः सविधे 'तत्र भवतः स्वाभाविककृपागुणस्य विघातकतया किमपराद्धमनेन जनेन' इत्येकस्याः संदेशवाचः कथने हन्त ! का ते क्षतिः भवित्री ? किं त्वं मयाऽभिवर्धितः शुको न भवसि ?**

**[अपराधसहः ननु क्षमागुणः इति ज्ञापनम्]**

अधस्तनगाथायां गरुडारूढस्य भगवतः स्वरथ्यायाम् आगमनं संदिष्टमभूत् ; तत्रैवं भगवतः प्रत्युक्तिस्यात् स्वकीयापराधभूयस्ताम् अविचिन्त्य एवमभ्यर्थने किं नाम फलं स्यात् इति ; इति मन्यमाना पराङ्कुशनायिका शुकशावम् उद्दिश्य संदिशति गाथायामस्याम् - स्वकीयम् अपराधसहत्वरूपं क्षमागुणम् अविचिन्त्य मदपराधमात्रविचिन्तनम् उचितं इति कथय इति ।

**[शुकशाबशब्देन सच्छिष्याः विवक्षिताः]**

शुकशाबत्वेन अत्र विवक्षितः शिष्यलक्षणसम्पन्नः छात्रः इति ग्राह्यम् । यद्यप्याचार्येषु अपि शुकसाधर्म्यं सूपपादम्, तथाऽप्यत्र शाबत्वेन संबोधनात् 'मदभिवर्धितः किं न **भवसि**' इति कथनाच्च शिष्यविवक्षणमेव संप्रतिपन्नम् । शुकसाधर्म्योपपादनं तु शिष्याणाम् आचार्याणामप्यविशेषं वेदितव्यम् । एकस्याः एव व्यक्तेः कदाचित् शिष्यतां अन्यदा आचार्यतां च ननु पश्यामः । श्रीवत्साङ्कमिश्रगुरुवरं स्तुवन् कोऽपि महानाह - **'कूराधीशं गुरतरदया दुग्धसिन्धुं तमीडे श्रीवत्साङ्कश्रुतिमतगुरुच्छात्रशीलैकधाम'** इति । गुरुशीलं छात्रशीलं च कतिपयेषु गुरुवरेषु सामानाधिकरण्येन नृत्यतः इव । अथ शुकसाधर्म्यप्रकाराः अमी। (१) यथा शिक्षणम् अनूच्चारणं शुकेषु प्रसिद्धम् ; रङ्ग रङ्ग ! राम रामेति कथनमनुवदन्ति

शुकाः इति प्रेक्षामहे । दक्षिणचित्रकूटक्षेत्रवर्णने श्रोत्रियद्विजन्मवरसंनिहिताः शुकाः वेदानूच्चारणमपि कलयन्तीति कलिजित्सूरिराह बृहत्सूक्ते। एवं महद्भिः उपदिष्टान् अर्थविशेषान् शब्दविशेषांश्च अविपर्ययेण अनुवदन्तः सच्छात्राः विवक्षिताः । **'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते'** इति श्रीभाष्यम् उपक्रममाणैः भगवद्रामानुजैः संदर्शितं पन्थानम् अभिरक्षन्तः प्रमाणपरतन्त्राः विवक्षिताः। व्यासजैमिनिमुन्योः गुरुशिष्यभावभासुरयोरपि सेश्वरवादनिरीश्वरवादनिबन्धनमतभेदशालित्वापख्यातिर्यथा प्रसृप्ता तथा येषां न भवति ते खलु शुकसाधर्म्यं प्राधान्येन अनुविन्दन्ति । (२) स्वैरसंचरणशीलान् शुकान् पञ्जरेषु बध्नन्तीति प्रेक्षामहे। किमत्र कारणम् ? **'शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम्'** इति चन्द्रालोके पठामः । मधुरवाणीश्रवणकुतूहलेनैव हि शुकं पञ्जरे बध्नन्ति । एवं मधुरतरवाग्व्याहरणेन श्रोतृजनहृदयम् उपच्छन्दयितुं प्रभवन्तोऽन्तर्वाणयः स्वच्छन्दसंचरणप्रतिरोधपूर्वकं क्वचित् नियन्त्रिताः भवन्तीति पश्यामः । **'श्रीरङ्गं करिशैलमञ्जनगिरिम्'** इत्यादिश्लोकोक्तरीत्या नानादिव्यदेशपर्यटनप्रावण्यजुषो भगवद्रामानुजमुनेः **'द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व'** इति श्रीरङ्गनाथभगवत्कृतम् आज्ञापनं चात्र अनुसन्धेयम् । (३) पक्षिजातौ शुकतुल्यसौन्दर्यशालिनः पक्षिणो नान्ये ; स्पृहणीयतनवो हि शुकाः । एवं आत्मसौन्दर्यमिव शरीरसौन्दर्यमपि येषु वर्तते ते विवक्षिताः । **'काषायशोभि कमनीयशिखानिवेशं दण्डत्रयोज्ज्वलकरं विमलोपवीतम् । उद्यद्दिनेशनिभमुल्लसदूर्ध्वपुण्ड्रं रूपं तवास्तु यतिराज ! दृशोर्ममाग्रे ।।'** इत्युपश्लोकनार्हविलक्षणदिव्यमङ्गलविग्रहसुषमासुभगाः इत्युक्तं भवति । (४) शुकाः स्वाभिवर्धननिरतानां करतलमञ्चन्तः तत्प्रदत्तं बिम्बफलादिकम् अश्नन्तीति पश्यामः । एवं **'उप त्वा नेष्ये'** (छां.उ. ४-४-५) इत्युक्त्वा स्वान्तिके एव स्थापयित्वा विविधधर्मचार्याणां सर्वथा परतन्त्राः भूत्वा तत्प्रदत्तान् सदर्थान् उपभुञ्जानाः सच्छिष्याः विवक्षिताः । एवमन्येऽपि साधर्म्यप्रकाराः उन्नेयाः ।

### [विरहिणां प्राणापायकरः शिशिरवातः]

प्रथमपादे शिशिरवातेन स्वस्य भृशं बाध्यमानताम् आचष्टे पराङ्कुशनायिका । लोके दाम्पत्येन वर्तमानाः शिशिरसमीरणम् अन्विष्य गच्छन्तीति, विरहिणो जनाः तादृशपवनस्पर्शमात्रेणापि उद्विजन्तः इति च पश्यामः । पम्पासरस्तीरम् अनुप्राप्तः सीताविरहितो

रामचन्द्रः **'पद्मसौगन्धिकवहं शिवं शोकविनाशनम् । धन्या लक्ष्मण ! सेवन्ते पम्पोपवनमारुतम्'।।** (रामा.कि.कां.१-१०४) इति सौमित्रिं प्रति कथयन् खिद्यते । अत्र द्वितीयपादे शोकविनाशनमिति मारुतविशेषणं विमर्शास्पदम् । विरहिणो रामचन्द्रस्यायं मारुतः शोकविवर्धनः एव न शोकविनाशनः; तत्कथमुच्यते शोकविनाशनमितीति विमर्शः आवश्यकः । उत्तरार्धे **धन्या लक्ष्मण ! सेवन्ते** इत्युक्तत्वात् सेवमानानां धन्यानां दृष्ट्या तथोक्तिरिति केचन व्याचक्षते । रसिकाग्रेसराणां श्रीकलिवैरिगुरुवराणां व्याख्यानं तु विलक्षणं परमशोभनं च । नात्र शोकनाशनमित्युक्तम्, अपि तु शोकविनाशनमिति । शोकस्य आत्यन्तिकनाशकत्वमुक्तं भवति । शोकस्य आत्यन्तिकनाशः कदा भवेत् ? शरीरं यावदवतिष्ठते तावन्नैव भवेत् । संयोगानां विप्रयोगान्तत्वात् नष्टः शोकः पुनरुद्भवेदेव । पुनरिति किम् ? पुनःपुनः उद्भवेदेव । यदा तु निधनं संघटते ततःपरं शोकस्य प्रसङ्गः एव न स्यात्; आत्यन्तिकविनाशः एव तस्य। तथा च प्राणापायकरोऽयं शीतवातपोतः इति सिध्यति । एतादृशीं बाधाम् अनुभवामि बतेति कथयति पराङ्कुशनायिका । हिंसायां दृष्टान्तः उच्यते **'अस्थिग्रन्थौ तन्तुप्रवेशनवत्'** इति । अस्थिपुञ्जे रन्ध्राणि कृत्वा तत्र तन्तुप्रवेशने कृते यादृशी बाधा भवेत् तादृशीति कथितं भवति ।

### [भक्तोपेक्षा भगवद्गुणविरुद्धा]

अथ संदेशगोचरीभूतो भगवान् विशेष्यते **'ममापराधमेव विचिन्त्य कृपामकुर्वतो लक्ष्मीपतेः'** इति । अपराधकर्तृत्वं मम सहजस्वभावो यथा तथा तस्य अपराधसहत्वं प्रकृतिः खलु । तत्र विस्मरणम् मदपराधेष्वेव स्मरणं च नोचितमिति कथय । एतेन भगवतः क्षमागुणोद्बोधनं क्रियते । सहस्रनामस्तुतौ **अविज्ञाता** इति भगवतः एकं नाम। **'अविज्ञाता हि भक्तानामागस्सु कमलेक्षणः'** इति तावन्निरुक्तिः । भक्तापराधेषु अविज्ञातेति प्रसिद्धः सः इदानीं तेषु प्राज्ञो बभूव इव । स्वगुणेषु अविज्ञाता, परदोषेषु प्राज्ञश्च बभूविथ किम् ? इति पृच्छ इत्युच्यते इव । **'कृपामकुर्वतो लक्ष्मीपतेः'** - कृपाराहित्यस्य लक्ष्मीपतित्वस्य च सामानाधिकरण्यं कथं संघटेत हन्त ! लक्ष्मीस्तावत् **'न कश्चिन्नापराध्यति'** (रामा.यु.कां.११३-४३) इति कथनशीला। **'पितेव त्वत्प्रेयान्....भवति च कदाचित्कलुषधीः । किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः'** ।। इत्युक्तरीत्या

भक्तनिग्रहाभिमुख्यनिवारणपूर्वकं तदनुग्रहौन्मुख्यसंधुक्षणशीला च । तादृश्याः पतिर्भूत्वा कथमिव मम दोषान् अनुचिन्तयति इति पृच्छ - इति वेदान्तियतीन्द्र (नञ्जीयर) निर्वाहः । श्री कुरुकेशार्यनिर्वाहस्तु - लक्ष्मीः स्वकीयविभ्रमभ्रमिषु तं विनिमज्जयन्ती सती तस्य आन्यपर्यं निरुणद्धीव ; अत एव तस्यामेव अस्तमितान्यभावस्सन् हन्त मामुपेक्षते इव इति। **किमपराद्धमनेन जनेनेति कथय** - स्वस्मिन्नपराधो नास्तीति कथनं नात्र विवक्षितम् । तदीयक्षमागुणभूम्नो निरीक्षणे इतोऽपि भृशम् अपराद्धव्यम् ; तावत्तु नैवापराद्धम् इत्येव विवक्षितम् । सुग्रीवसख्यसमनन्तरं वालिवधादिनिर्वर्तनात् ऊर्ध्वं वर्षाकाले बहिः प्रयाणम् अनुचितम् इति मन्यमानेन दाशरथिना मासद्वयावधिः अदायि वानरपतेः । अवधिः तावदतीतः। सुग्रीवो भोगप्रवणस्सन् अत्यन्तमेव विसस्मार रामचन्द्रम् । तदात्वे कोपकषायितहृदयः काकुत्स्थः **'समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगाः।। न च संकुचितः पन्था येन वाली हतो गतः।....हनिष्यामि सबान्धवम्'** ।। (रामा.कि.कां.३०-३१,८२) इत्यादिकम् अतिपरुषम् अभिधाय किष्किन्धाद्वारं प्रजिघाय लक्ष्मणम् । स च तत्र गत्वा दारुणं ज्याघोषम् उपबृंहयति स्म । तदा विदितोदन्ता तारा बहिरागत्य **'किं कोपमूलं मनुजेन्द्रपुत्र ! कस्ते न संतिष्ठति वाङ्निदेशे'**? (रामा.कि.कां.३३-४१) इति अप्राक्षीत् रामानुजमिति विलिखति वाल्मीकिः । अत्रेदं विचार्यम् । किं न जानाति कोपमूलं तारा ? कथं न जानाति ? सम्यगेव जानाति । ज्ञात्वाऽपि कथमेवम् अनुयुङ्क्ते । स्वस्मिन् अपराधो नास्तीति न ; कोपप्रतिबन्धके क्षमागुणे त्वयि वर्तमाने सति हन्त कथमिव कोपः उदियाय ? इति तावत् प्रश्नाभिप्रायः । कार्यसामान्यं प्रति कारणकलापसमवधानम् आवश्यकमिति स्थितम् । तत्समवधानेऽपि प्रतिबन्धकसद्भावे कार्यं नैव उदेति । ततश्च प्रतिबन्धकाभावसमवहितकारणकलापसद्भावः कार्यसामान्यं प्रति कारणमिति परिष्कुर्वन्ति पण्डिताः। एवं निग्रहं प्रति अपराधरूपकारणसद्भावमात्रम् अप्रयोजकम्; प्रतिबन्धकाभाववैशिष्ट्यं च आवश्यकम् । प्रकृते तद्दुर्लभम् । क्षमायाः निग्रहप्रतिबन्धकत्वात्, तत्स्मारणे कृते निग्रहौन्मुख्यं विहाय अनुग्रहाभिमुखः स्यात् भगवानिति पराङ्कुशनायिकायाः सुशोभनं हृदयम् ।

**[शुकस्य उपेक्षणमयुक्तम्]**

**किं त्वं मयाऽभिवर्धितः शुको न भवसि ?** - यद्यपि भर्ता हिंसां कर्तुं प्रभवति ; मयाऽभिवर्धितस्य तवापि हिंसाकृत्यं किमुचितम् ? इत्येको भावः । दौत्याय

झटिति प्रस्थानादर्शनेन एवमुच्यते । स्वयं परमकारुणिको भगवान् मत्संबन्धवशादेव हि विपर्यस्तप्रकृतिः सन्नुपेक्षते ; तस्मिन्निव त्वय्यपि मत्संबन्धसद्भावात् तवापि उपेक्षणम् उचितमेव इत्यपरो भावः ।

**[प्रदक्षिणादिकं कैङ्कर्यधिया कर्तव्यम्]**

**किमपराद्धमनेन जनेन** इत्यत्र व्याख्यातृमहाभागाः एवम् अनुगृह्णन्ति - 'तत्र भवतः कृपायाः प्रतिबन्धकत्वेन किं मया प्रदक्षिणनमस्कारादिकं किञ्चिदनुष्ठितमिति प्रष्टव्यम्' इति श्रीमत्कलिवैरिगुरुवराः अनुजगृहुः इति । अत्रेदं विचार्यम् - प्रदक्षिणनमस्कारादिकं किं भगवत्कृपायाः प्रतिबन्धकम् ? प्रत्युत अभिवर्धकमेव खलु । एवम् अनुगृहीतवन्तः आचार्यचरणाः किं न अन्वतिष्ठन् प्रदक्षिणनमस्कारादिकम् ? इति । अत्रेदम् अभिसंहितम् । प्रदक्षिणनमस्कारादिषु कृत्यकलापेषु आकारद्वयमस्ति तावत्, कैङ्कर्यरूपता साधनानुष्ठानरूपता चेति । कैङ्कर्यधिया तदनुष्ठातारः अतीव विरलाः ; **'निजकर्मादि भक्त्यन्तं कुर्यात्प्रीत्यैव कारितः । उपायतां परित्यज्य न्यस्येद्देवे तु तामभीः'** ।। (गी.सं. ३१) इति *गीतार्थसंग्रहे* भगवद्यामुनमुनीन्द्रानुगृहीतरीत्या अनुष्ठातारो नात्र विवक्षिताः । प्राकृतजनानिव किमस्मानपि साधनानुष्ठानवैयग्र्येण भवत्कृपाप्रतिरोधजनकान् मन्यसे? इति पृच्छ इत्युक्तं भवति ।। इत्यपि प्रथमपादार्थस्सुवचः। एतादृशेऽर्थे मदीयां परिस्थितिम् इत्यनेन इदानीन्तन्याः स्थितेरेव विवक्षणं न अनुचितमिति प्रोक्तं भवति ।

**[प्रतिपदार्थ]**

**हिन्दी - हे बालशुक ! हड्डी में गूँथे जाने वाले सूत की तरह अतिशीतल दक्षिणमारुत, हाय ! मुझे बहुत त्रास दे रहा है । ऐसी दशा में मेरे अपराधों पर ही नजर डालकर कृपा न करने वाले लक्ष्मीपति भगवान से यह एक संदेशवचन कहने में तुम्हें कौन-सी हानि होगी कि 'इस से ऐसा कौनसा अपराध किया गया, जो आप की स्वाभाविक कृपा का प्रतिबन्धक है' ? क्या तुम मेरे पालित शुक नहीं ?**

**[याद दिलाना कि अपराध सहना ही क्षमागुण है]**

पूर्वगाथा में भगवान को गरुडारूढ होकर अपनी वीथी से पधारने का संदेश भेजने पर परांकुशनायिका ने सोचा कि शायद भगवान इस का यह प्रत्युत्तर देंगे कि

'अपने सीमातीत अपराधों का ख्याल न करके ऐसी प्रार्थना करने से क्या लाभ है'? अत: वह प्रकृतगाथा में एक बालशुक के द्वारा यह संदेश भेजती है कि क्या भगवान को अपने अपराधसहनशीलता नामक गुण का ख्याल न करते हुए मेरे अपराधों पर ही ध्यान देना उचित है ।

**['बालशुक'शब्द से सच्छिष्य बताये जाते हैं]**

यहां पर बालशुक शब्द से शिष्टलक्षण संपन्न चेले सूचित किये जाते हैं । यद्यपि शुक के वक्ष्यमाण लक्षण, शिष्य की तरह आचार्य में भी घटित होते हैं ; अतः उन की भी सूचना हो सकती है ; तथापि प्रकृत गाथा में 'बाल' शुक कहने से, तथा 'मेरे पालित' कहने से शिष्य का ही ग्रहण करना उचिततर है । पहले जो किसी का शिष्य रहता है, वही, बाद में दूसरों का आचार्य बन जाता है । अत: शिष्यत्व व आचार्यत्व, ये परस्परविरुद्ध धर्म नहीं हैं । अत एव किसी एक महात्मा ने श्रीकूरेशस्वामीजी की यह विलक्षण स्तुति की - **'कूराधीशं गुरुतरदयादुग्धसिन्धुं तमीडे श्रीवत्साङ्कं श्रुतिमतगुरुच्छात्रशीलैकधाम'** । (श्रीकूरनामक नगर के स्वामी, अत्यधिक दयागुण के सागर, वेदोक्त समस्त गुरु व शिष्यों के लक्षणों से परिपूर्ण, श्रीवत्सांक नामक महात्मा की स्तुति करता हूं ।) इस से स्पष्ट होता है कि कतिपय महात्माओं में शास्त्रोक्त सभी शिष्यलक्षण व आचार्यलक्षण परिपूर्ण रूप में विराजते हैं। अस्तु । अब शुक का व्यंग्यार्थ बताएंगे । (१) किसी प्रकार का परिवर्तन किये विना, सिखाये हुए शब्द का ज्यों का त्यों उच्चारण करना शुक का गुण है ; श्रीपरकालसूरि अपने बृहत्सूक्त में दक्षिणचित्रकूट क्षेत्र के वर्णन प्रसंग में कहते हैं कि उधर के ब्राह्मणों के यहां बसनेवाले तोते वेद का भी पाठ करते हैं । इसी प्रकार श्रेष्ठ शिष्य भी गुरु के उपदिष्ट शब्दों व अर्थों का ठीक उसी प्रकार अनुकरण करते हैं ; अर्थात् वे उन में कोई अनपेक्षित परिवर्तन नहीं करते । यथा श्रीरामानुजस्वामीजी ने अपने श्रीभाष्य के प्रारंभ में लिखा - **'हमारे पूर्वाचार्यों ने भगवान बोधायन मुनि के विरचित, विस्तृत ब्रह्मसूत्र व्याख्यान का संग्रह किया । उन के मतानुसार अब मैं उन्हीं ब्रह्मसूत्रों के अक्षरलभ्य अर्थों का विवरण करूंगा'** । अर्थात् श्री रामानुजस्वामीजी यह प्रतिज्ञा करते हैं कि पूर्वाचार्यों के वचनानुसार और सूत्रकार के हृदयानुसार ही वे श्रीभाष्य की रचना कर रहे हैं; न तु स्वकपोलकल्पित किसी मत के अनुसार ।

पूर्वमीमांसासूत्र के रचयिता महर्षि जैमिनि भगवान वेदव्यासजी के शिष्य थे । परंतु उन का अपने गुरु के विरुद्ध निरीश्वरवादी होने का अपयश हो गया । इस प्रकार जिस को अपने गुरु के विरुद्ध होने का अयश न लगे, ऐसे, सर्वथा तन्मार्गानुसारी शिष्य शुक शब्द के अर्थ होते हैं । (२) तोते की मधुरवाणी सुनने के लिए लोग उसे स्वेच्छाविहार करने से रोक कर पिंजरे में बंधित रखते हैं । इसी प्रकार श्रोतृजनमनोहारि प्रवचन करने में समर्थ विद्वानों को, इन की वाणी सुनने के लिए रसिकजन यथेच्छ संचार से रोक कर एक स्थल पर उन्हें स्थापित कर देते हैं । श्रीरंगनाथ भगवान ने, **'श्रीरङ्गं करिशैलमञ्जनगिरिम्'** इत्याद्युक्त प्रकार दिव्यदेशयात्रा करने में निरत श्रीरामानुजस्वामीजी को **'अत्रैव श्रीरङ्गे सुखमास्स्व'** (इसी श्रीरंगक्षेत्र में नित्यनिवास करो) कहते हुए एक स्थल पर रोक दिया । (३) पक्षिजाति में तोते सबसे सुंदर होते हैं ; इस से मनोहरदिव्यमंगलविग्रहवाले महात्मा लोग सूचित किये जाते हैं । यथा श्री रामानुजस्वामीजी की यह स्तुति है -**'काषायशोभि कमनीयशिखानिवेशं दण्डत्रयोज्ज्वलकरं विमलोपवीतम् । उद्यद्दिनेशनिभमुल्लसदूर्ध्वपुण्ड्रं रूपं तवास्तु यतिराज दृशोर्ममाग्रे'** । (हे यतिराज! मेरी आँखों के सामने आप अपने दिव्यमंगलविग्रह के दर्शन देते रहें, जो काषाय (गेरुआ वस्त्र) से सुशोभित, सुंदर शिखावाला, त्रिदंड से शोभायमान हस्तयुक्त, शुभ्र यज्ञोपवीत पहना हुआ, उगते सूर्य की भांति प्रकाशमान और चमकते ऊर्ध्वपुंड्र से विभूषित है ।) (४) शुक अपने पालक की हथेली पर बैठकर उस के प्रदत्त फल आदि खाता है ; एवं **'उप त्वा नेष्ये'** (छां.उ.४-५-५) (तुझे अपने पास लूंगा) इत्याद्युपनयनमंत्रोक्त प्रकार, आचार्य शिष्य को अपने पास ही रखकर सदर्थरूप आहार देकर उस का पालन करते हैं। ऐसा शिष्य शुक कहला सकता है । ऐसे और भी सादृश्य के अनेक प्रकार होते हैं ।

**[विरहियों का शीतवायु प्राणापहारी है]**

गाथा के पहले पाद में नायिका शीतलपवनबाधा का वर्णन करती है । यह तो लोकानुभव की बात है कि संश्लिष्ट कामी लोग शीतल पवन की खोज में जाते हैं, परं तु विश्लेष काल में उन्हें यही वायु दु:खद होता है । सीताविरहित श्रीरामचंद्रजी पंपासरोवर के पास पधारकर प्रलाप करते हैं - **'पद्मसौगन्धिकवहं शिवं शोकविनाशनम् । धन्या लक्ष्मण ! सेवन्ते पम्पोपवनमारुतम्'** ।। (रामा.कि.कां.१-१०४) (हे लक्ष्मण !

कमल की सुगंध का वाहक, मंगलमय, एवं दुःखविनाशक पंपासर के उपवनों से होकर बहनेवाले इस पवन के सेवन करनेवाले धन्य हैं) यहाँ एक शंका होती है कि इस वक्त विरही श्रीरामचंद्र जी अपना संताप बढानेवाले इस पवन को कैसे 'शोकविनाशन' कह रहे हैं। कुछ लोग इस का यह समाधान करेंगे कि उत्तरार्ध में 'धन्य' शब्द आता है; अतः ऐसे धन्यों के अभिप्राय से शोकविनाशन कहा गया है । यह तो ठीक है ; परंतु रसिकाग्रेसरचक्रवर्ती श्री कलिवैरिस्वामीजी इस का दूसरा ही एक परमभोग्य विवरण करते हैं - मूलशब्द है **'शोकविनाशनम्'**, न तु शोकनाशनम्; अर्थात् नाशन का एक उपसर्ग दिया गया है 'वि' । वि माने विशेषतः । तथा च शोक का सर्वथा विनाश कहा गया है । यह सर्वथा दुःखनाश तो इस शरीर के रहते हुए न मिलेगा; क्यों कि कदाचित् संश्लेषानंद पानेवाले भी बाद में विश्लेषदुःख भोगते हैं। अर्थात् संसार का यह स्वभाव है कि यहाँ किसी को नित्यसुख नहीं मिलता, अपि तु सुख व दुःख दोनों मिले ही रहते हैं । शरीर के छूट जाने पर तो फिर विश्लेष प्रस्ताव के अभाव से शोक का पूर्ण नाश होगा । तथा च इस स्थान पर श्रीरामचंद्र जी का यह अभिप्राय है कि यह पंपोपवन पवन इतना क्रूर है कि यह मेरा शरीरनाश ही करा देगा । अब परांकुशनायिका यह कहती है कि अब मैं भी दक्षिण मारुत के कारण ऐसे असह्य दुःख भोग रही हूँ । दुःख का दृष्टांत दिया जाता है - **अस्थि में सूत्र गूँथे जाने की तरह** - यह भाव है - हड्डी में छेद बनाकर उस में सूत्र घुसेडने से मानव को जितना और जैसा दुःख होगा, ठीक वैसा ही दुःख यह दक्षिण मारुत मुझे भी दे रहा है।

**[भक्तों की उपेक्षा भगवान के गुण के विरुद्ध है]**

संदेश के लक्ष्य भगवान का विशेषण दिया जाता है - **मेरे अपराधों पर ही नजर डालकर कृपा न करने वाले लक्ष्मीपति** - जैसे अपराध करना मेरा स्वभाव है, वैसे उन की क्षमा करना भगवान का स्वभाव है । यह स्वभाव भूलकर मेरे दोषों का ख्याल करना उन के लिए अनुचित है । इस विनती से भगवान की क्षमा उद्बोधित की जाती है । श्रीविष्णुसहस्रनामस्तोत्र में भगवान का यह एक नाम गाया गया है - **अविज्ञाता** । अविज्ञाता माने जो कुछ भी न जानता है; अर्थात् - अज्ञानी । भक्तों के अपराध नहीं जानने से भगवान अज्ञानी कहे गये । एवं अज्ञानी के रूप में संस्तुत

भगवान अब भक्तापराधों के ज्ञानी बन गये होंगे । भगवान से यह पूछो कि क्या अब वे स्वगुणों के अविज्ञाता और भक्तदोषों के ज्ञाता बन गये । **कृपा न करनेवाले लक्ष्मीपति** - यह तो शब्दों का विचित्र मिलाप है । लक्ष्मीपति और कृपाशून्य का कौन सा संबंध है ? कुछ भी नहीं । लक्ष्मीजी का सिद्धांत है - **'न कश्चिन्नापराध्यति'** (रामा.यु.कां.११६-४४) (संसार में अपराध न करनेवाला कोई भी नहीं) और अपराधी को दंड देने में उद्यत भगवान को भी उस काम से रोककर, उलटा कृपा करने की प्रेरणा देना लक्ष्मीजी का स्वभाव है । अतः श्रीवेदांतिस्वामी नामक नञ्जीयर् ने इस का यह तात्पर्य किया कि ऐसी महालक्ष्मीजी के पति होते हुए भी, हे भगवन ! आप मुझ पर कैसे निर्दय बन गये ? षट्सहस्री व्याख्याकार श्रीकुरुकेशस्वामीजी का विवरण यह है - **इस समय भगवान लक्ष्मीजी के भोग में आसक्त होकर उसी में लीन होने के कारण ही शायद मेरी उपेक्षा कर रहे हैं । इस से ऐसा कौन सा अपराध किया गया** इत्यादि से आळवार अपने निरपराध होने का दावा नहीं कर रहे हैं ; किं तु उन का यही तात्पर्य है कि भगवान के असीम क्षमागुण पर ध्यान देने पर कहना पडता है कि अभी तक हम ने इतने पाप नहीं किये, जो उन की क्षमा के पर्याप्त हों; अतः हमें और भी बहुत पाप करने चाहिए ; अब के हमारे पाप अत्यल्प हैं । अर्थात् यह भगवान की क्षमा की प्रशंसा है; न तु अपने अपराधाभाव का दावा । श्रीरामायण में किष्किन्धाकांड की कथा है । वालिवध के बाद श्रीरामचंद्रजी ने उपस्थित वर्षाकाल में रावण पर विजययात्रा करना अशक्य मानकर उतने समय सुग्रीव को आराम करने की अनुमति दी । साथ ही उन्होंने यह भी आज्ञा दी कि चौमासे के समाप्त होते ही रावणवध के लिए अवश्य प्रयत्न करना चाहिए । परं तु अपने कामभोगों में मस्त सुग्रीव श्रीरामचंद्र जी को सर्वथा भूल गया । इस से कुपित श्रीरामचंद्र जी ने लक्ष्मण जी के द्वारा उसे यह संदेश भेजा कि अरे ! वानर सुग्रीव ! अपनी प्रतिज्ञा पर ध्यान दो । मारे गये वाली का गया मार्ग अभी संकुचित नहीं हुआ । अपनी प्रतिज्ञा का ख्याल न रखनेवाले तुम को मैं वाली के पीछे उसी राह भेज दूँगा । (अर्थात् वाली की भाँति तुझे भी मार डालूँगा ; इतना ही नहीं ; वाली एक ही गया; सत्यमार्ग से भ्रष्ट तुम्हें तो तुम्हारे बंधुमित्रों के साथ मार डालूँगा) इत्यादि । तब लक्ष्मण जी ने वेग से किष्किंधा पधारकर, सुग्रीव के महल पहुँचकर उसे अपने आने की सूचना देने के लिए धनुष का टंकार किया । महर्षि वाल्मीकि लिखते हैं

कि यह समाचार पाकर तारा ने अन्तःपुर से बाहर आकर लक्ष्मण जी से यह विनती की कि **'किं कोपमूलं मनुजेन्द्रपुत्र ! कस्ते न संतिष्ठति वाङ्निदेशे'** (रामा.यु.कां.३३-४१) इत्यादि (हे राजपुत्र ! आप के कोप का कारण क्या है ? आप के आज्ञानुसार कौन न चलता ?) अहो ! यह कैसी बात है ? क्या तारा लक्ष्मण जी का कोपकारण नहीं जानती ? अच्छी तरह जानती है । जान कर भी वह यह क्या प्रश्न कर रही है? आचार्य इस का भाव इस प्रकार बताते हैं - तारा यह नहीं कह रही है कि अपने में दोष नहीं है ; परं तु भगवान में (एवं लक्ष्मण जी में भी) इतनी क्षमा है कि वे इस से सौगुने अपराध का सहन कर सकते हैं । तथा च तारा का यह प्रश्न है कि **प्रभो! ऐसे असीम क्षमागुण के भण्डार होते हुए आप कैसे रुष्ट हो रहे हैं ?** इस न्याय से परांकुशनायिका का यह अभिप्राय है कि भगवान को अपनी (भगवान की) क्षमा की याद दिलाने पर वे भक्त के निग्रह का विचार छोडकर अनुग्रह करने के लिए तैयार हो जाएँगे ।

**[शुक की उपेक्षा को अयुक्त बताना]**

नायिका की यह बात सुन कर भी जब वह शुक भगवत्संनिधि जाने के लिए झट न उठा, तब नायिका उस से पूछती है - क्या तुम मेरे पालित शुक नहीं? भर्ता होने से भगवान कदाचित मेरी हिंसा भी कर सकते हैं ; मेरे पालित तुम भी कैसे हिंसा कर सकते हो? (अर्थात् मेरे कथनानुसार भगवान के पास न जाते हुए मेरी उपेक्षा कर, तुम मुझे क्यों दुःख दे रहे हो ?) अथवा स्वयं कारुणिक स्वभाव भगवान ही जैसे मेरे संबंध से निर्दय बन गये, वैसे ही इसी मेरे संबंध से तुम भी मुझ पर निर्दय बन गये हो ; यह तो उचित ही है ।

**[प्रदक्षिण आदि को कैंकर्यबुद्धि से करना चाहिए]**

इस से ऐसा कौन सा अपराध किया गया ? यहां पर सहस्रगीति टीकाकार आचार्य श्री कलिवैरिगुरु नामक नम्बिळै स्वामीजी एक विलक्षण वचन लिखते हैं - **भगवान से यह पूछो कि आप की कृपा का प्रतिबंध करते हुए क्या मै ने प्रदक्षिण नमस्कारादि कुछ भी अनुष्ठान किया ?** यह तो एक विचित्र-सी बात है । प्रदक्षिण नमस्कार इत्यादि भगवत्कृपा के प्रतिबंधक नहीं हो सकते हैं ; वरन् उत्तेजक

ही होंगे । अन्यथा पूछना पडेगा कि क्या श्री कलिवैरिगुरु ने कभी भगवान का प्रदक्षिण अथवा प्रणाम नहीं किया । इस का यह भाव है - प्रदक्षिण प्रणाम इत्यादि कार्य के दो आकार होते हैं - भगवत्कैंकर्य होना और किसी फल का उपाय होना । अर्थात् श्रीमद्यामुनाचार्य स्वामीजी के अपने गीतार्थसंग्रह में प्रदर्शित प्रकार, फलकामना छोडकर साक्षात् भगवान को ही उपाय मानते हुए, केवल कैंकर्यभावना से प्रदक्षिण इत्यादि कार्य करने में कोई आपत्ति नहीं हो सकती । परं तु इन्हीं कार्यों को उपायबुद्धि से करने पर वे अवश्य ही भगवत्कृपा के प्रतिबंधक बन जाते हैं । अर्थात उपायबुद्धि से करनेवालों के प्रति भगवान का यह विचार होता है कि ठीक है ; **'ये लोग अपने प्रयत्न से पुरुषार्थ कमाने की चेष्टा करते हैं ; अतः अब मुझे इन पर कृपा करने की आवश्यकता नहीं !'** अतः यहाँ श्री परांकुशनायिका भगवान से यह पूछना चाहती है कि क्या मैने आप को ही उपाय न मानती हुई, आत्मकल्याण के लिए प्रदक्षिण प्रणामादि साधनों का अनुष्ठान कर आप के कृपाप्रवाह को रोक दिया ।।

**नीयलैये शिरुपूवाय् नेडुमालार् केनूतनूदाय्**
**नोयेनदु नुवलेन्न नुवलादे यिरुन्दोळिन्दाय्**
**शायलोडु मणिमामै तळर्न्देन् नान् इनियुनदु**
**वायलहि लिन्नडिशिल् वैप्पारै नाडाये ।। ८ ।।**

**(गाथा) - दूतीभूय मम त्वमद्य पतग ! प्राप्तो न तं मूढधी-**
**विष्णुं मे प्रभुमिन्दिरेशमनघं नावेदयो मे दशाम् ।**
**अत्यन्तार्तिकरीमिमां किल ! ततो वर्णोऽद्य देहे मम**
**क्षीणोऽस्त्यन्तिमकाल एवमितरांस्त्वं पोषकान्मार्गय।। ८।।**

[प्रतिपदार्थः]

**विवरणम् - अयि भो बालशारिके ! भूरिव्यामोहशालिनो भगवतस्सकाशे मम दूती सती गत्वा मदीयां व्यथां निवेदय इत्युक्ताऽपि त्वं अनिवेद्य जोषम् अवतिष्ठसे हन्त ! किं त्वं विपर्यस्तप्रकृतिरसि ? अहं तावत् प्रनष्टसौन्दर्यलावण्या समभूवम् । इतः परं त्वच्चञ्चूपुटे भोग्यं भोज्यं ये विन्यस्येयुः तान् त्वमेवान्विष्य संपादयतात् ।।**

**[आर्ताभिसन्धिः]**

सैषा गाथा मुनीन्द्रस्य चरमसंदेश इवावतरति हन्त । जगति प्रायस्सर्वेऽपि स्वस्य चरमकाले कमपि कमपि संदेशं दिशन्ति पुनर्जीवितनैराश्येन ; स एव चरमसंदेशः प्रथितः । तादृगेव संदेशोऽयमिति चरमचरणेन व्यज्यते । **'इतः परं त्वत्पोषकान् त्वमेव मृगयस्व'** इति तावदन्त्यपादेन अभिधीयते । ततश्च तादृशी दशा सांप्रतं समजनि इति प्रतिपत्तव्यं भवति । शारिका नाम शुकजातौ जातः पक्षिविशेषः । अधस्तनगाथायां शुकसाधर्म्यप्रकारा ये ये निरूपिताः तेऽत्रापि विभाव्याः । **नीयलैये शिरुपूवाय्** इति तावद् गाथोपक्रमः। शारिकायाः संबोधनात्प्रागेव **किं त्वं विपर्यस्तप्रकृतिरसि ?** इत्युच्यते । अत्रायमभिसन्धिः; लोके बन्धुजनाः रुग्णाः सन्ति चेत् आप्तेषु जनेषु केचित् इतस्ततः पर्यटन्तः सन्तः रोगपरिहारोपायचिन्ताविवशाः प्रवर्तन्ते ; केचित्तु रुग्णानां यावती व्यथा तावतीं ततोऽधिकामपि स्वयं बिभ्रतः ताम्यन्ति, उत्थातुमप्यक्षमाः परिक्लिश्यन्ते च । अत्र शारिकात्वेन विवक्षिताः अन्तेवासिनः स्वाचार्यनिर्विशेषव्यथाभिभूतास्सन्तः 'मृतसंजीवनो भगवत्संश्लेषः कथमिव घटिष्यते दशायामस्याम्' इति विचारविह्वलाः वर्तन्ते; सा परिस्थितिः स्फोर्यते **'किं त्वं विपर्यस्तप्रकृतिरसि'** इत्यनेन। भगवत्सकाशे मदीयां दशाम् आवेदय इति चिरादहं प्रार्थितवती ; तथाऽपि त्वया नैव मदुक्तिः आदृता ; अत एव सः भगवान् नोपस्थितः ; यदि त्वया काले निवेदितं स्यात्तर्हि तेन सत्यम् उपस्थितैनैव भूयेत ; अनिवेदनं त्वदीयो ह्यपराधः - इति तावदभिधीयते । स्वयं परमकारुणिकोऽपि भगवान् व्याजरूपतया संदेशं प्रतीक्षते इति हि शास्त्रमर्यादा । अत एव हि विभीषणोऽप्याह **'निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् । सर्वलोकशरण्याय राघवाय महात्मने'** ।। (रामा.यु.कां.१७-१७) इति । एवं प्रार्थनाविरहे विभीषणस्य रामपरिग्रहः किं न घटेत ? कथमपि घटेतैव ; तथाऽपि शास्त्रीयः पन्थाः नातिवर्तितव्यः इति धियैव **'निवेदयत मां क्षिप्रम्'** इति प्रार्थनायां प्रवृत्तस्स इति वस्तुस्थितिः । एवमेव मुनीन्द्रोऽपि शारिकासविधे पुरस्तादेव स्वप्रार्थनाम् उदजीघटदिति, अथापि सा अतिशयितस्वकीयार्तिबलादेव जोषमास्ते इति च गम्यते ।

**[भगवान् शरणागतवत्सलः]**

**भूरिव्यामोहशालिनो भगवतस्सकाशे** - अधस्तात् निर्घृणः सः भगवानिति कथितं केवलं स्वकीयनिर्वेदातिशयनिबन्धनम् ; इह भूरितरव्यामोहशाली इति कथनं

भगवतो यथावस्थिताकारकीर्तनं मन्तव्यम् । आश्रितजनव्यामोहेनैव हि निरूपणीयस्स भवति । **'विदितस्स हि धर्मज्ञः शरणागतवत्सलः'** (रामा.सुं.कां.२१-२०) इति रावणम् उपदिशन्ती मैथिली वात्सल्यैकनिरूपणीयं हि तम् अभिदधाति । वत्सलः - व्यामुग्धः इति पर्यायः खलु । **'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'** (भ.गी.७-१७) इति स्वयमेव च गायति । हे शारिके ! स्वयमेव व्यामुग्धस्य तस्य व्यामोहोत्पादनं न ते कृत्यम् ; मदीयस्थितिनिवेदनमात्रं ते कृत्यमिति मया मुहुः कथितम् उपेक्षितं हन्त ! त्वया ।

**[ भगवद्विषयिकेयमार्तिः ]**

**मदीयां व्यथां निवेदयेत्युक्ताऽपि** - त्वदीया व्यथा का नामेति यथा न पृच्छेत् शारिका तथा **पराङ्कुशनायिका 'एहि पश्य शरीराणि'** इतिवत् स्वशरीरं स्वयमेव प्रादर्शयदिव । **'एहि पश्य शरीराणि'** (रामा.आर.कां.६-१६) इत्युक्तवन्तो दण्डकारण्यवासिनो महर्षयो राक्षसैः कृतान् परिभवान् अवोचन् रामचन्द्रसविधे । इह तु भगवतैव समुत्पादितां व्यथां भागवतसकाशे विज्ञापयति इति व्यावृत्तिः अवधेया । महर्षीणां तु शारीरी व्यथा, अत्र मुनिवरस्य तु मानसी व्यथा । अत्र तावदाचार्याणाम् अनर्घा दिव्यसूक्तिः - **'भरतस्य महात्मनो व्याधिरित्युक्ते न खलु चातुर्थिकं तत्'** इति । विवरणम् आवश्यकमत्रेति मनागिव विव्रियते । अरण्याद्राघवं प्रत्यावर्तयितुं सपरिवारं प्रस्थितो भरतः शृङ्गिबेरपुरं प्राप्य तत्र निषादराजेन गुहेन प्रदर्शितानि रामसीताशयनस्थलानि उदीक्ष्य अतिवेलखेदाभिभूतः पपात भूमौ ; तदात्वे कौसल्या **'परिपप्रच्छ भरतं रुदन्ती शोकलालसा । पुत्र! व्याधिर्न ते कच्चिच्छरीरं परिबाधते ।। अद्य राजकुलस्यास्य त्वदधीनं हि जीवितम्'**। (रामा.अयो.कां.८७-८) इत्याद्युक्तप्रकारेण भरतं परिष्वज्य विलपन्ती पुत्र ! व्याधिर्न ते कच्चित् ? इति पर्यपृच्छत् ; एतेन तदा भरतो व्याधिग्रस्तवदालक्ष्यते स्म इति गम्यते । कोऽयं व्याधिरिति विमर्शः कर्तव्यो भवति । चातुर्थिकं नाम व्याधिर्दारुणतरः प्रथते । चतुर्थे चतुर्थेऽह्नि जायमानो ज्वरविशेषः चातुर्थिकपदाभिलप्यः । नित्यज्वरं प्रति न भीतिः, अद्य ज्वरः, पुनस्तृतीयेऽहनि ज्वरः, पुनश्च ततस्तृतीयेऽहनि ज्वरः - इत्येवंरीत्याऽनुवर्तमानं ज्वरं प्रत्यपि न भीतिः । यस्तु ज्वरः चतुर्थे चतुर्थेऽहनि अनुवर्तते स सत्यं प्राणापायभीतिजनकः इति भेषजशास्त्रसरणिः । तथा च चातुर्थिकनाम्ना व्यपदिश्यमानस्य तस्य रोगविशेषस्य अत्यन्तदारुणता सिध्यति ।

(अथवा चरमसंदेश) कहते हैं । प्रकृत गाथा का चौथा पाद बताता है कि यह ऐसा ही संदेश है । उस में यह संदेश दिया जाता है कि तुम अब से अपने पोषण करनेवालों का खोज कर लो । इसका यह तात्पर्य है कि अब नायिका चेल्ली घडी पर पहुंच गयी है । तोते की जाति की ही एक पक्षी शारिका कहलाती है । मालूम पडता है कि श्री परांकुशनायिका एक शारिका का पोषण करती थी । शारिका का व्यंग्यार्थ पिछली गाथा में जो बताया गया, वही है । गाथा के प्रारंभ में ही नायिका उस से पूछती है कि क्या तुम्हारा स्वभाव ही बदल गया ? इस का यह भाव है - लोक में किसी के बहुत रोगग्रस्त हो जाने पर, उन के बांधवों में कोई कोई इधर उधर फिरते हुए रोगपरिहार के उपाय ढूँढते रहते हैं । दूसरे कितने तो रोगी से भी अधिक दु:ख पाते हुए उठने में भी अशक्त होकर खिन्न रहते हैं । यहां पर शारिका शब्द उन शिष्यों का संकेत हैं, जो नायिका की प्रकृत दुरवस्था देखने से स्वयं बहुत दु:खी होकर, इस चिंता में मग्न रहते है कि अब इन्हें मृतसंजीविनी भगवान का मिलाप कैसे होगा । अर्थात् इस चिंता से उन का रंग ही बदल गया है । अब नायिका शारिका से कह रही है कि "मैं तब से तुम से कह रही हूं कि शीघ्र जाकर भगवान से मेरी दशा की विनती क़रो । परंतु तुम ने मेरी बात का ख्याल नहीं किया । अत एव भगवान इधर नहीं पधारे । यदि तुम उन से तभी विनती कर देती, तो वे इतने में इधर अवश्य ही पधारते । विनती न करना तुम्हारा अपराध है" । शास्त्र की मर्यादा है कि भगवान स्वयं परमकारुणिक होते हुए भी, किसी चेतन की रक्षा करने के लिए उस की ओर से संदेश इत्यादि अल्प वस्तु मांगते हैं । अत एव विभीषण ने भी **'निवेदयत मां क्षिप्रम्'** (रामा.यु.कां.१७-१७) (अर्थात्, हे वानरवीर ! सर्वलोकशरण्य महात्मा श्री रामचंद्रजी की संनिधि में विनती कीजिए कि विभीषण आया है) इत्यादि कहते हुए भगवान को संदेश भेजा । यह प्रश्न मत पूछिए कि क्या यह संदेश भेजे विना विभीषण की इच्छा सफल न होती । कुछ भी हो, उन की इच्छा तो सफल होती ही । परंतु प्रत्येक मानव को अपना कर्तव्य करना आवश्यक है । अत: शास्त्रमर्यादा का पालन करने के उद्देश्य से ही विभीषण ने संदेश भेजा । इसी प्रकार आळवार ने भी पहले से ही शारिका से संदेश ले जाने की प्रार्थना कर रखी थी ; परंतु वह शारिका स्वयं भी दु:खी होने के कारण भगवत्संनिधि जाने में अशक्त होकर चुप रह गयी ।

भरतस्य व्याधिरित्युक्ते न तादृशः ; भगवद्विषयकोऽयं व्याधिः परमविलक्षणः स्पृहणीयश्च इत्याचार्यगोष्ठीषु प्रथा । श्रीशठकोपमुनीन्द्रेण अत्र स्वयं कथ्यमानो व्याधिरपि तथाविध एव, न तु लौकिकानामिव इत्युक्तं भवति । उपरि चतुर्थशतके षष्ठं दशकं कृत्स्नं मुनीन्द्रस्य व्याधिविशेषप्रतिपादकम् आगमिष्यति, तत्र विशेषतो द्रष्टव्यम् ।

**[स्वजीवितनिराशाकथनम्]**

**अहं तावत्प्रनष्टसौन्दर्यलावण्या समभूवम्** इत्यनेन सर्वथा स्वस्य मुमूर्षूदशापत्तिः व्यञ्जिता भवति । अथ शारिका प्राह- 'तर्हि संप्रति सत्वरं गत्वा भगवत्सविधे निवेदयेयम्' इति । तत्रोच्यते **इतःपरम्** इत्यादि । माभून्नाम गते जले सेतुबन्धोद्यमः ; अहमद्यैव निर्याणोन्मुखी भवामि ; एतावता कालेन मद्रक्षणे स्थिता त्वमितःपरं रक्षकान्तरान्वेषणे प्रवर्तस्व - इति कथनेन स्वस्य जीवितप्रत्याशादारिद्र्यमवगमितं भवति । अत्रेदम् ऐतिह्यम् अनुगृह्णन्ति आचार्याः - भगवद्रामानुजार्यमातुलपादाः श्रीरामायणोपदेशकाश्च श्रीशैलपूर्णगुरुवराः स्वचरमसमये स्वाराध्यदेवतायाः पुरतो यवनिकाम् उद्वास्य 'इतः परं त्वञ्चञ्चूपुटे भोग्यं भोज्यं ये विन्यस्येयुः तान् त्वमेवान्विष्य संपादयतात्' इत्यर्थकम् अस्याः गाथायाः चरमचरणम् अनुसंदधिरे - इति । अत्रेदम् अवगन्तव्यम् ; अस्मदीयाः पूर्वाचार्याः कण्ठस्थदिव्यप्रबन्धाः तदा तदा स्वस्वविवक्षितार्थान् दिव्यप्रबन्धगाथानुसन्धानमुखतः एव प्रकाशयन्तः आसन्निति । एवंविधानि एतिह्यानि दिव्यप्रबन्धव्याख्यास्विव गुरुपरम्पराप्रभावादिग्रन्थेष्वपि भूरिशः उपलभ्यन्ते ।।

**[प्रतिपदार्थ]**

**हिन्दी - हे बालशारिके ! मेरे ऐसे कहने पर भी कि 'अत्यधिक व्यामोहवाले भगवान के पास, मेरी दूती के रूप में जाकर, उन से मेरे दुःख की विनती करो', तुम यह बात न मान कर चुप रह गयी । क्या तुम्हारा स्वभाव ही बदल गया ? मैं तो अपना सौंदर्य व लावण्य खो बैठी हूं । अतः अब से तुम अपनी चोंच में अच्छा आहार देनेवालों को ढूंढ निकाल लो ।**

**[आर्तों का कर्तव्य]**

यह गाथा आळ्वार का अंतिमसंदेश जैसै है । लोक में सभी लोग अपने अपने मरने के समय अपने बंधु आदियों को कोई कोई संदेश देते हैं, जिसे अंतिमसंदेश

**[भगवान शरणागतवत्सल हैं]**

**अत्यधिक व्यामोहवाले भगवान के पास** इत्यादि - आळ्वार ने पहले अपने सीमातीत दुःख के कारण ही भगवान को निर्दय कहा ; यहाँ तो वे उन को अधिक व्यामोहवाले कहते हुए उन के वास्तविक स्वरूप का वर्णन कर रहे हैं । अर्थात् भगवान का स्वरूप ही व्यामोह (अथवा भक्तों पर असीम प्रेम) है । अत एव रावण को मधुर उपदेश देती हुई सीताजी ने बीच में **'विदितस्स हि धर्मज्ञश्शरणागतवत्सलः'** (रामा.सुं.कां.२१-२०) कहती हुई वात्सल्य को ही भगवान की असाधारणस्वरूप बतलाया । वात्सल्य और व्यामोह समानार्थक शब्द हैं । खुद श्रीमुख का भी यह गीत है - **'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'** । (भ.गी.७-१७) (ज्ञानी के लिए मैं अत्यंत प्रिय हूं, और मेरे लिए वह अत्यंत प्रिय होता है ।) तथा च, हे शारिके ! स्वयं व्यामोहशील भगवान में व्यामोह पैदा करने की कोई आवश्यकता नहीं है; मेरी दयनीय दशा की विनती करना मात्र तुम्हारा कर्तव्य होगा । परं तु हाय ! मुझ से वारंवार प्रेरित होने पर भी तुम ने उपेक्षा कर दी ।

**[आर्ति भगवान से उत्पादित है]**

**उन से मेरे दुःख की विनती करो** - मालूम पडता है कि आळ्वार ने अपने शरीर की ओर इशारा करते हुए शारिका को अपना दुःख बताया, जिस से उस को यह प्रश्न करने की आवश्यकता न हुई कि "तुम्हारा कौन सा दुःख है"? यथा दंडकाकरण्यनिवासी ऋषियों ने अपने शरीर दिखाते हुए श्रीरामचंद्रजी से कहा **'एहि पश्य शरीराणि'** (रामा.आर.कां.६-१६) इत्यादि (हम ऋषियों के राक्षसभक्षित शरीर देखिए) । परंतु दोनों में इतना अंतर अवश्य है कि ऋषियों ने भगवान से राक्षसों द्वारा समुत्पादित दुःखों की विनती की ; श्री परांकुशनायिका तो (शारिकाशब्दवाच्य) भगवद्भक्त से साक्षात् भगवान के द्वारा ही समुत्पादित अपने दुःख की विनती कर रही है । एवं ऋषियों का दुःख शारीरिक था ; आळ्वार का दुःख तो मानसिक है । इस प्रकरण में आचार्यों का यह एक अनमोल दिव्य वचन है कि "भरत का व्याधि कहेंगे तो वह चातुर्थिक न होगा" । इसका यह तात्पर्य है - अरण्य से श्रीरामचंद्रजी को अयोध्या लौटाने के उद्देश्य से भरतजी बडे परिवार के साथ निकल कर रास्ते में शृंगिबेरपुर पहुंचे । उधर गुहदेव ने उन्हें श्रीरामसीता के शयन इत्यादि कतिपय स्थल

बताये । वह देखते ही भरतजी का दु:ख बहुत बढ गया और वे मूर्छित होकर भूमि पर गिर गये । यह देखकर कौसल्याजी उधर आ गयीं और भरतजी को अपनी गोद में लिटाकर आश्वासन करती हुई उन्होंने पूछा कि **'पुत्र व्याधिर्न ते कच्चित् शरीरं परिबाधते ?'** (रामा.अयो.कां.८७-९) (अर्थात् हे पुत्र ! क्या कोई भी व्याधि तुम्हें दु:ख दे रही है ?) इस से .यह स्पष्ट होता है कि उस समय भरतजी व्याधिग्रस्त जैसे दिखते थे । अब विचार यह है कि उस समय भरतजी की व्याधि कौन सी थी ? इस के प्रत्युत्तर में पूर्वोक्त आचार्यश्रीसूक्ति है कि भरतजी की व्याधि चातुर्थिक न होगी । चातुर्थिक माने प्रत्येक चौथे दिन आनेवाला एक प्रकार का ज्वर है । ज्वर के अनेक प्रकार होते हैं - प्रतिदिन आनेवाला, प्रत्येक तीसरे दिन पर आनेवाल, चौथे दिन आनेवाला इत्यादि । वैद्य कहते हैं कि यह चातुर्थिक सबसे आपत्कारक है । अब आचार्यों का यह कहना है कि भरतजी की व्याधि उक्त चातुर्थिक नहीं थी, जिस को मिटाने के लिए दवा लेनी पडती हो ; अपि तु श्रीरामविरह नामक मानस रोग था, जो भक्तों के लिए प्रार्थनीय भी होता है । एवं समझना चाहिए कि परांकुशनायिका का वर्तमान दु:ख भी संसारी मानवों के रोगादिजनित किसी दु:ख के सदृश कोई वस्तु नहीं ; परंतु भगवद्विरहप्रयुक्त दु:ख ही है । आगे चौथे शतक में समग्र छठे दशक में आळवार की इसी व्याधि का वर्णन किया जानेवाला है । वहां पर इसकी विशेषताएं बतायी जाएँगी ।

### [अपनी अंतिमदशा का वर्णन]

**मैं तो अपना सौंदर्य व लावण्य खो बैठी हूं** कहने का यह भाव है कि अब मैं मरने को तैयार हूं । यह सुनकर शारिका ने कहा, "तो मैं भगवान के पास जाकर उन को तुम्हारा संदेश पहुँचा दूंगी"। इस का प्रत्युत्तर है - अतः **तुम अब से इत्यादि** । "समय निकल जाने से अब तुम्हारा संदेश व्यर्थ होगा । अतः वह चिंता छोड दो । मैं ते अभी शरीर छोडनेवाली हूं । अभी तक तुम मेरी रक्षा में रहे । अब से तुम अपनी रक्षा करने में समर्थ दूसरी किसी व्यक्ति को ढूंढ लो" । इस से नायिका सर्वथा अपने जीवित रहने की आशा का अभाव बताती है । इस प्रकरण में हमारे पूर्वाचार्य एक ऐतिह्य बतलाते हैं - भगवान श्री रामानुजस्वामीजी के मामाजी, एवं उन्हें श्री रामायणार्थों का उपदेश देनेवाले श्रीशैलपूर्णस्वामीजी की जब परमपद पधारने की

दशा आ गयी, तब उन्हों ने अपने आराध्य देव के मंदिर के कपाट खोलकर( अथवा परदा हटवाकर) उस भगवान से प्रकृत गाथा के उत्तरार्ध की विनती की, जिस का मुख्य भाग यह चौथा पाद है - **(अब से तुम अपनी चोंच में अच्छा आहार देनेवालों को ढूंढ निकाल लो)** उन का यह भाव था - "अभी तक मैंने आप की ठीक सेवा की ; भोग धराया और दूसरे सब कुछ किये । परंतु अब मैं दुर्बल होकर परमपद जाने को तैयार हूं । अतः आप अपनी सेवा करनेवाले दूसरे किसी को स्वयं खोज लीजिए" । हमारे पूर्वाचार्यों ने अर्थ के साथ दिव्यप्रबंधों के मूलपाठ को भी कंठस्थ कर रखा था । अतः तदा तदा वार्तालाप के समय वे अपने अभिप्रायों को उचित दिव्यप्रबंध गाथाखंडों से ही प्रकाशित करते थे । ऐसे अनेक ऐतिह्य दिव्यप्रबंध व्याख्यानों में एवं गुरुपरंपराप्रभाव इत्यादि दूसरे अनेक ग्रंथों में भी उपवर्णित मिलते हैं ।।

**नाडाद मलर् नाडि नाडोरुम् नारणन् तन्**
**वाडाद मलरडिक्कीळ् वैक्कवे वहुक्किन्रु**
**वीडाडि वीत्तिरुत्तल् विनैयत्त देन् शेय्वदो**
**ऊडाडु पनिवाडाय् उरैत्तीरा येनदुडले ।। ९ ।।**

**(गाथा) - मध्ये सञ्चरसि त्वमद्य सहसा गत्वाऽद्य भो मारुत**
**श्रीशं तं वद किञ्चिदेव वचनं नारायणं मे प्रभुम् ।**
**तत्पादाब्जयुगे प्रसूनरचने भाग्यं न मे पाप्मतो**
**विश्लेषेऽत्र विषण्णताऽस्ति हि ततस्त्वं मे वपुर्नाशय ।। ९ ।।**

[प्रतिपदार्थः]

**विवरणम् - इतस्ततः पवमान हे शिशिरपवन ! दुर्लभानि प्रसूनानि आर्जयित्वा भगवतो नारायणस्य नित्यविकस्वरपुष्पसदृक्षचरणान्तिके अनुदिनं तानि समर्पयितुमेव हि सृष्टोऽयं जनः । एवं सत्यपि विश्लेषमूर्धाभिषिक्ततारूपं मदीयं दौर्भाग्यं सर्वथा शोचनीयं हि हन्त !। (हे मारुत !) त्वं भगवत्सकाशे दूतकृत्यमाकलय्य अथ तत्कृपाया अलाभे सति कामं बाधस्व मम गात्रम् ।**

**[सकलप्राकृतपदार्थगतबाधकत्वकथनम्]**

शिशिरः पवनो विरहिजनानाम् अत्यन्तबाधकः इति पुनरुक्तमेतत् । तथा नाम कश्चन वातपोतो मुनीन्द्रं भृशं बाधितुम् उपाक्रंस्त । **'भीषाऽस्माद्वातः पवते'** (तै.उ.आन.८-१) इत्युपनिषदाम्नातरीत्या सर्वथा भगवदधीनप्रवृत्तिनिवृत्तिकोऽयं वातः सत्यं तन्नियोगादेव मां बाधते इति मेने ; मत्वा कथयति तमेव वातमुद्दिश्य - भोभोः! मदीयं किमपीदं विज्ञापनं त्वन्नियोजकभगवत्सविधे निवेदय ; ततोऽपि सः उपेक्षेत चेत् अथ सरभसम् अत्रागत्य मां प्राणैः वियोजय - इति । भोग्यभोगोपकरणभोगस्थानसमृद्धायाम् अस्यां लीलाविभूत्यां प्राकृतानां धिया यानि यानि वस्तूनि भोग्यानि भवन्ति, तान्येव मुनिवरस्य अस्य धिया घातकत्वेन गृह्यन्ते ; तदवलोकनमात्रेण दुर्वचां बाधाम् अनुभवति हन्त ! गीतं च भगवता - **'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।'** (भ.गी.२-६९) इति। **'वासुदेवस्सर्वम्'** (भ.गी.७-१९) इति तिष्ठतां भगवदेकभोगानां महात्मनां प्राकृतजनभोग्यवस्तुजातदर्शनमात्रमपि अरुन्तुदमिति तदर्थः । भगवान् रामचन्द्रोऽपि पम्पासरस्तीरे भृशं परितप्यमानः **'एष पुष्पवहो वायुस्सुखस्पर्शो हिमावहः । तां विचिन्तयतः कान्तां पावकप्रतिमो मम ।।'** (रामा.कि.कां.१-५३) इत्यादिकं बहुलम् आचचक्षे । तत्र वायुसंधुक्षितविरहसंतापकथनमात्रम् उद्दिष्टं स्यात् । अत्र तु वायूपलक्षितसकलप्राकृतपदार्थगतं बाधकत्वम् अभिप्रेतम् ।

**[अर्चने करणकळेबरादिप्रयोगः शास्त्रविहितः]**

शास्त्रेषु सामान्यतः कथितमस्ति **'विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता'** ।। (वि.त) इति । एतादृशानि सन्ति नाम भूरितराणि वचनानि । तानि सर्वाण्यपि सूरिवरोऽयं हृदि कलयन् वचनानां तेषां स्वात्ममात्रोद्देश्यकतां चाभिप्रयन् प्रथमद्वितीयपादौ निबध्नाति । **दुर्लभानि प्रसूनान्यार्जयित्वा** इत्यादिकं भगवत्सविधे विजिज्ञापयिषितं संदेशवाक्यम् । स्वेनैव प्रवर्तितेषु शास्त्रेषु करणकलेबरादीनां विनियोगप्रकारं स्वयमेव संदर्श्य, तथा नाम विनियोक्तुम् उत्सुकस्य जनस्य साक्षात्कारगोचरो न भवन् दवीयान् यदि भवति सः, तर्हि शास्त्रप्रवर्तनस्य किं प्रयोजनमिति प्रष्टुम् इच्छति मुनिवरः ।

**[वायुशब्देन विद्वदग्रणीः विवक्षितः]**

बाधकं मारुतमेव उद्दिश्य एवंविधसंदेशप्रापणं प्रार्थ्यते । वायुर्हि रूपरहितः प्रथितः ; सः कथं प्रार्थनम् अर्हतीति शंका जायेत ; अत्रैवं प्रतिपत्तव्यम् । वायुस्तावत्

हनूमतो जनकः; स हनुमांस्तावत् **'नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ।। नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्'**।। (रामा.कि.कां.३-२८,२९) इत्यादिकम् ऊचुषा भगवता रामचन्द्रेण भृशम् अभिनन्दितवैदुष्यविभवः तस्य विद्यानिधेः जनको वायुस्तदपेक्षया समुत्तुङ्गवैदुष्यो भवितुमर्हति । एवं च तथाविधः कोऽपि विद्वदग्रणीरिह दूतत्वेन विवक्षितः इति । एष कथं हिंसको भवितुम् अर्हतीति पृच्छा मा भूत् । वायुत्वेनाकारेण केवलेन हिंसकत्वोक्तिः उपपद्यते। सूक्ष्मेक्षिकया गृह्यमाणं उपपादितं चार्थमनुरुध्य दूतभावः उपपद्यते इति ।

**[अहिंसाद्यष्टविधपुष्पार्जनमुद्दिष्टम्]**

**दुर्लभानि प्रसूनान्यार्जयित्वा** इत्यत्र **'अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः। सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ।। ध्यानं पुष्पं तपः पुष्पं ज्ञानं पुष्पं तथैव च । सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत्'** । इत्यादिप्रमाणप्रपञ्चितानि पुष्पाण्यपि ग्रहीतुं योग्यानि । प्राधान्येन भगवदाराधनौपयिकानि पुष्पाणि एतान्येव । दुर्लभत्वोक्तिश्चैतेषु सुसंगता । आराधनं नाम भगवदन्तरङ्गसन्तोषजनको व्यापारविशेषः । **'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्थाः नान्यस्तत्तोषकारकः ।।'** इत्युक्तरीत्या आत्मगुणसम्पादनेनैव भगवतः प्रीतिः उत्पादयितुं शक्या । अतश्च अहिंसाद्यष्टविधपुष्पार्जनं चात्र विवक्षितुम् उचितम् । एतेषां पुष्पाणां भगवच्चरणान्तिके समर्पणं नाम एतैः भगवदन्तःकरणविकासनमेव ।।

**[किञ्चित्कारस्वीकरणमेव शेषित्वम्]**

**'नाकिञ्चित्कुर्वतः शेषत्वम्'; 'अकिञ्चित्करस्य शेषत्वानुपपत्तिः'** इत्याद्युक्तरीत्या किञ्चित्करणेन यथा मम शेषत्वस्वरूपसिद्धिः, तथा किञ्चित्कारस्वीकरणे सत्येव हि तस्य शेषित्वस्वरूपं सिध्येत् ; तदर्थं मत्सविधे तस्योपसर्पणम् अवर्जनीयम् ; यदस्ति मम विश्लेषव्यसने मूर्धाभिषिक्तत्वं तदिदं सर्वथा नोचितम् इति तत्सविधे कथय । तदिदं मर्मस्पर्शि वचनं निशम्य सत्वरम् उपेयात् सः इह । यदि ततोऽप्युपेक्षेत, अथ तर्हि त्वदीयं कृत्यं हिंसनात्मकम् अवश्यमेव कुरु । हिंसनमिति किम् ? मां प्राणैरेव वियोजय - इति कथयति । मम प्राणास्तदनु स्वत एव निष्क्रामेयुः ; तदभिप्रायवेदनपर्यन्तमेव प्राणानाम् अवस्थितिः ; अथ मम निर्याणम् अप्रतिहतसिद्धिकमित्युक्तं भवति ।।

**[प्रतिपदार्थ]**

**हिन्दी - इधर उधर चलनेवाले हे शीतल पवन ! दुर्लभ पुष्प चुनकर उन के, भगवान श्रीमन्नारायण के नित्य खिले हुए पुष्प के सदृश श्रीपादों की संनिधि में, समर्पण करने के लिए ही इस जन का जन्म हुआ है । ऐसा होने पर भी, हाय ! विश्लेष में ही डूबी रहने वाली मेरा यह दौर्भाग्य सर्वथा शोचनीय है । (हे पवन !) तुम भगवान से मेरा संदेश कह कर, फिर भी यदि उनकी कृपा न मिले, तो मेरे इस शरीर को खूब दुःख दो ।।**

**[पवनशब्द से सकलप्राकृतपदार्थ विवक्षित हैं]**

शीतल पवन विरहियों को बहुत दुःख देता है । प्रकृत में ऐसा एक पवन श्रीपरांकुशनायिका को बहुत दुःख देने लगा । उस ने सोचा कि **'भीषाऽस्माद्वातः पवते'** (तै.उ.आन्.८-१) (भगवान से डरके पवन चलता है।) इत्याद्युपनिषद के अनुसार, भगवदधीनप्रवृत्तिवाला यह पवन, सत्य ही उन की आज्ञा से मुझे त्रास दे रहा है । अतः उसी पवन को देखकर अब वह कहती है - **हे पवन ! तुम अपने प्रभु भगवान से मेरी यह एक विनती सुना दो ; और यदि उस के बाद भी वे मेरी उपेक्षा ही कर डालें, तो तुम शीघ्र लौट कर मेरा शरीर छुडा दो।** भोग्य, भोगोपकरण व भोगस्थान रूप त्रिविध वस्तुओं से भरे हुए इस संसार मंडल में संसारी लोग जिन को परमभोग्य मान बैठे हैं, उन्हीं वस्तुओं को आळ्वार क्रूर और हिंसापूर्ण मानते हैं ; और उन के दर्शनमात्र से दुस्सह बाधा पाते हैं । यथा गीता में भगवान ने गाया **'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः'** ।। (भ.गी. २-६९) इस का यह तात्पर्य है कि **'वासुदेवस्सर्वम्'** (भ.गी.७-१९) इत्याद्युक्त प्रकार भगवान को ही अपने सर्वस्व माननेवाले महात्माओं को सांसारिकजनों के भोग्य विषयांतर के दर्शन भी बहुत दुःखद हैं । भगवान श्रीरामचंद्र ने भी पंपासर के तट पर विराज कर विरहदुःख से **'एष पुष्पवहो वायुः सुखस्पर्शो हिमावहः । तां विचिन्तयतः कान्तां पावकप्रतिमो मम'** ।। (रामा.कि.कां.१-५३) इत्यादि प्रलाप किया । (पुष्पों की सुगंध से भरित, हिमशीतल यह पवन भी सीताविरहित मुझे आग जैसा गरम लगता है ।) अब परांकुशनायिका कहती है कि पवन मात्र नहीं, वरन् सभी प्राकृत पदार्थ मुझे संताप दे रहे हैं ।

**[सेवा में मानवशरीर का प्रयोग शास्त्रविहित है]**

शास्त्रों में मानवशरीर का उपयोग बतानेवाले ऐसे अनेक वचन मिलते हैं - **'विचित्रा देहसंपत्तिः ईश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तापादादिसंयुता।।'** (वि.त.) (हाथ, पग इत्यादि उपयोगी अनेक अवयववाला यह विचित्रमानवशरीररूप ऐश्वर्य भगवान को अर्पण करने के लिए मिला है।) अब आळ्वार ऐसे समस्त वचनों को अपने लिए ही अवतीर्ण मानते हुए प्रकृत गाथा का पूर्वार्ध गा रहे हैं **दुर्लभ पुष्प चुनकर** इत्यादि । यह भी भगवान के पास भेजे जानेवाले संदेश का एक अंश है । अर्थात् आळ्वार भगवान से पूछना चाहते हैं कि "प्रभो! आप ने ही शास्त्रों में भगवत्सेवा में ही इस मानवशरीर का उपयोग करने की आज्ञा दी है ; अब आप ही ऐसा करने के इच्छुक जन को अपने दर्शन न देते हुए, उस से दूर रहकर, उस को सेवा करने का अवकाश ही न दे रहे हैं । फिर आप के शास्त्रप्रदान का प्रयोजन ही क्या हुआ"? बाधा करनेवाली वायु से ही यह संदेश ले जाने की प्रार्थना की जा रही है । 'रूपरहित वायु से यह प्रार्थना कैसे की जा रही है ? इस आशंका का यह प्रत्युत्तर है - पवन तो कोई अचेतन वस्तु नहीं, किंतु एक प्रतापवान देव है ; साक्षात् हनुमान जी का पिता है । हनुमान जी का पांडित्य विश्वविदित है, जिस की प्रशंसा स्वयं श्रीरामचंद्रजी ने भी की है - 'यह हनुमान सत्य ही चारों वेदों तथा व्याकरणादि समस्त शास्त्रों का वेत्ता हैं' इत्यादि से । फिर ऐसे श्रेष्ठ विद्वान् हनुमान जी के पिता वायुदेव क्योंकर विद्वान न होंगे । कहने का यह भाव है कि वायु शब्द से ऐसा कोई विलक्षण विद्वान सूचित किया जाता है और वही इस गाथा में संदेशवाहक है । इस पर यह प्रश्न नहीं पूछना चाहिए कि ऐसा विद्वान कैसे नायिका को दु:ख दे सकेगा । क्योंकि एक ही व्यक्ति ऊपर से दिखनेवाले वायु के रूप में हिंसक बताया जाता है, और व्यंग्य मर्यादा से विद्वान के रूप से संदेशवाहक बताया जाता है ।

**[अहिंसा आदि आठ प्रकार के पुष्प उद्दिष्ट हैं]**

**दुर्लभ पुष्प चुनकर** इत्यादि । दुर्लभ शब्द से **अहिंसा प्रथमं पुष्पम्** इत्यादि शास्त्रोक्त, अहिंसा, इंद्रियजय, सर्वभूतदया, क्षमा, ध्यान, तपस्या, ज्ञान और सत्यनामक भगवान के अत्यंतप्रिय आठ पुष्प सूचित किये जाते हैं । भगवत्पूजा में उपयोग करने

योग्य पुष्प ये ही हैं । क्योंकि पूजा शब्द का अर्थ भगवान को प्रसन्न करनेवाला काम है ; **'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्थाः नान्यस्तत्तोषकारकः'** ।। (अपने वर्णाश्रमों के उचित आचारवाला मानव ही परमपुरुष भगवान की ठीक सेवा करता है ; उन को प्रसन्न करने का दूसरा कोई साधन नहीं है। ) इत्यादि शास्त्र बताता है कि आत्मगुणों का उपार्जन ही भगवान की वास्तविक सेवा है । अतः आळ्वार इन्हीं पुष्पों का उपार्जन कर, उन से भगवान का मन प्रसन्न कराने की बात कर रहे हैं । हमें अपने भगवच्छेषत्व को सिद्ध करने के लिए कुछ न कुछ भगवान की सेवा करनी ही चाहिए ; क्यों कि शास्त्र का यह नियम है कि सेवा किये विना शेषत्व सिद्ध न होगा । सेवा करने के लिए मुझे उनके पास जाना अनिवार्य है । अतः मुझे इस प्रकार अथाह विरह दुःख सागर में मग्र रखना सर्वथा अनुचित है । अतः हे पवन! भगवत्संनिधि में इस अर्थ की विनती करो। यह मर्मस्पर्शी वचन सुनने पर वे भगवान अवश्य ही इधर पधारेंगे । परंतु यदि वे यह सुनकर भी नहीं पधारेंगे, किंतु मेरी उपेक्षा ही करेंगे, तो तुम अवश्य ही अपना काम कर सकते हो ; अर्थात् मुझे हिंसा पहुंचा सकते हो । अथवा हिंसा ही क्यों ? मेरे प्राण ही निकाल दो । अथवा तुम्हें हिंसा करने की आवश्यकता ही न रहेगी ; क्योंकि उन का अभिप्राय जानने तक ही मैं जीवित रह सकूंगी ; बाद में तो मेरे प्राण अपने आप ही उड जायेंगे ।।

**उडलाळि प्पिरप्पु वीडु उयिर् मुदला मुत्तुमाय्**
**कडलाळि नीर् तोत्ति अदनुळ्ळे कण्वळरुम्**
**अडलाळि यम्मानै कण्डक्का लिदुशोल्लि**
**विडलाळि मडनेञ्जे विनैयो मोन्रामळवे ।। १० ।।**

**(गाथा) - भो भो ! मानस ! मे गभीर ! बहुधा संसारचक्रस्य वै**
**मोक्षस्यात्मगणस्य भोग्यकरणावळ्याश्च निर्वाहकम् ।**
**तं क्षीरार्णवशायिनं यदि हरिं पश्येस्स्वयं चक्रिणं**
**त्वं ब्रूह्यद्य दशां मम प्रियसमागत्यै च मां मा त्यज ।। १० ।।**

**[प्रतिपदार्थः]**

**विवरणम् - अयि गभीरहृदय ! चक्रवत्परिवर्तमानां संसृतिं तद्विमोक्षं च स्वाधीनतया निर्वहन्तं आर्तजनाभिरक्षणार्थं क्षीरार्णवे सन्निहितं तत्र शयानं आश्रितविरोधिनिरसनशीलहेतिराजधरं च प्रभुं वीक्ष्य तदिदं कथय । मा स्म परित्यजः; कियदवधीति चेत् ; पापिनोऽस्य जनस्य समीहितसिद्ध्यवधि ।।**

**[मनसो दौत्यम्]**

गाथायाः अस्याः द्वेधा निर्वाहम् अभिप्रयन्ति आचार्याः । दौत्यप्रकरणानुगुणतया मनसो दूतत्वेनापेक्षणमिह क्रियते इत्येको निर्वाहः । अधस्तनगाथायां कैङ्कर्यप्रस्तावसंभवेन कैङ्कर्यकरणार्थं ससंभ्रमं निष्क्रमितुम् उद्युक्तं हृदयं प्रति समीहितसिद्धौ पाक्षिकनिष्कर्षलाभावधि मां मा स्म परित्यजः इत्युक्त्वा तन्निरोधः क्रियते इति अपरो निर्वाहः । षट्सहस्रिकाव्याख्यातारस्तु निर्वाहद्वयमपि एकस्मिन्नेव निर्वाहेऽन्तर्भावयन्ति - संदेशश्च तत्र प्रापणीयः, अहमपि तव अवर्जनीयः इति । नात्र विशेषतो भेदः । मनसो दौत्यं नाम किमिति विचारो भवेन्नाम ; कविसमयसिद्धमेवं व्याहरणमित्येव वक्तव्यं भवति । **'नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः । तत्तु तत्रैव रमते हताः पाणिनिना वयम्'** ।। इति संस्कृतकवीनां चाटूक्तिः । असावेव च शठकोपसूरिः प्रथमप्रबन्धे तिरुविरुत्ते भगवन्तं प्रति मनसो दौत्यम्, तथा प्रहितं मनः प्रति पक्षिणां दौत्यं च निबध्नाति । अनुभवेषु अयमन्यतमः विलक्षणः प्रकारः इति ग्राह्यम् ।।

**[दूताय उद्दिष्टस्य स्थलस्य निर्देशनम्]**

दशकेऽस्मिन् गाथाद्वयं जीवनाडीभूतम् ; भगवतः क्षमागुणप्रकाशनस्य इह प्रधानप्रमेयत्वात् तत्प्रकाशनक्षमा सप्तमी गाथा एका । दूतप्रेषणार्थम् उद्दिष्टस्य स्थलस्य प्रकाशनमपि उद्देश्यम् इत्यतः तत्प्रकाशिका सैषा गाथाऽपि जीवनाडी । **रक्षणार्थं क्षीरार्णवे सन्निहितं तत्र शयानं आश्रितविरोधिनिरसनशीलहेतिराजधरं प्रभुं वीक्ष्य तदिदं कथय -** आर्तानाम् आर्तध्वनिनिशमनार्थमेव प्रकृतिमण्डलान्तर्गते क्षीरार्णवे सन्निहितो भगवान् आर्तनादेष्वेव दत्तावधानो विराजते **'क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय'** (मुकुं.मा.४०) इत्युक्तरीत्या तत्र तस्य परमभोग्यं शयनं च प्रेक्षणार्हम् । अस्मासु विरोधिबाहुल्ये सत्यपि सद्यः तन्निबर्हणौपयिकसाधनविशेषसम्पन्नश्च ।

तस्य सविधे तदिदं कथय । तदिदमित्यनेन विवक्षितं दशकेऽस्मिन् प्रकटितं संदेशसर्वस्वमपि भवितुमर्हति । यद्वा अधस्तनगाथागतसंदेशमात्रं वा । मदीयाम् आर्तिं कथयेति सामान्योक्तिरपि घटते । चतुर्थचरणोपक्रमे मा स्म परित्यजः इति क्रियापदमस्ति ; अपरित्यागः स्वस्य वा तस्य वा भवतु । मां मा त्यज, तं मा त्यजेति द्वेधाऽप्यर्थः शोभनः । **विनैयोम् ओन्नामळवे** इति तावद्गाथाया अन्तिमं वाक्यम् । पापिनोऽस्य जनस्य तेन भगवता सह संश्लेषप्राप्तिपर्यन्तम् ; प्रकृतोद्देशस्य सिद्ध्यसिद्ध्योः अन्यतरनिष्कर्षपर्यन्तम् इति द्वेधाऽर्थः ।

### [मोक्षप्रापणं भगवदायत्तम्]

**चक्रवत्परिवर्तमानां संसृतिमित्यादि - 'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काऽप्युजायते'** ।। (अहि.सं.१४-२८) इत्याद्युक्तप्रकारेण संसृतिचक्रे परिभ्रामणम्, तत उद्धृत्य मोक्षप्रापणं च भगवदायत्तमिति प्रथमपादेऽभिधीयते । एतदुक्तं भट्टपादैः श्रीरङ्गराजस्तवोत्तरशतके - **'पटुनैकवराटिकेव क्लृप्ता स्थलयोः काकणिकासुवर्णकोट्योः । भवमोक्षणयोस्त्वयैव जन्तुः क्रियते रङ्गनिधे'** ।। (१०) इति ।।

### [प्रतिपदार्थ]

**हिन्दी - हे मेरे गंभीर मन ! चक्रवत् परिवर्तमान संसार और उस से मुक्ति, इन दोनों को अपनी इच्छा के अनुसार चलानेवाले, दुःखियों का दुःख दूर करने के लिए सन्निहित क्षीरसागर में पधारकर वहां शयन करनेवाले, और आश्रित जनों के विरोधियों के खण्डन में समर्थ चक्रराज के धारण करनेवाले प्रभु के दर्शन कर उन से यह संदेश कहो ; मुझ पापी की इष्टसिद्धि होने तक परित्याग मत करो ।।**

### [मन को दूत बनाना]

पूर्वाचार्य दो प्रकारों से इस पद्य का तात्पर्य बताते हैं । एक भाव यह है कि दूतप्रेषण प्रकरण के अनुसार यहां नायिका अपने मन को ही दूत बनाकर भेजती है । दूसरा भाव यह है कि पूर्वगाथा में कैंकर्य का प्रस्ताव सुनते ही नायिका के मन ने कैंकर्य करने के उद्देश्य से उस को छोड कर भगवान के पास जाना चाहा ; यह

देखकर आळ्वार यह कहते हुए उसे रोक देते हैं कि अपनी इष्ट सिद्धि के बारे में जब तक मैं भगवान की ओर से कोई निश्चित उत्तर नहीं पाऊंगी, तब तक तुम मुझे छोडकर मत जाओ । षट्सहस्री व्याख्याकार तो दोनों योजनाओं को मिलाकर एक ही वाक्यार्थ बना देते हैं कि उधर संदेश पहुंचा दो ; परंतु मुझे भी मत छोडो । मन को दूत बनाने के विषय में शंका होगी कि यह काम कैसे बन सकेगा । इस का सारभूत समाधान इतना ही है कि यह कवियों का एक विलक्षण अनुभव प्रकार है । संस्कृतसाहित्य में भी यह प्रक्रिया पायी जाती है । आळ्वार ने भी तिरुविरुत्त नामक अपने पहले प्रबंध में भगवान के पास दूतके रूप में अपना मन भेजने की, उस मन के उधर ही रह जाने की, और फिर उस अपने मन के पास दूत के रूप में पक्षियों को भेजने की बात करते हैं । समझना चाहिए कि नानाविध भगवदनुभवों के बीच में यह भी एक विलक्षण प्रकार का अनुभव है ।

**[दूत के लिए गंतव्य स्थान का निर्देश]**

प्रकृत दशक की जीवनाडी की तरह दो गाथाएं मुख्य होती हैं । यह अर्थ बताया गया कि इस दशक का मुख्य उद्देश्य भगवान के क्षमा नामक गुण का प्रकाशन है । अत: उस गुण का प्रकाशन करनेवाली सातवीं गाथा एक मुख्य गाथा है । दूत भेजने के स्थल को प्रकाशित करनेवाली प्रकृत (दसवीं) गाथा दूसरी मुख्य गाथा है । **दु:खियों का दु:ख दूर करने के लिए सन्निहित क्षीरसागर में शयन करनेवाले** इत्यादि । भगवान दिव्य धाम से इस लिए क्षीरसागर पधार कर वहां शयन कर रहे हैं कि यहां पर आर्त भक्तलोग उन के पास आकर उन से अपने दु:ख की विनती कर सकते हैं । शयन करने का यह प्रयोजन है कि **'क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने'** (मुकुं.माला.४०) इत्याद्युक्त प्रकार उस मनोहर शयन के दर्शन कर भक्तलोग धन्य बनते हैं । **चक्रराज का धारण करने वाले** कहने का यह तात्पर्य है कि यद्यपि हमारे विरोधी बहुत प्रबल हैं, तथापि भगवान के पास उन सब का विनाश करने के लिए पर्याप्त सामग्रियां भी प्रस्तुत हैं । **उनसे यह संदेश कहो** - संदेश शब्द का अर्थ, प्रकृत दशक में आदि से उपवर्णित सभी संदेश हो सकते हैं, अथवा पिछली गाथा में प्रकाशित संदेश मात्र हो सकता है ; अथवा साधारण रूप से नायिका के दु:ख की विनती हो सकती है । चौथे पाद के आदि में **परित्याग मत**

**करो** कहने का अर्थ है मेरा त्याग मत करो, उन का भी त्याग मत करो । मूल गाथा के अंतिम शब्द हैं **विनैयोम् ओन्नामळवे** - इन का यह तात्पर्य है कि 'मुझ पापी के उन से संश्लेष होने तक' अथवा 'प्रकृत मेरी इच्छा पूर्ण होने के विषय में किसी एक प्रकार के निश्चय होने तक' ।

**[मोक्ष पहुँचाना भगवदधीन है]**

**चक्रवत् परिवर्तमान संसार** - इत्यादि से **'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काऽप्युपजायते'** ।। (अहि.सं.१४-२८) (इस प्रकार संसारचक्र में भ्रमण करता हुआ जब जीव दुःखी होगा, तब भगवान की एक विलक्षण कृपा उत्पन्न होगी ।) इत्यादि प्रमाण के अनुसार जीव को इस संसार चक्र में भ्रमण कराना और इधर से उठाकर मोक्ष पहुंचाना, ये दोनों भगवान के काम बताये जाते हैं ।।

**अळवियन्न वेळुलकत्तवर् पेरुमान् कण्णनै**
**वळवयल्शूळ् वण्कुरुहूर् शठकोपन् वाय्न्दुरैत्त**
**अळवियन्न अन्दादि आयिरत्तु ळिप्पत्तिन्**
**वळवुरैयाल् पेरलाहुम् वानोङ्ग पेरुवळमे ।। ११ ।।**

**।। इति सहस्रगीत्यां प्रथमशतके चतुर्थदशकं समाप्तम् ।।**

**(गाथा) -** **उत्तुङ्गामितसप्तलोकसरणेर्नाथं च कृष्णं हरिं**
**दिव्यज्ञानबलाद्भजन् हि कुरुकापुर्याश्शठारिः प्रभुः ।**
**साहस्रं व्यतनोच्च वृत्तरचनैरन्तादिपद्यावळीं**
**तत्रेदं दशकं तु भक्तपठितं दिव्यं पदं प्रापयेत् ।। ११ ।।**

**।। इति सहस्रगाथारत्नावल्यां प्रथमशतके चतुर्थदशकं समाप्तम् ।।**

[प्रतिपदार्थः]

**विवरणम्** -अपरिच्छेद्यमहिमशालिनं सप्तलोकीनिर्वहणधुरन्धरम् आश्रित-सुलभत्वैकस्वभावं च भगवन्तमधिकृत्य, सुसमृद्धसस्यभूमिपरिवृतकुरुकापुरावतीर्णेन शठजिन्मुनिना सप्रेमभरं विज्ञापितायाम् अस्यामन्तादिरूपायां सहस्रगीत्यामेतस्य

**दशकस्य सम्यगनुसन्धाने सति श्रीमति वैकुण्ठे नित्यकैङ्कर्यरूपा सुसमृद्धा संपन्नियतं सुलभा स्यात् ।।**

**[भगवतः आश्रितसुलभत्वैकस्वभावत्वम्]**

एतद्दशकाध्ययननिरतानां सतां फलकीर्तनगाथा सैषा । अधस्तात् दशभिः गाथाभिः अतिमात्रं स्वात्मनः खेदं प्रकाशितवता मुनिवरेण खेदस्य तस्य परिहृतिः प्राप्ता वा न वेत्ययमंशो न तावदाविष्कृतोऽन्ते । एतदवश्यम् आविष्करणीयं खलु ; अनाविष्करणं न्यूनतैव खलु इति केचित् मन्येरन्। गाथायामस्यां **सप्तलोकीनिर्वहणधुरन्धरं आश्रितसुलभतैकस्वभावम् -** इति भगवतः विशेषणद्वयं यदस्ति विन्यस्तम्, तदिदं व्यञ्जनावृत्त्याऽवगमयति भगवतः उपस्थितिम् । अधस्तात्पञ्चम्यां गाथायाम् 'स्वकीया नारायणसमाख्या यथा न भज्येत तथा तन्नामरक्षणम् आवश्यकमिति कथ्यताम्' इति हि संदिष्टम् । तादृशसंदेशस्य फलेग्रहित्वाभावे निरुक्तविशेषणद्वयं नैव प्रयुञ्जीत मुनिवरः । स्वरक्षणेन सप्तलोकीरक्षकोऽभूत् । स्वस्मिन् सौलभ्याविष्करणेनैव आश्रितसुलभत्वैक - स्वभावत्वविशेषणार्होऽभूत् इति प्रतिपत्तव्यम् ।।

**।। इति प्रथमशतके चतुर्थदशकविवरणम् समाप्तम् ।।**

**[एतद्दशकतात्पर्यसारसंग्राहकः द्रमिडोपनिषत्संगतिश्लोकः]**

**तत्काङ्क्षितानधिगमेन मुनिर्विषण्णः**
**प्राप्तो दशां च हरिभुक्तवियुक्तनार्याः ।**
**सर्वापराधसहतामवबोध्य दूतैः**
**शौरेः स्वदोषपरतामलुनाच्चतुर्थे ।।**

**[प्रतिपदार्थ]**

**हिन्दी - नापने अशक्य महा महिमवाले, सातों लोकों के निर्वाह करनेवाले और आश्रित सुलभता को ही अपने एक स्वभाव के रूप में धारण करनेवाले भगवान को लक्ष्यकर अतिसमृद्ध सस्यभूमियों से परिवृत कुरुकापुरी में अवतीर्ण श्री शठकोपमुनि की सप्रेम विज्ञापित अन्तादिरूप सहस्रगीति के अंतर्गत प्रकृत दशक का ठीक अनुसंधान करने पर श्री वैकुंठदिव्यधाम में नित्य कैंकर्यरूप श्रेष्ठ संपत्ति अवश्य मिलेगी ।।**

**[आश्रितसौलभ्य भगवान का स्वभाव है]**

यह गाथा प्रकृत दशक के अध्ययन करनेवाले महात्माओं को मिलनेवाला फल बताता है । यह तो ठीक है । परंतु यह प्रश्न उठेगा कि दसों गाथाओं में दुःख प्रकाशित करनेवाले आळ्वार की दुःख की निवृत्ति हुई या नहीं ; इस अर्थ का वर्णन क्यों नहीं किया गया ? इस का उत्तर यह है कि आळ्वार ने व्यंग्यमर्यादा से भगवान की उपस्थिति की सूचना दे रहे हैं प्रकृत गाथास्थ **(सातों लोकों के निर्वाह करनेवाले)** और **(आश्रितसुलभ)** शब्दों से । पाँचवीं गाथा में आळ्वार ने भगवान को यह संदेश भेजा कि अपने नारायणत्व को प्रतिष्ठित कर लीजिए । आळ्वार के रक्षण करने से ही भगवान का नारायणत्व एवं सप्तलोकीरक्षण सिद्ध होते हैं । एवं आळ्वार के सुलभ होने से ही भगवान आश्रितसुलभ का बिरुद पाने योग्य हुए । अतः प्रकृत दो विशेषण बतला रहे हैं कि आळ्वार के संदेश पाकर, भगवान तुरंत ही वहां पधार गये ।।

**।। सहस्रगीति के पहले शतक का चौथा दशक का हिन्दी व्याख्यान समाप्त हुआ ।।**

**।। आळ्वार तिरुवडिहळे शरणम् ।।**

## प्रथमशतके पञ्चमदशकम्

**(ईश्वरस्स्वसौशील्यात् शठारिविश्लेषम् असहमानस्तं स्वसन्निधिं प्रापयति स्म इति वदति ।)**

### अवतारिका

**[भगवतः सौशील्याविष्करणे इदं दशकं विलक्षणमित्युक्तिः]**

**विवरणम् -** श्रीपरकालमुनीन्द्रानुगृहीतस्य बृहत्सूक्ताभिधानदिव्यप्रबन्धस्य दिव्यदेशानुभवे प्रधानदृष्टिः ; श्रीपराङ्कुशमुनीन्द्रानुगृहीतस्य अस्य सहस्रगीतिदिव्यप्रबन्धस्य दिव्यगुणानुभवे प्रधानदृष्टिः इति पूर्वाचार्यगोष्ठीषु प्रथा । बृहत्सूक्ते नवसु शतकेषु प्रतिदशकं बदरिकाश्रम-सालग्राम-नैमिशारण्य-वेङ्कटाद्रि प्रभृति नानादिव्यदेशानाम् उपवर्णनम् अनुभवश्चैव हि सम्पद्यते। एवं सहस्रगीत्याम् अस्यां कदाचिदेव दिव्यदेशानुभवः ; प्रतिदशकं च एकैकगुणानुभवस्य हि प्राधान्यम् अनुभूयते । अधस्तात् द्वितीयदशक-चरमगाथायां **'गुणगणसंदृब्धा सेयं सहस्रगीतिः'** इत्यनुगृहीतं च स्मर्तव्यम् । प्रथमे दशके परत्वं, द्वितीये भजनीयता, तृतीये सौलभ्यं, चतुर्थे अपराधसहत्वापरपर्यायभूता क्षमा - इत्येतेषां गुणानाम् अनुभवस्सम्पन्नः । अधुना पञ्चमे दशके शीलनामा दिव्यो गुणः स्वानुभवमुखतः प्रकाश्यते मुनिवरेण। शीलमेव सौशील्यम् इति व्यपदेशमपि विन्दति ।

**'महतो मन्दैस्सह नीरन्ध्रेण संश्लेषः - सौशील्यम्'** इति लक्षणपरिष्कारश्च आचार्यैः अकारि । जगति क्षुद्रा एव पुरुषाः स्वस्मिन् अप्रतिमं महत्त्वम् अस्तीति वृथाऽभिमन्यमानाः, वस्तुतस्सावधिकं स्वल्पं महत्त्वम् अश्नुवानाश्च सन्तः स्वसजातीयान् तृणाय मन्यन्ते, तैस्सहयोगं स्वस्य अवद्यावहं च मन्वते इति सर्वतः प्रत्यक्षम् ईक्षामहे । वस्तुतः सर्वविधेष्वपि ऐश्वर्येषु निरवधिकोत्कर्षशाली परमः पुमान् इति सर्वनिर्विवादम् । स तावत् स्वापेक्षया सर्वथा जघन्यान् संसारिचेतनान् चक्षुषाऽपि वीक्षितुं नार्हतीति चाविवादम् । ईदृशोऽयं भगवान् अस्मादृशेषु क्षुल्लकेषु कथं वर्तते ? कथं वा संयुज्यते ? इति वेदोपबृंहणप्रवृत्तैः इतिहासपुराणैरेव वेदितुं प्रभवामः । श्रीमता वेङ्कटनाथार्येण विरचिते दयाशतके **'निषादानां नेता कपिकुलपतिः काऽपि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति । अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैस्स्रोतोभिः प्रसभमनुकम्पे ! समयसि'** ।। (दया.श.६५) इत्येष श्लोकः सौशील्यप्रकारं तल्लक्ष्यभूतकतिपयव्यक्तिविशेषांश्च प्रदर्शयति । रामावतारे गुह-शबरी-सुग्रीवादयः, कृष्णावतारे कुब्जा-कुचेल-गोपिका-मालाकारप्रभृतयश्च परस्य पुंसः शीलगुणमतिमात्रम् अन्वविन्दन्त इति वास्तविकम् । परंतु निर्दिष्टेषु एतेषु नैकोऽपि स्ववाचा शीलगुणमनुभूय द्रुतहृदयतां प्राकाशयत् । मालाकारस्तु एकः **'प्रसादपरमौ नाथौ मम गेहमुपागतौ । धन्योऽहम्'** (वि.पु.५-१९-२१) इत्याह इति शृणुमः । मुनिवरस्य अस्य दशकेऽस्मिन् संपद्यमानः शीलगुणानुभवः अन्यत्र कुत्रापि अदृश्यप्रक्रियः परमविलक्षणः इति गाथासन्निवेशः व्यक्तीभवति ।

### [ गुणशब्दाभिप्रायः ]

गुण इति योऽयं शब्दो विद्यते, स गुणसामान्यवाचीति बहूनां प्रतिपत्तिः ; नात्र किञ्चित् अनौचित्यम् । अथापि मृगसामान्यवाची मृगशब्दः यथा मृगविशेषहरिणवाचकोऽपि भवति तथैव गुणशब्दोऽपि न केवलं गुणसामान्यवाची अपितु शीलाख्यं गुणविशेषमपि अभिधत्ते । अत एव **'को न्वस्मिन् सांप्रतं लोके गुणवान्'** (रामा.बा.कां.१-२) इति नारदं प्रति वाल्मीकिप्रश्ने प्रयुक्तगुणशब्दः शीलगुणपरः एवेति व्याख्यातारः । स्तोत्ररत्ने **'वशीवदान्यो गुणवानृजुः शुचिः......त्वमसि स्वभावतस्समस्तकल्याणगुणामृतोदधिः'** ।। (स्तो.र.१८) इत्यत्र गुणवान् इत्येतत् सर्वथा गुणसामान्यवद्बोधकं न भवितुम् अर्हति इति सुस्पष्टम् । गुण्यते इति गुणः । गुण्यते - पुनःपुनरावर्त्यते इत्यर्थः । भगवता क्रियमाणं नीरन्ध्रसंश्लेषम् अनुभवन्तः

'आ किमेतत् ! हा हा किमिदं नाम'! इति आम्रेडयन्ति यथा तथा नाम संश्लिष्यति इति सिध्यति ।

**[भगवतः परत्वं विचार्य स्वयमपसर्तुमीहते मुनिवरः]**

अधस्तनदशके दूतप्रेषणं हि कृतं भगवतस्सकाशे । अथ किं वृत्तमिति सुस्पष्टतया मूलतः नावगम्यते । दशकेऽस्मिन् किं भवति इति विमर्शे मुनिवरः स्वकीयं निकर्षमतिमात्रम् अनुसंदधानः **'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः'** (र.वं.१-३) इत्याद्युक्तप्रकियया भगवत्सन्निकर्षे अवस्थातुमपि स्वस्य सर्वात्मना अयोग्यतां कथयन् अनुशयम् आविष्कुर्वन्नुदास्ते । भगवांस्तु स्वस्य आश्रितजनसंश्लेषैकस्वभावतां चर्याविशेषस्मारणतः प्रकाशयति । अन्ततश्च उभयोः संश्लेषः संघटते - इत्येषा प्रक्रिया दशकेऽस्मिन् स्थिता । एतेन च अवगम्यते लब्धसंदेशो लक्ष्मीपतिः गजेन्द्ररक्षायामिव सरभसम् उपयातः ; तदात्वे तदीयम् अप्रमेयं परत्वं प्रेक्षमाणो मुनिवरः तदीयसौलभ्यरासिक्यादिगुणविशेषान् अत्यन्तमेव विस्मृत्य निस्सीमपरत्वमात्रदत्तदृष्टिस्सन् - आः कथम् अयम् अहूतो मया वराकेण ? अहह कथमिव सुदारुणम् अपचरितम् आचरितं मया ? इत्यनुशयितुम् आरेभे - इति । भो भो रसिकाग्रगण्या महाशयाः ! भगवदनुभवप्रकारेषु अयमपि अन्यतमः परमविलक्षणः प्रकार इत्युपधार्यम् । अत्र तु भगवतः सकाशात् स्वयम् अपसर्तुम् ईहते मुनिवरः ; उपरि षष्ठशतके द्वितीयदशके स्वसकाशाद्भगवन्तम् अपसारयितुं प्रयतते इतोऽपि अत्यन्तविलक्षणो हि सोऽनुभवप्रकारः । तत्र तावत् **'भगवन्! अपसरसि नचेन्मुद्गराभिघातोऽपि भविता ते नूनम्'** इत्यपि भीषयति बत ! गोपीजनच्छद्मना । दिव्यसूरेः एतादृशीः अनुभवप्रणालीः अनुभवितुं हन्त ! के वयं वराकाः !

**[भगवति स्पृहा निजानर्हता च प्रकटयितव्ये]**

भगवद्यामुनार्य-कूरेशमिश्र-भट्टपादादयोऽपि अतिहृद्योऽयम् अनुभवप्रकार इति स्वस्वदिव्यसूक्तिषु स्वानुभवमुखेन संदर्शयन्ति । तदपि मात्रया विवृणुमः । स्तोत्ररत्ने **'विराजमानोज्ज्वलपीतवाससम्'** इत्युपक्रम्य **'अचिन्त्यदिव्याद्भुत'** (स्तो.र.३२) इत्यन्तम् अच्युतम् अतिमात्रम् उपवर्ण्य **'भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिश्शेषमनोरथान्तरः । कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः'**।। (स्तो.र.४६) इति स्वकीयाम् आर्तिम् अतिमात्रं प्रकाश्य सद्य एव **'धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष ! योऽहं योगिवर्याग्रगण्यैः । विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव**

**परिजनभावं कामये कामवृत्तः'** ।। (स्तो.र.४७) इत्यनेन श्लोकेन स्वस्य अयोग्यताम् अनुसंदधे। श्रीवत्साङ्कमिश्रोऽपि श्रीवैकुण्ठस्तवे बहुभिः श्लोकैः स्वकीयाम् अनुबुभूषाम् अप्रमेयाम् आविष्कृत्य, अथ च **'अंहः प्रसह्य विनिगृह्य विशोध्य बुद्धिं व्यापूय विश्वमशुभं जनुषाऽनुबद्धम् । आधाय सद्गुणगणानपि नाहमर्हस्त्वत्पादयोः यदहमत्र चिरं निमग्नः'** ।। (श्रीवै.स्त.८५) 'इत्यनेन श्लोकेन स्वकीयाम् अनर्हताम् अभिदधे । श्रीपराशरभट्टार्योऽपि श्रीरङ्गराजस्तवोत्तरशतके' **'गर्भजन्मजरामृतिक्लेशकर्मषडूर्मिक : । श्वेव देववषट्कृतं त्वां श्रियोऽर्हमकामये'** ।। (श्रीरङ्ग.उ.श.९९) इत्यनेन श्लोकेन तथैव । हन्त ! एतेन किमवबोध्यते ? भगवदनुभवे स्पृहातिशयप्रकाशनमपि कर्तव्यम्, स्वकीयवास्तविकायोग्यताविष्करणमपि कर्तव्यम् इति शास्त्रार्थशिक्षणम् अवगम्यते । आत्मसमर्पण-तदनुशयप्रकाशनवत् एतदिति विभाव्यम् । **'तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः'** (स्तो.र.५२) इति पुरस्तात् आत्मसमर्पणम्, अथ सद्य एव **'प्रबुद्धधीरथ वा किं नु समर्पयामि ते'** (स्तो.र.५३) इत्यनुशयप्रकाशनं च यथा, तथा ह्येतत् । अस्मदीयदोषैरेव यथा क्षमावात्सल्यादिकं प्रकाशम् ऋच्छति, तथैवः अस्मदीयनैच्यानुसन्धानत एव भगवतः शीलगुणप्रकाशः पुष्कलः भवति इति सारं वचः ।

**[ स्वानर्हताप्रकाशनविषये दृष्टान्तः ]**

नन्दनन्दनं भगवन्तं मथुरां नेतुं यदा व्रजम् आययौ अक्रूरः, तदा तत्र वृत्तम् उपवर्णयन् पराशरो महर्षिः **'सोऽप्येनं ध्वजवज्राब्जकृतचिह्नेन पाणिना । संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे'** ।। (वि.पु.५-१८-२) इति प्राह । अत्र 'संस्पृश्य-आकृष्य' इति पदद्वयेन स्फोरितोऽर्थोऽवधेयः ; स्वात्मानम् अवलोक्य अधःपतितम् अनुत्थितं च अक्रूरम् उत्थापयितुकामः कृष्णः यदा तमस्प्राक्षीत्, तदा सोऽतिमात्रनैच्यानुसन्धानेन दूरतोऽपसर्पितुम् आरेभे, तदा सौशील्यनिधिः कृष्णः तम् आकृष्य स्वकीयं शीलं प्राचीकशत् इति ।। एवमेव दशकेऽत्र स्वकीयं नैच्यम् अनुसंदधतो मुनीन्द्रस्य दूरतोऽपसर्पणेच्छा, भगवतः स्वकीयशीलगुणप्रदर्शनेन तदङ्गीकारश्च अनुभवप्रणाल्या प्रकाश्येते ।। इत्यवतारिका ।।

## अवतारिका

**[ भगवान के शीलगुण के प्रकाशन में यह दशक अतिविलक्षण है ]**

**हिंदी** - पूर्वाचार्यों का कहना है कि श्रीपरकालसूरि से अनुगृहीत बृहत्सूक्त नामक दिव्यप्रबंध का मुख्य लक्ष्य दिव्यदेशों का अनुभव है; श्रीशठकोपसूरि से

अनुगृहीत प्रकृत सहस्रगीति का लक्ष्य तो भगवान के दिव्यगुणों का अनुभव है । तथाहि - बृहत्सूक्त में आदि से नौ शतकों तक सुधी, बदरीनारायण-सालग्राम-नैमिशारण्य-श्री वेंकटाद्रि इत्यादि अनेक दिव्यदेशों का ही अविच्छिन्न अनुभवपूर्वक वर्णन चलता है । सहस्रगीति में तो क्वचित् क्वचित् ही दिव्यदेशानुभव है ; परंतु एकैक दशक में भी भगवान के एकैक शुभगुण का ही प्रधानरूप से अनुभव किया जाता है । यह अर्थ स्वयं आळ्वार से ही दूसरे दशक के अंत में (**'गुणगणग्रथित सहस्रगीति'**) बताया गया । इस प्रकार, पहले दशक में परत्व, दूसरे में भजनीयता, तीसरे में सौलभ्य और चौथे में क्षमा, माने अपराधसहत्व, इतने गुणों का अनुभव होने के बाद, अब प्रकृत पांचवें दशक में शीलनामक गुण का अनुभव पूर्वक विवरण किया जा रहा है । शील का दूसरा नाम है सौशील्य । इस का आचार्यों का अनुगृहीत लक्षण यह है - 'स्वयं महान होते हुए भी अतिनीच जन से, विना संकोच, मिलने के उस गुण का नाम सौशील्य है' । लोक में हम देखते हैं कि नीच लोग अपने को बहुत श्रेष्ठ, और दूसरों को तुच्छ मानते हुए, उन से मिलने में सकुचाते हैं । वस्तुतस्तु इनकी महत्ता अत्यल्प है । परंतु भगवान निर्विवाद ही समस्त प्रकारों से सब से सर्वथा श्रेष्ठ विराजते हैं । उन के साथ तुलना करने पर सभी संसारी लोग अति क्षुद्र कीटप्राय दिखेंगे । अत: अतिनीच संसारी जन सर्वश्रेष्ठ भगवान के अवलोकन के भी अनर्ह हैं । परंतु भगवान क्या वे ऐसे ही करते हैं ? इस विषय में उन के बर्ताव का अति मनोहर वर्णन श्रीरामायण महाभारतादि दिव्यग्रंथो में मिलता है । श्री वेदांतदेशिक स्वामीजी अपने विरचित 'दयाशतक' के एक सुंदर पद्य में इस सौशील्य के प्रकार का तथा इस महागुण के लक्ष्य भूत कतिपय व्यक्तियों का वर्णन करते हैं - **'निषादानां नेता कपिकुलपतिः कापि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति । अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि'** ।। (दया.श.६५) (हे श्रीवृषगिरिनाथ श्रीनिवास भगवान की दये ! भीलों के नेता गुह, कपियों के राजा सुग्रीव, अतिक्षुद्र शबरी, कुचेल, कुब्जा, गोपियाँ और मालाकार, इनकी नीचता, तथा भगवान की श्रेष्ठता को तुम अपने अत्यधिक प्रवाहों से एक समान बना देती हो । अर्थात भगवान अपनी दया के रूपांतर सौशील्य के प्रभाव से अपनी महत्ता का ख्याल न करते हुए पूर्वोक्त गुह आदियों के समान हो जाते हैं ।) यह अर्थ सर्वथा सत्य है कि भगवान ने, इस श्लोक के अनुसार, रामावतार में गुह, शबरी सुग्रीव इत्यादियों, एवं

श्रीकृष्णावतार में कुब्जा, कुचेल, गोपियों, मालाकार, इत्यादियों पर इस गुण को प्रकाशित किया । परंतु खेद की बात है कि उक्त अनेक व्यक्तियों में से एक ने भी परवशचित्त होकर इस गुण का अनुभव नहीं किया । हाँ । सुना जाता हैं कि मालाकार ने, **'प्रसादपरमौ नाथौ'** (वि.पु. ५-१९-२१) इत्यादि से इस गुण का कुछ वर्णन किया । प्रकृत दशक में श्रीशठकोपसूरी को मिलनेवाला शीलगुणानुभव तो अत्यंत विलक्षण और अन्यत्र कहीं भी सर्वथा अदृश्य होता है ।

### [ गुणशब्द सौशील्य को बताता है ]

संस्कृतभाषा में 'गुण' शब्द, न केवल गुण सामान्य का, अपितु सौशील्यनामक एक महागुणविशेष का भी वाचक होता है । जैसे समस्त जानवारों का साधारण नाम होता हुआ भी 'मृग' शब्द हरिन का असाधारण नाम भी होता है । अत एव श्री रामायण के व्याख्याकार, संक्षेप रामायण में वाल्मीकि के प्रश्न **(कोऽन्वस्मिन् सांप्रतं लोके गुणवान्)** के अंतर्गत गुण शब्द को सौशील्यार्थक बताते हैं । एवं **'वशी वदान्यो गुणवान्'** (स्तो.र.१८) इत्यादि स्तोत्ररत्न-पद्य के बीच में रहनेवाला गुणशब्द किसी प्रकार से गुणसामान्य का वाचक नहीं हो सकता ; क्यों कि (१) विशेषगुणवाचक शब्दों के बीच में वह प्रयुक्त है, और (२) पद्य के अंत में अलग **(समस्तकल्याणगुणामृतोदधिः)** गुणसामान्यवाचक शब्द प्रयुक्त भी है । अतः अवश्य ही यह शब्द किसी विशेष गुण का वाचक है । वही सौशील्यगुण है । गुण्यते- पुनः पुनरावर्त्यते - इति गुणः । अर्थात इस का अनुसंधान करनेवाले पुनः पुनः यही रटन करते हैं - अहो ! यह क्या है ? कौन सा गुण है ? इत्यादि ।

### [ भगवान के परत्व से डरकर आळवार की हट जाने की इच्छा ]

पूर्वदशक में आल्वार ने भगवान को दूत भेजा तो सही ; परंतु स्पष्ट शब्दों में यह नहीं बताया कि उस का परिणाम क्या हुआ । अस्तु । प्रकृत दशक की तो यह कथा है कि आळवार अपनी अतिमात्र नीचता का चिंतन करते हुए, अपने को भगवान के सामने रहना भी सर्वथा अयोग्य मानकर, बहुत पश्चात्ताप व संकोच करते हैं ; तब भगवान अनेक समुचित उदाहरणप्रदर्शनपूर्वक, अपने भक्तजनसंश्लेषस्वभाव

का प्रकाशन करते हैं ; और अंततः दोनों का मिलाप होता है । इससे हम यह अर्थ समझ सकते हैं - आळ्वार के संदेश पानेवाले भगवान, उसे गजेंद्र के आर्तनाद के सदृश मानकर अतिशीघ्र ही उन के सामने प्रकट हुए ; तब आळ्वार उन के सौलभ्य सौशील्य इत्यादि गुणों को सर्वथा भूलकर, अप्रमेय परत्व के दर्शन और ख्याल करते हुए, पछताने लगे कि - 'अहो ! अतिनीच मैं ने परात्पर इस महात्मा को क्योंकर बुलाया ? हाय ! मै ने कैसा घोर अपराध किया' ? इत्यादि । रसिक भक्तों को समझना चाहिए कि यह भी एक प्रकार का परमविलक्षण, अत्यद्भुत भगवदनुभव है । प्रकृत दशक में आळ्वार भगवान को छोडकर स्वयं दूर भागने का विचार करते हैं ; आगे छठे शतक के दूसरे दशक में वे भगवान को ही दूर निकाल देने की चेष्टा करेंगे ; अर्थात वे गोपी वेष का धारण कर, वहां इतनी कठिन बात करनेवाले हैं कि 'अरे भगवान् ! झट इधर से निकल जा ; अन्यथा मैं तुझे डंडा ले कर पीट दूंगी' इत्यादि । सर्वथा भावना से दरिद्र, भक्ति शून्य हमारे जैसे पामर जन आळ्वार के इन परमविलक्षण अनुभवों की कल्पना तक कैसे कर सकते हैं ?

**[भगवान पर स्पृहा, अपनी अयोग्यता दोनों को ही व्यक्त करना चाहिए]**

भगवद्यामुनाचार्य, श्रीकूरेश, श्रीपराशरभट्ट इत्यादि हमारे पूर्वाचार्य आळ्वार के इस अनुभव की रस्यता के परवशचित्त होकर अपने प्रबंधों में स्वयं ऐसा ही अनुभव करते हैं । तथाहि - श्रीयामुनाचार्यस्वामी जी स्तोत्ररत्न में **'विराजमानोज्ज्वल'** (३२) इत्यादि से शुरू करके, **'अचिन्त्यदिव्याद्भुत'** (४६) तक के पंद्रह श्लोकों से भगवान के अत्यद्भुत दिव्य सौंदर्य का वर्णन कर, **'भवन्तमेवानुचरन्निरन्तरम्'** (४६) इत्यादि पद्य में, ऐसे भगवान की नित्यसेवा करने की विलक्षण व तीव्र इच्छा प्रकट करने के बाद **'धिगशुचिमविनीतं निर्दयं मामलज्जम्'** इत्यादि (४७) पद्य से 'योगिश्रेष्ठ ब्रह्मा शिव सनकादियों के चिंतन से भी दूर रहनेवाले भगवान के कैंकर्य करने की इच्छा करनेवाले मुझ स्वेच्छाचारी, अशुद्ध, दयारहित, निर्लज्ज का धिक्कार हो' कहते हुए, भगवदनुभव करने में अपनी अयोग्यताका अनुसंधान करते है । श्रीकूरेशस्वामी अपने श्रीवैकुंठस्तव में अनेक पद्यों से भगवान के दर्शन व कैंकर्य करने की अपनी तीव्र इच्छा बताकर, बाद में **'हा हन्त ! हन्त'** (७४) एवं **'अंहः प्रसह्य'** (८५) इत्यादि पद्यों से, 'हाय ! हाय ! मोह-परवश होकर मैं ने यह क्या कहा ?

हे प्रभो! समस्त दोषों का आधार मेरा जैसा मानव, सकलकल्याणगुणगणपरिपूर्ण आप के स्मरण तक करने अर्ह कैसे हो सकेगा ? अथवा अब की क्या बात है ? अपने समस्त पापों तथा दूसरे समस्त दोषों को दूर कर, समस्त श्रेष्ठगुण पाने के बाद भी मैं आप के पास आने योग्य नहीं बन सकूंगा' इत्यादि कहने लगे । एवं श्रीपराशरभट्टार्यस्वामीजी भी श्रीरंगराजस्तव के उत्तरशतक में कहते हैं - **'गर्भजन्मजरामृतिक्लेशकर्मषड्डूर्मिकः । श्वेव देववषट्कृतं त्वां श्रियोऽर्हमकामये ।।'** (११) (गर्भवास, जनन, वार्धक, मरण, दुःख व पुण्यपाप रूप छे दोषों से समाक्रांत मै ने, देव योग्य पुरोडाश पाने के इच्छुक कुत्ते की भांति, महालक्ष्मीजी के योग्य आप को पाना चाहा ।) पहले भगवान से मिलना चाहना, बाद में पछताना और उस अनुभव से पीछे हट जाना, यह तो बडा विचित्र-सा प्रतीत होगा । परंतु क्या किया जाय ? यह तत्व ही ऐसा है । अर्थात हमें भगवान के दर्शन, कैंकर्य इत्यादि करने की अपनी तीव्र इच्छा प्रकट करना ही चाहिए ; एवं अपनी अयोग्यता का अनुसंधान भी करना चाहिए । इन में से हम एक को भी छोड नहीं सकते । हमारे पापों की वजह से भगवान के दया, क्षमा इत्यादि गुण प्रकाशित होते हैं, और अत एव हम अपने उक्त पापों का अनुसंधान करते हैं ; ठीक इसी प्रकार हमें अपनी अयोग्यता का भी अनुसंधान अवश्य करना चाहिए ; क्योंकि इस से भगवान के शीलगुण का प्रकाशन होता है । अतः इस में किसी प्रकार का विरोध नहीं हैं । इस विचित्र प्रसंग का यह एक सुंदर दृष्टांत है कि आळ्वार जैसे ज्ञानी लोग पहले भगवत्संनिधि में आत्म-समर्पण करके, बाद में उस के लिए पछताते हैं । यथा श्रीमद्यामुनाचार्य स्वामीजी ने स्तोत्ररत्न में **'तदयं तव पादपद्मयोः अहमद्यैव मया समर्पितः'** (५२) कहते हुए आत्मसमर्पण किया ; और तुरंत ही **'प्रबुद्धधीरथवा किं नु समर्पयामि ते'** (४३) कहते हुए उस के लिए अपना पश्चात्ताप बताया । अस्तु ।

### [अयोग्यता प्रकाशन का निदर्शन]

श्रीकृष्णचंद्र को मथुरा ले जानेके लिए व्रज आनेवाले अक्रूर के वृत्तांत का वर्णन करते हुए श्री पराशर महर्षि श्रीविष्णुपुराण में कहते हैं - **'सोऽप्येनं ध्वजवज्राब्जकृत चिह्नेन पाणिना । संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे'** ।। (वि.पु.५-१८-२) (श्रीकृष्ण ने अपने ध्वज, वज्र, कमल इत्यादि चिह्नों से सुशोभित श्रीहस्त से अक्रूर का स्पर्श कर, उसे अपनी तरफ खींच कर, अतिप्रेम से उस का गाढ आलिंगन किया ।)

इस श्लोक में 'स्पर्श कर' व 'खींचकर' बडे मार्मिक शब्द हैं । इन का यह भाव है - श्रीकृष्ण के दर्शन करते ही अक्रूर उन के प्रणाम करने के लिए पैरों में गिर पडा और उठा ही नहीं । तब उस को उठाने के लिए श्रीकृष्ण ने उस का स्पर्श किया । फिर हुआ क्या ? अक्रूर ने भूतल से उठकर, अपनी नीचता का अनुसंधान करते हुए, दूर भाग जाना चाहा । यह देखकर श्रीकृष्ण ने उसे अपने पास खींच कर गाढ आलिंगन किया कि वह उस से अपने को छुडा नहीं सका । ऐसा है भगवान का अतिविलक्षण शील गुण ! इसी प्रकार यहाँ आळ्वार भी अपनी नीचता के अनुसंधान करते हुए भगवान से दूर भाग जाना चाहते हैं, और भगवान अपने शीलगुण का प्रकाशन करते हुए इनका अंगीकार करते हैं ; ऐसे एक विलक्षण अनुभव का वर्णन प्रकृत दशक में चलता है ।।

**वळवेळुलहिन् मुदलाय वानोरिरैयै अरुविनैयेन्**
**कळवेळ् वेण्णेय् तोडुवुण्ड कळ्वा वेन्बन् पिन्नैयुम्**
**तळवेळ् मुरुवळ् पिन्नैक्काय् वल्लानायर् तलैवनाय्**
**इळवेरेळुम् तळुविय एन्दायेन्बन् निनैन्दु नैन्दे ।। १ ।।**

**(गाथा) - मूलं सप्तजगत्ततेश्च मनसा सूरीन्द्रनाथं स्मरन्**
**देहेऽहं शिथिलेन्द्रियश्च वचसा पापी वदाम्येव हि ।**
**धूर्त त्वं नवनीतचोर इति च स्मेराननां तां प्रियां**
**नीळां प्राप्तुमहो वृषानपि विभो सप्तावधीश्चेत्यपि ।। १ ।।**

[प्रतिपदार्थः]

**विवरणम् - समृद्धसप्तलोकीनिदानभूतं नित्यसूरिनाथमुद्दिश्य दुष्परिहरपापपूरितोऽहं मनसा ध्यातवानस्मि हन्त ! ध्यानकाले गात्रशैथिल्यं चाभिनीतवानस्मि हन्त ! चौर्येण नवनीतमार्जयित्वा तदुपभुक्तवन् दस्यो ! इति चावोचं बत ! किञ्च, कुसुमविकासोपमेयमन्दहासाञ्चितवदनायाः नीलादेव्याः कृते गोपालतल्लजो भूत्वा अवलिप्तवृषभसप्तकमर्दनकारिन् स्वामिन्निति आमन्त्रितवानस्मि च है हन्त ।।**

### [ स्वनिकर्षानुसन्धानम् ]

दशकेऽस्मिन् दिव्यसूरिवरोऽसौ स्वनिकर्षानुसन्धानपूर्वकं भगवद्विषये स्वस्य प्रवृत्तिम् अनुशेते - इत्यवतारिकायां प्रपञ्चितमिह स्मर्तव्यम् । मनोवाक्कायरूपत्रिकरणतोपि अहं भगवतोऽवद्यम् उत्पादितवानस्मि हन्त इति परितप्यते सूरिः । **दुष्परिहरपापपूरितोऽहम्** इत्यनेन स्वनिकर्षोऽनुसंहितः । पापानां चतुर्भिः प्रकारैः परिहरणं शास्त्रेषु चोदितम् - **'अनुतापादुपरमात् प्रायश्चितोन्मुखत्वतः । तत्पूरणाच्चापराधास्सर्वे नश्यन्ति पादशः'** ।। इति उक्तेषु अनुतापादिषु एकतरेणापि विहीनोऽहं प्रवर्धमानपापः एवास्मि ; एवंविधस्य मम भगवन् ! भवतस्स्मरणादियोग्यता लेशतोऽपि नैव खलु । **'योगिनामपि सुदूरगं धियः'** इत्युक्तस्य भवतो ध्यानं यदहमकार्षम्, तत् मनसा सम्पादितमवद्यम् । अवद्यम् ध्यानकाले **'पारमार्थिकभक्तियुक्तोऽयम्'** इति यथा केचन भ्राम्येयुः तथा नाम कपटभक्तिः अभिनीय गात्रशैथिल्यमपि यत्प्रादर्शयम् तत् कायेन सम्पादितम् अवद्यम् । **'नवनीतचोर ! नीलावल्लभ' !** इति परमप्रेमभरितैः महात्मभिः वक्तव्यं यदहम् अवोचम्, तत् वाचा सम्पादितम् अवद्यम् । एवं नाम त्रिभिरपि करणैः अदूदुषमहं हन्त इति दूयते सूरिः । अत्र एषा शङ्का भवितुम् अर्हति - स्वस्मिन् निकर्षो वास्तविकोऽस्ति नाम ; स्वकीयैः ध्यानादिकृत्यैः अखिलहेयप्रत्यनीकस्य भगवतः किं नामावद्यं भवितुम् अर्हति इति । उच्यते ; सत्यं भगवान् अखिलहेयप्रतिभट एव ; तस्मिन् न किमपि अवद्यम् आरोढुम् अलं वस्तुगत्या । शातकुम्भमयकुम्भगते तीर्थसलिले मदिराबिन्दुप्रक्षेपणे कृते सात्त्विकैः अस्पृश्यत्वापेयत्वादिरूपम् अवद्यं यथा भवति, तथाऽत्रापि भवेत्किमु ! इति भिया कथयति एवम् । 'अत्यन्तनिकृष्टेन शठकोपसूरिणा त्रिकरणतोऽपि स्पृष्टं अत एव दुष्टं च भगवन्तं न वयं स्पृशेम' इति सात्त्विकाः महान्तः भगवदनुभवात् उदासीरन् इति भीतिरिव मुनिवरस्य ।

### [ 'नवनीतचोरः' इत्युक्तिर्भगवतः स्पृहणीया ]

समृद्धसप्तलोकीनिदानभूतत्वनित्यसूरिनाथत्वयोः कथनम् भगवतः उभयविभूति - निर्वाहकत्वरूपपारम्यातिशयप्रतिपादनरूपं मन्तव्यम् । स्वनिकर्षानुसन्धानस्य सर्वथाऽपि सावकाशत्वं द्योतितं भवति अनेन । 'भगवतः नवनीतचोर इति संबोधनं वस्तुतो दूषणमेव खलु; तदर्थमनुतापप्रकाशनं च स्थाने खलु' इति तावन्न मन्तव्यम् । नवनीतचोर इति आमन्त्रणं वस्तुतो नैव दूषणम् अच्युतस्य ; यतो हि तस्य हर्षप्रकर्षाय

निरवग्रहानुग्रहौन्मुख्याय च कल्पते तदिदम् ; अथापि तु प्रेमपरवशैः गोपीजनसधर्मभिः एव वक्तव्यम् इदं वचः प्रेमदवीयसा स्वात्मना कथितम् इत्यनुतप्यते ।

**[ वृषभसप्तकमर्दनकथा ]**

अवलिप्तवृषभसप्तकमर्दनकथा च इयम् - दिव्यमहिषीषु अन्यतमा नीलादेवी व्रजे यशोदासोदरकुम्भनामकगोपालदुहिता सती समुत्पन्ना वर्धते । 'नप्पिन्नैप्पिराट्टि' इति तस्यः भाषानाम। जनकचक्रवर्ती यथा सीताविवाहार्थं धनुर्भङ्गं पणपदे पर्यकल्पयत् तथैव एष कुम्भनामा गोपाग्रणीरपि स्वदुहितुः विवाहार्थं अत्युद्धतसप्तर्षभावलेपविलोपनं पणपदे निदधे । इतरेषां मनसाऽपि चिन्तयितुम् अशक्यम् इदं कृत्यं नन्दनन्दनः भगवान् स्वयम् अवलीलया कृत्वा ताम् उपयेमे - इति तावत् इतिहासः । श्रीमद्वेङ्कटनाथार्यप्रणीते यादवाभ्युदयमहाकाव्ये चतुर्थे सर्गे **'दिशागजानामिव शाक्कराणां शृङ्गाग्रनिर्भिन्नशिलोच्चयानाम् । स तादृशा बाहुबलेन कण्ठान्निपीड्य लेभे पणितेन नीलाम् ।। करेण दम्भोलिकठोरतुङ्गान् देहान् पृथून् दानव दुर्वृषाणाम् । विमृद्य नूनं विदधे मुकुन्दः प्रियास्तनस्पर्शविहारयोग्याम् ।।** (९८,९९) इत्येतत्पद्यद्वितयम् इह अनुसन्धेयम् । अत्र व्याख्यायाम् अप्पयदीक्षितैः अलेखि हरिवंशप्रस्तुतोऽयम् इतिहास इति ।

**[ भगवतः गोपालत्वरहस्यम् ]**

**नीलादेव्याः कृते गोपालतल्लजो भूत्वा** - इत्यत्र **'हे सुन्दरैकतरजन्मनि कृष्णभावे द्वे मातरौ च पितरौ च कुले अपि द्वे । एकक्षणादनुगृहीतवतः फलं ते नीला कुलेन सदृशी किल रुक्मिणी च' ।।** इति एषा श्रीकूरनाथगुरुवरसूक्तिः अनुसन्धेया । यदुकुले समुत्पन्नः कृष्णः नीलादेवीपरिणयार्थमेव गोपकुलमास्थित इति हि श्लोकेन अनेन कथ्यते । श्री भक्तिसारमुनीन्द्रेण स्वकीये तिरुच्चन्दविरुत्ताभिधाने दिव्यप्रबन्धे एकचत्वारिंशगाथायां प्रथमचरणे संदर्शितस्स एष पन्थाः । (तत्र द्रष्टव्यमेतत् ।)

**[ प्रतिपदार्थ ]**

**हिंदी - अपरिहार्य पापों से परिपूर्ण मैं ने अपने मन से, हाय ! समृद्धिवाले, सातों लोकों के कारणभूत और नित्यसूरियों के नाथ भगवान का ध्यान किया ; और उस समय शरीरशैथिल्य का भी अभिनय किया । फिर भी मैंने कहा - 'हे चोरी से मक्खन उठाकर खानेवाले चोर' ! हाय ! हाय ! स्वयं उसके बाद मैं ने उन को पुकारा - 'हे पुष्पहास सदृश मनोहर मंदस्मितवाली नीलादेवी के लिए गोपश्रेष्ठ बनकर बलवान सात वृषभों का मर्दन करनेवाले स्वामिन्' !**

**[आळवार का नैच्यानुसंधान]**

अवतारिका में बताया गया कि इस दशक में आळवार अपनी नीचता का अनुसंधान करते हुए, भगवषिद्वय में प्रवेश करने के लिए पछताते हैं । वे दु:ख पा रहे हैं कि 'मैं ने अपने मन तन वाणी नामक तीनों करणों से भगवान को दूषित किया' । **अपरिहार्य पापों से परिपूर्ण मैंने** - कहना अपनी नीचता का वर्णन है । अपरिहार्य शब्द का अर्थ है मिटाने के अशक्य । तथाहि - शास्त्र में पाप मिटाने के प्रकार चार बताये गये हैं - पश्चात्ताप, पाप से निवृत्ति, प्रायश्चित्त करने का प्रयत्न, और उसका अनुष्ठान। अब आळवार का कहना है कि उक्त चारों में एक भी मुझ में नहीं है ; अतः मेरा पाप तो क्षणेक्षणे बढता ही रहता है, न कि कभी घटता । ऐसे मैं ने, योगिश्रेष्ठों के चिंतन से भी दूर रहनेवाले महामहिम आप का (भगवान का) जो ध्यान किया, यह मानसिक दोष हुआ । उस समय, नकली भक्ति का अभिनय करता हुआ, मैं अपने को शिथिलगात्र दिखाया ताकि देखनेवाले वंचित होकर मेरी प्रशंसा करने लगें कि 'अहो यह कैसा परमभक्त है'! । यह शरीर का अपराध हुआ । एवं परमप्रेम परवशचित्त महात्माओं का अनुकरण करते हुए मैं ने जो 'हे नवनीतचोर ! नीलावल्लभ' ! इत्यादि पुकारा, यह वाचिक अपराध हुआ । इस प्रकार मैं ने अपने तीनों करणों से आप को जो दूषित किया ; अब इस बात का दु:ख हो रहा है । इस पर शंका होगी कि यद्यपि हम दोषी हैं ; तथापि हमारे ध्यान संकीर्तनादि व्यापारों से 'अखिलहेयप्रत्यनीक' बिरुदभाजन भगवान पर कौन सा दोष लग सकता है? यह तो सत्य है कि भगवान दोषगंध से भी दूर हैं, तथापि आळवार के मन में यह भय है कि जैसे सोने के कुंभ में रखे हुए पुण्यतीर्थ के पानी में एक बिंदु मात्र के मद्य का मिश्रण होने पर भी, वह पानी अशुद्ध माना जाता ओर सात्विकों के काम में नहीं आ सकता है ; ठीक इसी प्रकार मेरे संबंध से भगवान को भी दोष लगता होगा । अर्थात सात्विक महात्मा लोग विचार करते होंगे कि 'अतिहेय शठकोपसूरी के त्रिकरणों से संस्पृष्ट भगवान का हमें स्पर्श नहीं करना चाहिए' । और भगवान से दूर होते होंगे ।

**['नवनीतचोर' कहा जाना भगवान को पसंद है]**

भगवान को **समृद्धिवाले सातों लोकों के कारणभूत और नित्यसूरियों के नाथ** - कहने का तात्पर्य यह है कि वे उभयविभूतिनायकत्वरूप महावैभव से युक्त हैं ।

अपनी नीचता की भांति भगवान की महत्ता का भी वर्णन करने से ही दोनों का अंतर स्पष्ट दिखेगा । यह मानना गलत है कि भगवान को 'नवनीतचोर' कहना अपराध है, अतः उस के लिए पछताना चाहिए ही । क्योंकि नवनीतचोर कहना भगवान का भूषण है, नतु दूषण। यह आमंत्रण सुनकर भगवान प्रसन्न होंगे और अनुग्रह करेंगे ; न तु कभी रुष्ट होंगे । परंतु इसमें एक मुख्य बात यह है कि गोपियों के जैसे भक्तलोग ही यह नाम ले सकते हैं ; नतु शिशुपाल जैसे प्रेमशून्य अथवा द्वेषी जन ।

**[सात वृषभ मर्दन की कथा]**

सात वृषभों के मर्दन करने का इतिहास यह है - भगवान की पटरानियों में एक, नीलादेवी व्रज में यशोदाजी के भाई कुंभनामक गोप की पुत्री होकर अवतीर्ण हुई थीं । जैसे सीताविवाह के लिए जनक चक्रवर्ति ने शिवधनुर्भंग रूप पण रखा था, इसी प्रकार कुंभ ने भी अपनी पुत्री के विवाह के लिए अतिबलिष्ठ सात बैलों को जीतना पण रखा । कोई भी वीर यह काम नहीं कर सका ; तब श्रीकृष्ण ने लीला से ही उन बैलों को मार कर नीलादेवी से (जिन्हें द्राविडी में 'नप्पिन्नैप्पिराट्टि' कहते हैं) परिणय किया । श्रीमद्वेदान्तदेशिक स्वामीजी अपने विरचित यादवाभ्युदय काव्य के चौथे सर्ग में (९८-९९) दो पद्यों से इस वृत्तांत का वर्णन करते हैं ; और इस के टीकाकार अप्पय्य दीक्षित लिखते हैं कि यह कथा हरिवंश की है ।

**[भगवान के गोपाल बनने का रहस्य]**

**नीलादेवी के लिए गोपश्रेष्ठ बनकर -** इत्यादि । आळ्वार का यह अभिप्राय है कि यदुवंश में अवतीर्ण श्रीकृष्ण ने उसे छोडकर इस लिए व्रज पधार कर गोपवंश को अपनाया कि उस कुल में नीलादेवी का अवतार हुआ था और उस के साथ परिणय करने का उन का उद्देश्य था । श्री भक्तिसारसूरी भी अपने तिरुच्चंदविरुत्त नामक दिव्यप्रबंध की ('आयनाहि' इत्यादि) इकतालीसवीं गाथा में ऐसा ही कहते हैं । प्रथमसहस्र के अंतर्गत उक्तगाथा की तथा तिरुप्पावै की अठारहवीं गाथा की टीका मे पूरा विवरण दिया गया है ; वहां देख लें ।।

**निनैन्दुनैन्दुळ् करैन्दुरुहि इमैयोर् पलरुम् मुनिवरुम्**
**पुनैन्द कण्णि नीर्शान्दम् पुहैयोडेन्दि वणङ्गिनाल्**
**निनैन्द एल्लाप्पोरुळ्हटकुम् वित्ताय् मुदलिल् शिदैयामे**
**मनम्शेय् ञानत्तुन् पेरुमै माशूणादो मायोने ।। २ ।।**

**(गाथा) - देवास्ते मुनयोऽपि हन्त बहवस्सर्वे स्वयं चेतसा**
**स्मृत्वा त्वद्गुणसन्ततिं शिथिलितस्वाङ्गा द्रवीभूय च ।**
**मालातीर्थसुगन्धधूपसहितास्त्वां चेन्नमन्त्यच्युतं**
**मायिन्! सर्वपदार्थमूल! मलिनं किं स्यान्न ते वैभवम् ? ।। २ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - आश्चर्यचेष्टित भो भगवन् ! चतुर्मुखादयो देवाः सनकादयो महर्षयश्चान्ये च भवतो गुणाननुचिन्त्य गात्रशैथिल्यम् अवाप्य द्रवीभूतहृदयाश्च सन्तः ग्रथितपुष्पमालिकास्नानीयगन्धधूपादिकं हस्ते बिभ्रतो भवन्तं प्रणमन्ति चेत् सकलपदार्थबीजभूतस्य, स्वरूपविकारलेशमन्तरेण संकल्पमात्रसाधितसकलकार्यसर्गस्य च भवतो महिमा किमहो नापहीयेत ? ।।**

**[अनुतापप्रकाशनस्यापि अयोग्यता इति भावः]**

त्रिकरणतोऽपि भवन्तम् अदूदुषम् इत्यवादीत् अधस्तनगाथायां सानुतापम् ; अनुताप प्रकाशनस्यापि अहम् अनर्हः इत्याह गाथायाम् अस्याम् इति व्याचक्षते महाचार्याः । यद्यपि गाथायां नायमर्थो मुक्तकण्ठः ; तथाऽपि तात्पर्यपर्यवसितो हि असौ एवार्थः । 'वेदराशिषु मम सामर्थ्यं नास्ति' इति चण्डालः किं कथयेत् ? प्रसक्तेरेव विरहात् नैव कथयेत्स तथा । एवम् अहम् अयोग्य इति कथयितुमपि नाहमर्हः प्रेमार्द्रचित्ता ब्रह्मादयो हि तथा कथयितुम् अर्हाः । अथ च गाढविमर्शे कृते महान्तस्ते ब्रह्मादयोऽपि त्वत्सपर्यायाम् अनर्हा इति वक्तव्यं भवति - इत्युच्यते गाथया अनया । **आश्चर्यचेष्टित** - इति संबोधनम् इह साकूतम् । सर्वथाऽपि अयोग्यस्य मम योग्यपुरुषनिर्विशेषम् अङ्गीकरणम्, अथ च अनुतापप्रजननम् इत्यादि सर्वमपि आश्चर्यचेष्टितेषु भवदीयेषु अन्तर्गतम् इत्युक्तं भवति ।

अधस्तात् तृतीयदशके दशमगाथायाम् उक्तः देवानामपि अवलेपभरः, तेषां रजस्तमसोः उन्मेषसमये तादृशी स्थितिः ; सत्वोन्मेषसमयविशेषोऽपि अस्ति खलु सर्वेषामपि । तथाविधेषु समयेषु ते पुष्पगन्धधूप दीपादिपरिचर्योपकरणसनाथास्सन्तः भगवन्तं प्रणन्तुम् उपसर्पन्ति एव हि ; तिरुप्पळ्ळियेळुच्चिनाम्नि सुप्रभातदिव्यप्रबन्धे त्रिचतुरगाथासु तदिदम् उपवर्ण्यते खलु । सैषा सपर्याऽपि भवतो महिम्नो मालिन्यं सम्पादयेन्न किमु ? इति कथ्यते । का कथा मम इति कथितं भवति ।

**[भगवान् जगतः उपादानकारणमपीति कथनम्]**

महिम्नो मालिन्यम् इत्यत्र विवक्षितो महिमा को नाम इति चेत्, स उच्यते **सकलपदार्थबीजभूतस्य** - इत्यादिना । **'अचिदविशेषितान् प्रलयसीमनि संसरतः करणकलेबरैर्घटयितुं दयमानमनाः । वरद ! निजेच्छयैव परवानकरोः प्रकृतिं महदभिमानभूतकरणावलिकोरकिणीम्'** ।। (श्रीरङ्ग.रा.स्त.२-४१) इति भट्टपादानुगृहीतप्रक्रियया भगवति सकलपदार्थबीजभूतत्वम् अवगन्तव्यम् । **स्वरूपविकारलेशमन्तरेण - 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'** (१-४-२३) इति ब्रह्मसूत्रेण उपादानकारणत्वमपि भगवतः एवाभिहितम् । घटाद्युपादानकारणभूतमृदादीनामिव भगवतोऽपि स्वरूपविकारः संभवितुम् अर्हतीति शङ्काव्युदसनाय स्वरूपविकारलेश-मन्तरेणेत्युक्तम् । विकारमन्तरा कथम् उपादानत्वनिर्वाह इति चेत् विशेषणांशे परं विकारो नतु विशेष्यांशे इति सम्प्रति संक्षेपः ।।

**[प्रतिपदार्थ]**

**हिंदी - हे अत्याश्चर्यचेष्टित भगवन् ! ब्रह्मादि देव, सनकादि महर्षि और दूसरे भी ऐसे महात्मा लोग आप के गुणों का चिंतन करते हुए शिथिलगात्र और पिघले हुए चित्तवाले बनकर, गूँथी गई पुष्पमाला, स्नान के लिए तीर्थ, सुगंध और धूप लेकर यदि आप को प्रणाम करें, तो क्या उस से चिंतित समस्त पदार्थों के कारणभूत और, स्वरूप विकार पाये विना ही, अपने संकल्पमात्र से समस्त जगत की सृष्टि करनेवाले आप की महिमा न घटेगी ?**

**[अनुताप प्रकट करने की योग्यता भी नहीं]**

पूर्वाचार्य इस गाथा की टीका में लिखते हैं कि, पहली गाथा में आळ्वार ने कहते हुए पछताया कि मैंने अपने तीनों करणों से भगवान को कलंकित को किया ; इस गाथा में वे कह रहे हैं कि मैं यह बात करने का भी अधिकारी नहीं । यद्यपि इस गाथा में उक्त अर्थ का स्पष्ट वाचक शब्द नहीं मिलता ; तथापि तात्पर्यतः यह अर्थ सिद्ध होता है। शास्त्र का यह एक नियम है कि जिस की प्रसक्ति हो उसी का निषेध हो सकता है । क्या चंडाल कभी यह कह सकेगा कि मुझे वेदाध्ययन करने का सामर्थ्य नहीं ? नहीं कहेगा ; क्यों कि उस को वेदाध्ययन करने का प्रसंग ही नहीं है । इसी प्रकार अब आळ्वार कहते हैं कि 'मैं तो अपनी अयोग्यता बताने का भी अनधिकारी हूं ; प्रेमार्द्रचित्त ब्रह्मादि महात्मा ही वह कर सकते हैं । अथवा ठीक विचार करने पर कहना पडता है कि वे भी आप की सेवा करने योग्य नहीं'। भगवान को **अत्याश्चर्यचेष्टित -** पुकारना साभिप्राय है । योग्यपुरुष की भांति मुझ अयोग्य का भी स्वीकार करना, पीछे पश्चात्ताप पैदा करना इत्यादि सभी उन की आश्चर्यमय लीलाएं हैं । तीसरे दशक की दसवीं गाथा में देवों को गर्वी कहा गया था । परंतु वे सदा ऐसे न रहते हैं । रजस्तमोगुणों के बढ जानेपर वे भगवान से भी विरोध करते हैं । परंतु दूसरे प्राणियों की भाँति उन का भी कदाचित् सत्वगुण उद्बुद्ध होता है । तब वे बहुत भक्तिवाले होकर तीर्थ पुष्प गंध धूप दीप इत्यादि पूजासामग्री के साथ भगवान के पास आकर उन का प्रणाम करते हैं । श्रीभक्तांघ्रिरेणुसूरी ने तिरुप्पळ्ळियेळुच्चि नामक अपने दिव्यप्रबंध की तीन चार गाथाओं में इस अर्थ का सुंदर वर्णन किया है । अब आळ्वार कहते हैं कि ऐसे महामहिम देवों से अनुष्ठित पूजा भी भगवान की महिमा को मलिन बनाए । फिर मेरे बारे में कहने की कौन सी आवश्यकता है ।

भगवान की कौन सी महिमा मलिन होगी ? इसका प्रत्युत्तर है - **सकलपदार्थों के कारणभूत -** इत्यादि । वेदांतशास्त्र बताता है कि भगवान जगत के त्रिविध कारण भी होते हैं । त्रिविध कारण ये हैं - उपादान कारण (या मूलवस्तु), निमित्त कारण (या कर्ता) और सहकारिकारण (उपकरण इत्यादि) । उपादान कारण स्वयं विकार पाकर ही कार्य पैदा करेगा । परंतु भगवान ही एक ऐसे विलक्षण पदार्थ हैं, जो स्वयं विकार पाये विना ही कार्य उत्पन्न करा देते हैं । यह अर्थ बताया गया - **स्वरूप का विकार**

**पाये विना** - इत्यादि से । इस पर प्रश्न यह उठेगा कि यदि भगवान में विकार ही न हो, तो वे कैसे उपादान कारण बन सकेंगे । इसका प्रत्युत्तर इतना ही है कि भगवान के विशेषणभूत चेतन व अचेतन विकार पाते हैं और विशेष्यभूत भगवान तो स्वयं निर्विकार रहते हैं । तथाच उक्त विशेषणों के द्वारा वे उपादान कारण होते हैं ; और स्वयं विशेष्यव्यक्ति निमित्त कारण बनते हैं ।।

**मायोनिहळाय् नडैकत्त वानोर् पलरुम् मुनिवरुम्**
**नीयोनिहळै प्पडैयेन्रु निरैनान्मुहनै प्पडैत्तबन्**
**शेयोनेल्ला वरिवुक्कुम् तिशैहळेल्लाम् तिरुवडियाल्**
**तायोन् एल्ला वेव्वुयिर्क्कुम् तायोन् तानोरुरुवने ।। ३ ।।**

**(गाथा) -** **देवादींश्च मुनीन् बहूनपि सृज त्वं सर्वजन्तूनपी**
**त्येवं तं चतुराननं प्रथमतस्सृष्ट्वाऽप्यगम्यो मतेः ।**
**लोकानप्यखिलान् स्वपादतलतस्स्पृष्ट्वा स्वयं मातृव-**
**द्वात्सल्याम्बुधिरेव सर्वजगतामत्यद्भुतस्वाकृतिः ।। ३ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - विलक्षणजन्मोत्कर्षविशिष्टान् सर्गप्रभृतिकार्यवर्गकौशलयुक्तान् जगद्योनिभूतान् देवमुनिभूतान् दशप्रजापतिमुखान् देवताविशेषान् त्वं सृजेति ज्ञानादिपरिपूर्णं चतुर्मुखब्रह्माणम् उत्पादितवान्, सकलविधानामपि ज्ञानानां दवीयान्, सर्वा अपि दिशः त्रिविक्रमावतारे स्वकीयपादेनः आक्रान्तवान्, सर्वेष्वपि प्राणिषु मातृवत् वत्सलो भगवान्- एतादृशाद्वितीयस्वभावसमन्वितो बत ! ।**

**[त्रिविक्रमावतारेण शीलगुणस्मारणम्]**

अधस्तनगाथाद्वितयेन नैच्यानुसन्धानातिशयप्रकाशनमुखेन स्वस्य भगवद्विषयानुभवे औदासीन्यं प्रकाशितवतो मुनिवरस्य यथाकथञ्चित् आभिमुख्यम् उत्पिपादयिषुः भगवान् स्वकीयसौशील्यगुणप्रभावस्मारणेन सुसम्पादम् अस्य अभिमुख्यम् इति प्रतिपद्यमानः

तस्य गुणस्य प्रथमसाक्षिभूतं त्रैविक्रमापदानं स्मारयामास । पुनरपि स्मरणपथम् आनयामः **'महतो मन्दैस्सह नीरन्ध्रेण संश्लेष एव सौशील्यकार्यम्'** इति प्रोक्तचरम् । तादृशशीलगुणविभूषितस्य भगवत उपसर्पणे वैराग्यम् अनुचितमेव खलु । तथा च शीलगुणकार्यविशेषस्मारणमेव अधुना सदुपायो भविता इति भगवता विचिन्तितं सर्वथा स्थाने । मुनिवरश्च भगवता स्मारितम् इदं त्रैविक्रमापदानं स्वयम् अनुसन्दधानस्सन् विमुखो भवितुम् अभिमुखो भवितुं चाक्षमः इति कर्तव्यतामुग्धः ताम्यति गाथायाम् अस्याम् । विमुखो भवितुम् अक्षम इति यदुक्तम् तद्युज्यते कामम् ; अभिमुखो भवितुं चाक्षमः इति कथम् उच्यते? भगवदनुस्मारित-शीलगुणकार्यध्याने सति आभिमुख्यमेव खलु सद्यो भवितुमर्हति इति चेत्, सत्यम् ; स्वकीयाया अयोग्यताया ध्यानस्य द्रढिमा अविलम्बेन आभिमुख्यजननं रुणद्धि इति वस्तुस्थितिः ।

**[भगवतः सर्वकारणत्वोत्कर्षः]**

गाथायाम् अस्यां पूर्वार्धेन स्वायोग्यतानुसन्धानपूर्वकवैमुख्यस्य प्रधानकारणभूतो भगवतः उत्कर्षातिशयः प्रतिपाद्यते । यद्यपि भगवतः परत्वपिशुनाः सन्ति भूयांसो गुणाः व्यापकत्व-नियन्तृत्व-शरण्यत्व-शक्तत्व- सत्यकामत्वापत्सखत्वादिरूपाः, तथाऽपि सर्वेष्वपि तेषु कारणत्वं प्रकृष्यते । कुतः? अथर्वशिखोपनिषदि **'कश्च ध्येयः'** ? (१-४) इति प्रश्ने **'कारणं तु ध्येयः'**(९-१७) इति प्रतिवचनम् अवतीर्णम् । तुकारोऽत्र एवकारार्थकः । 'जगत्कारणभूतं वस्त्वेव ध्येयम्' इत्युक्तं भवति । शारीरकमीमांसायां चतुरध्याय्याम् उभावध्यायौ कारणवस्तुनिरूपणे हि प्रवृत्तौ । यदाहुः **'कारणत्वमबाध्यत्वं पूर्वद्विकप्रमेयम्'** इति । **अबाध्यत्वम्** - प्रथमाध्यायनिरूपिते कारणत्वे संभवतां बाधानां (चोद्यानां) परिहारमुखेन तस्य सम्यक् प्रतिष्ठानमिति यावत् । एवं च द्वौ अध्यायौ परमपुरुषस्य कारणत्वस्थेम्ने प्रवृत्तौ इति स्थितम्। एवंविधस्य कारणत्वस्य भगवदुत्कर्षसीमा-भूमित्वावधारणात् तथाविध उत्कर्षोऽत्राभिधीयते।

**[जगत्कारणत्वविवरणं उपसर्पणभयप्रकाशनञ्च]**

भगवतः कारणत्वं सद्वारकम् अद्वारकं चेति द्विविधम् । एतदुभयमपि अत्र उपवर्ण्यते । **'यो ब्रह्माणं विदधाति पूर्वम्'** (श्वे.उ.६-१८) इत्याम्नातरीत्या चतुर्मखब्रह्मणस्सर्गः अद्वारकः ।

**ज्ञानादिपरिपूर्णं चतुर्मुखब्रह्माणमुत्पादितवान्** - इत्यनेन अद्वारकसृष्टिस्सा कथिता भवति । **विलक्षणजन्मोत्कर्षविशिष्टान्** - इत्यादिना वाक्येन सद्वारकसृष्टिश्च प्रोक्ता भवति। भगवान् चतुर्मुखब्रह्माणं सृष्ट्वा अथ तस्मै एवम् आदेशम् अकार्षीत् भोः ! त्वं दशप्रजापतिमुखान् देवताविशेषानुत्पादयेथाः' इति । विलक्षणेत्यादीनि विशेषणानि चतुर्मुखसृज्यभूतेषु देवताविशेषेषु अन्वयम् ऋच्छन्ति । एवम् अद्वारकसद्वारकसृष्टिमुखतः परत्वैकान्तिक-जगत्कारणत्वविशिष्टः खलु स परमः पुमान् इति तस्योत्कर्षम् अनुसन्धाय तमुपसर्पितुं बिभेमि इति कथितवान् भवति मुनिवरः । **सकलविधज्ञानानामपि दवीयान्** - इत्येतदपि विशेषणं परत्वप्रतिपादनपरं वेदितव्यम् ।

**[त्रिविक्रमावतारस्मरणेन अपसरणेच्छा शिथिला भवति]**

अथ **सर्वा अपि दिशः त्रिविक्रमावतारे स्वकीयपादेन आक्रान्तवान्** - इत्येतद्विशेषणं मुनिवरेण न स्वबुद्ध्या निवेश्यते ; स्वस्य आभिमुख्यसम्पिपादयिषया भगवता स्मारितं यत्तत् अनुसन्धीयते । 'अयि भोः शठकोपमुने ! मत्प्रकृतिं किं न जानाति भवान् ? गुणागुणनिरूपणे दृष्टिम् अभिधाय वसिष्ठचण्डालविभागमन्तरेण च युगपत्सर्वेषां शिरस्सु पादं निहितवान् खलु अहम् ; एतादृशस्य मम 'अमी योग्याः, अमी अयोग्याः इति विभागो नैवास्ति खलु । अतश्च अयोग्यतानुसन्धानेन अपसरणेच्छा नैवोचिता भवतः' इत्युक्तवानिव भगवान् । अथ मुनेः अपसर्पणरुचिः मनागिव स्थगिता भवति इति मूलशब्दसंदर्भवेद्यम् एतत् ।।

**[प्रतिपदार्थ]**

**(हिन्दी) - 'श्रेष्ठजन्मवाले और सृष्ट्यादि कार्य में समर्थ तुम देव, मुनि, प्रजापति इत्यादि जगत्कारण देवों की सृष्टि करो' इत्यादि आज्ञा देकर (तदुचित ज्ञान शक्ति इत्यादि गुण विशिष्ट) चतुर्मुख ब्रह्मा की सृष्टि करनेवाले, सकलविधज्ञानों से भी परे, (त्रिविक्रमावतार के समय) समस्त दिशाओं को अपने श्रीपादों से नापनेवाले और समस्त प्राणियों के प्रति माता के समान वत्सल भगवान - अहो ! ऐसे एक विलक्षण स्वभाववाले हैं ।।**

**[त्रिविक्रमावतार शीलगुण का स्मरण कराता है]**

पूर्वोक्त दो गाथाओं में नैच्यानुसंधान करते हुए भगवदनुभव करने में विमुख होने की इच्छा करनेवाले आळ्वार को अपने सौशील्य गुण की याद दिलाकर लौटाने की इच्छा से भगवान ने उस गुण के पहले साक्षी त्रिविक्रमावतार चरित्र की याद करायी । भगवान ने यह बहुत अच्छा काम किया । इस दशक की अवतारिका में बताया गया है कि स्वयं महान होकर नीचों से मिलने-जुलने का गुण सौशील्य है । भगवान का यह गुण जाननेवाला भक्त उन से मिलने में क्यों कर संकोच करेगा ? अतः भगवान ने निश्चय किया कि अपने सौशील्यगुण के प्रकाशक चरित्र का स्मरण कराना ही आळ्वार को लौटाने का श्रेष्ठ उपाय होगा । इस अभिप्राय से भगवान के स्मारित इस त्रिविक्रमावतारवृत्तांत का अनुसंधान करते हुए आळ्वार, प्रकृत गाथा में भगवान से दूर हट जाने में अशक्त होकर, तथापि उनके समीप पहुंचने में भी अशक्त होकर, एक विलक्षण मझली अवस्था पा रहे हैं । अर्थात् शीलगुण का अनुसंधान करने पर उन्हें भगवान के पास जाने का विचार होता है ; इतने में अपनी अयोग्यता का सुदृढ स्मरण आकर, उन्हें पीछे हटाता है । अतः वे बीच में खडे हो जाते हैं ।

**[भगवान के जगत्कारणत्वरूपी परत्व का वर्णन]**

प्रकृत गाथा के पूर्वार्ध में भगवान की विलक्षण महिमा का (माने परत्व का) वर्णन किया जाता है, जिस के स्मरण से आळ्वार को अपनी नीचता पर ध्यान देना पडा। यद्यपि भगवान के परत्व के सूचक व्यापकत्व, नियन्तृत्व शरण्यत्व, शक्तत्व, सत्यकामत्व, सत्यसंकल्पत्व आपत्सखत्व इत्यादि अनेक गुण होते हैं, जिन में से किसीका भी वर्णन किया जा सकता है । तथापि इन सब गुणों की अपेक्षा जगत्कारणत्व ही श्रेष्ठ माना जाता है । अथर्वशिख उपनिषद में यह प्रश्न - **'कश्च ध्येयः'** (१-४) (किस का ध्यान किया जाए) और यह उत्तर - **'कारणं तु ध्येयः'** (२-१७) (जगत्कारण वस्तु का ही ध्यान करना चाहिए) देखे जाते हैं । अन्यत्र भी ब्रह्म का लक्षण बताने के प्रसंगों में जगत्कारणत्व ही मुख्यतया बताया गया है । चार अध्यायवाले ब्रह्मसूत्र में पहले दो अध्यायों में इस कारणत्व की ही चर्चा चलती है । तथाहि - पहले अध्याय का नाम कारणाध्याय है । इस में वेदांतों में अधीयमान नानाप्रकार के वचनों के विवेचनपूर्वक

यह अर्थ स्थापित किया गया है कि परब्रह्म ही जगत्कारण है । दूसरे अध्याय का नाम है अबाधाध्याय । इस में ब्रह्म के जगत्कारणत्व के विषय में दूसरों से किये जानेवाले नानाविध आक्षेपों का समाधान किया गया है ; (एवं एतदुपयुक्त परपक्षखंडन इत्यादि दूसरे भी कतिपय विषय उपवर्णित हैं ।) इस प्रकार ब्रह्मसूत्र का आधा भाग परब्रह्म के कारणत्व का ही वर्णन कर रहा है । अत: समझना चाहिए कि भगवान की महिमा का सूचक मुख्य गुण उन का जगत्कारणत्व ही है । अत: आळ्वार भी यहाँ उस कारणत्व का ही वर्णन करते हैं ।

**[जगत्कारणता का विवरण, पास जाने के भय का प्रकाशन]**

भगवान का यह जगत्कारणत्व (एवं तदनुगुण सृष्टि) दो प्रकार का है- अद्वारक व सद्वारक । ये दोनों यहां पर वर्णित हैं । स्वयं भगवान ही चतुर्मुख ब्रह्मा की जो सृष्टि करते हैं, यह अद्वारक सृष्टि, और बाद में ब्रह्मा के द्वारा जो सृष्टि कराते हैं वह सद्वारक सृष्टि कहलाती है । प्रकृत गाथा में **चतुर्मुखब्रह्मा की सृष्टि करनेवाले** - कहने से अद्वारक सृष्टि का, और **श्रेष्ठजन्मवाले** इत्यादि लंबे वाक्य से सद्वारक सृष्टि का वर्णन किया जाता है । भगवान ने ब्रह्मा की सृष्टि कर उसे यह आज्ञा दी कि 'तुम दस प्रजापति इत्यादि अनेक देवों की सृष्टि करो'। इन देवों के दो विशेषण दिये जाते हैं- श्रेष्ठजन्मवाले इत्यादि । इन सब का परमतात्पर्य है कि ये देव, देव मनुष्यादि सकलप्राणियों की सृष्टि करने में समर्थ होते हैं । तथा च इस प्रकार अद्वारक व सद्वारक जगत् सृष्टि करनेवाले परात्पर परमपुरुष की श्रेष्ठता का अनुसंधान करते हुए उन के पास जाने में आळ्वार अपना भय प्रकाशित करते हैं । इस के अनुगुण ही भगवान का यह भी एक विशेषण दिया जाता है - सकलविधज्ञानों से भी परे । जो ज्ञान का भी विषय न हो, वे कितने महान होंगे !

**[त्रिविक्रमावतार के स्मरण से हटने की इच्छा शिथिल]**

आगे, **समस्त दिशाओं को अपने श्रीपादों से नापनेवाले** इत्यादि वाक्य आळ्वार से अपनी बुद्धि के द्वारा विलिखित नहीं ; बल्कि उन को ठिकाने पहुंचाने भगवान से स्मारित अर्थ का अनुसंधानमात्र है । अर्थात भगवान का यह अभिप्राय हुआ - 'अहो शठकोपमुने ! तुम यह क्या कर रहे हो ? क्या तुम मेरा स्वभाव नहीं जानते ? मै

ने त्रिविक्रमावतार में मानवों के गुणदोषों का ख्याल न करते हुए, सब के सिर पर एक समान अपना चरण रखा था न ? क्या मैं ने उस समय किसी को नीच मान कर छोड दिया ? नहीं । ऐसे मुझे, 'यह योग्य है ; अयोग्य है' इत्यादि विवेचन अपनी दृष्टि में कभी होता ही नहीं । अतः तुम अपने को नीच मानते हुए पीछे हटने का विचार मत करो'। यह जानने पर आळ्वार का चित्त जरा प्रसन्न हुआ और भगवान को छोड कर दूर भाग जाने की उन की इच्छा दूर हुई । यह अर्थ मूलगाथा के शब्द संदर्भ से सूचित किया जाता है ।।

**तानोरुरुवे तनिवित्ताय् तन्निल् मूवर् मुदलाय**
**वानोर् पलरुम् मुनिवरुम् मत्तुम् मत्तुम् मुत्तुमाय्**
**तानोर् पेरुनीर् तन्नुळ्ळे तोत्ति अदनुळ् कण्वळरुम्**
**वानोर् पेरुमान् मामायन् वैहुन्द नेम्बेरुमाने ।। ४ ।।**

**(गाथा) - मूलं सर्वजगत्ततेरपि हरिर्यस्त्वेकमूर्तिः प्रभु-**
**स्सङ्कल्पाद्बहुधा भवन् विजयते देवाश्च मूर्तित्रयम् ।**
**एवं ते मुनयोऽपि मानवगणास्तिर्यङ्मुखास्स्थावरा-**
**स्सर्वं च स्वयमेव चाब्धिशयनो वैकुण्ठराण्मे प्रभुः ।। ४।।**

**[प्रतिपदार्थः]**

**विवरणम् - स्वय् अद्वितीय एव सन् सहायान्तरनिरपेक्षहेतुभावम् आपद्यमानः स्वयमेव त्रिमूर्तिरूपस्सन् देवमनुष्यतिर्यगादिसर्वचिदचिच्छरीरको भूत्वा, स्वयमेव एकार्णवमध्ये प्रादुर्भूय तत्र शयानो नित्यसूरिनाथो विचित्राश्चर्यगुणचेष्टितादिविशिष्टः वैकुण्ठाधिपतिः अस्मच्छेषी सः।।**

**[भगवत्कैङ्कर्यकर्तृत्वं शेषत्वम्]**

गाथायाः अस्या अवसाने **अस्मच्छेषी सः** इति यदुक्तम् एतदेवात्र जीवनाडीभूतम्। 'कैङ्कर्यकर्ता शेषः, कैङ्कर्यप्रतिसंबन्धी शेषी' इति तावत्सम्प्रदायः । भगवतः शेषित्वेन

प्रतिपादनमिह स्वस्य शेषत्वप्रतिपादने विश्राम्यति । भगवत्किङ्करभावे नाहमर्हः इति यदासीत् अयोग्यतानुसन्धानं मुनिवरस्य तत् इदानीं मनागिव गलति इति गम्यते । तस्य शेषित्वसिद्धये मया शेषवृत्तिकरणम् ऊरीकार्यमेव इति प्रतिपादने तात्पर्यम् अस्याः गाथायाः इति प्रतिपत्तव्यम् । कैङ्कर्यकरणम् अप्राप्तविषये अनुचितम् ; प्राप्तविषय एव हि शोभनं तत् ; भगवानेव प्राप्तविषय एतस्य इति प्रपञ्चयति गाथायाः अवशिष्टो भागः ।

**[जगतः त्रिविधमपि कारणं परं ब्रह्मैव]**

**स्वयमद्वितीय एव सन् सहायान्तरनिरपेक्षहेतुभावमापद्यमानः** - उपनिषदि **'सदेव सोम्य! इदमग्र आसीदेकमेवाद्वितीयम्'** (छां.उ.६-२-१) इति श्रूयते ; अत्र (एव, एकम्, अद्वितीयम्) इति पदत्रयं मिलित्वा उपादानकारणं सहकारिकारणं निमित्तकारणं चेति त्रिविधमपि कारणं परं ब्रह्मैवेति प्रतिष्ठापयतीति वेदान्तिनः । तद्वत् अत्रापि **अद्वितीय-एव-सहायान्तरनिरपेक्ष** पदैः त्रिभिरपि स एव त्रिविधकारणमपि इति द्योत्यते । चिदचिच्छरीरकस्सन् उपादानकारणम् ; संकल्पसनाथस्सन् सहकारिकारणम् ; निमित्तकारणत्वं तु उपपादननिरपेक्षम् । घटपटादिनिर्माणे कुलालतन्तुवायादीनामिव जगत्सृष्टौ ज्ञानशक्तिभरितस्य भगवतः निमित्तकारणत्वम् अविवादम् इति ।

**[मध्ये विरिञ्चगिरिशं प्रथमावतारः]**

**स्वयमेव त्रिमूर्तिरूपस्सन्** - इक्ष्वाकुवंशेऽवतीर्य तद्वंश्येषु अन्यतम इव, यदुवंशेऽवतीर्य यादवेषु अन्यतम इव च यथा बभूव, तथैव ब्रह्मरुद्रयोः मध्येऽवतीर्य ताभ्यां सह परिगणनीयोऽभूत् भगवान् । अत्र **'ब्रह्मेशमध्यगणना गणनाऽर्कपङ्क्तौ इन्द्रानुजत्वमदितेस्तनयत्वयोगात् । इक्ष्वाकुवंशयदुवंशजनिश्च हन्त ! श्लाघ्यान्यमून्यनुपमस्य परस्य धाम्नः'** ।। (अतिमानुषस्तव १५) इति श्रीकूरेशमिश्रसूक्तिः, **'मध्ये विरिञ्चगिरिशं प्रथमावतारः तत्साम्यतः स्थगयितुं तव चेत्स्वरूपम्'** (श्रीरङ्गराजस्तवोत्तरशतके -५१) इति श्रीभट्टपादश्रीसूक्तिश्च अनुसन्धेये ।

**[विचित्राश्चर्यगुणचेष्टितविशिष्टत्वम्]**

**देवमनुष्यतिर्यगादिसर्वचिदचिच्छरीरको भूत्वा** - अत्र मूलस्थपदानि 'देवमनुष्यादिसर्वपदार्थसृष्ट्यर्थम्' इत्येवंविधम् अनुवादमपि सहेरन् । घटते ह्युभयविधोऽप्यर्थः ।

**एकार्णवमध्ये प्रादुर्भूय तत्र शयानः** - अत्र **'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणस्स्मृतः'** ।। (म.स्मृ.१-१०) इत्येतत् मनुस्मृतिवचनमनुसन्धातुम् अलम् । **विचित्राश्चर्यगुणचेष्टितादिविशिष्टः** इति कथनमिह साकूतम् ; 'सर्वथाऽप्यनर्होऽहं भगवन्तं नैवोपसर्पेयं परात्परम्' इति कृतसङ्कल्पमपि मां शिथिलसङ्कल्पं हि कलयति असौ इति विवक्षुः मुनिवरः विशेषणम् इदं विन्यस्यति । तत्तत्समयानुगुणगुणाविष्कारेण स्वयमेव असौ जयशीलः भवति यत् तत् एतदेव महदाश्चर्यमिति मुनिवरस्य भावः । अन्ततो वैकुण्ठाधिपतिः इत्येतदपि साकूतम् । वैकुण्ठनाथोऽसौ भगवान् यदि वैकुण्ठमेव अधितिष्ठेत् तर्हि शीलगुणप्रकाशनं कथम् अस्य घटेत? 'परमसाम्यापन्नाः एव खलु तत्र विराजन्ते, मन्देष्वेव प्रकाशप्राचुर्यं लब्धुं प्रभविष्णुः शीलगुणः तत्र असत्कल्पः एव हि स्यात्' इति मन्यमानो वैकुण्ठं विहाय अत्रागतः इति सूचितं भवति ।।

**[प्रतिपदार्थ]**

**हिंदी - स्वयं अद्वितीय ही रहकर दूसरे सहायक की अपेक्षा के बिना कारण बननेवाले, स्वयं त्रिमूर्तिरूपी और देव, मनुष्य, तिर्यक् इत्यादि समस्त चेतनाचेतनरूपी (माने उन के अंतर्यामी) होकर, महार्णव के मध्य प्रकट होकर वहां शयन करनेवाले, नित्यसूरियों के नाथ और अत्यद्भुत गुण चेष्टा इत्यादि विशिष्ट श्रीवैकुंठनाथ हमारे शेषी हैं।।**

**[भगवान के कैंकर्य करना ही शेष का स्वरूप है]**

इस गाथा के अंत में प्रयुक्त हमारे शेषी शब्द ही इस का प्रधान भाग है । आचार्य बताते हैं कि कैंकर्य (यानी सेवा) करनेवाला शेष और कैंकर्य पानेवाला शेषी है। भगवान को शेषी बताने का अर्थ चेतन को शेष बताना है । तथा च, मालूम पडता है कि आळ्वार की अपने को भगवान की सेवा करने के अयोग्य मानने की भावना जरा ढीली पड गयी है। अर्थात उन के मन में अब यह भावना उत्पन्न हुई है कि यदि भगवान शेषी हों, तो हमें शेष होना चाहिए; और इस लिए उन की सेवा भी करनी चाहिए ; उन को छोडकर दूर भाग जाना अनुचित है । योग्य व्यक्ति के विषय में की जानेवाली सेवा ही मंगल-कारक होगी और अयोग्य व्यक्ति की सेवा दुःखप्रद एवं

स्वरूपविनाशक होगी । अतः गाथा के अवशिष्ट भाग में भगवान की योग्यता (माने स्वामित्व) का वर्णन किया जाता है ।

**[भगवान जगत के त्रिविधकारण हैं]**

**स्वयं अद्वितीय ही रहकर दूसरे सहायक की अपेक्षा के बिना कारण बननेवाले** - छान्दोग्योपनिषद का यह वाक्य है - **'सदेव सोम्य ! इदमग्र आसीत् एकमेवाद्वितीयम्'** । (छां.उ. ६-२-१) इस वाक्य में जगत्कारणवस्तु 'सत्' कहलाती है ; ये तीनों शब्द - एव, एकम् व अद्वितीयम्, मिलकर यह अर्थ बताते है कि वह 'सत्' स्वयं जगत के उपादानकारण, सहकारिकारण, व निमित्तकारण रूप तीनों कारण बनता है । इसी प्रकार प्रकृत गाथा के भी ये तीन शब्द- 'अद्वितीय, ही, व दूसरे सहायक की अपेक्षा के बिना', भगवान को उक्त त्रिविध कारण बताते हैं । ब्रह्म चिदचिच्छरीरक उपादान कारण, संकल्पविशिष्ट सहकारि कारण और ज्ञानशक्त्यादिविशिष्ट निमित्तकारण होता है ।

**[ब्रह्मरुद्रों के बीच भगवान का पहला अवतार]**

**स्वयं त्रिमूर्तिरूप होनेवाले** - भगवान जैसे श्री रामचंद्र के रूप में इक्ष्वाकु वंश में अवतीर्ण होकर उस वंश के राजाओं में एक बने और श्री कृष्णचंद्र के रूप में यदुवंश मे अवतार लेकर यादवों में एक हुए, ठीक इस प्रकार ब्रह्मरुद्रों के साथ विष्णु नाम से अवतीर्ण होकर उन के साथ गिनती पाते हैं। अत एव श्री कूरेश स्वामीजी ने अतिमानुषस्तव में (२५) कहा - **'ब्रह्मेशमध्यगणना'** इत्यादि । यह तात्पर्य है - ब्रह्मरुद्रों के बीच में गिना जाना, बारह सूर्यों की श्रेणी में गिनती पाना, अदिति के पुत्र (उपेंद्र) होने से इंद्र का छोटा भाई होना, इक्ष्वाकुवंश व यदुवंश में जन्म लेना, ये सभी परम धाम कहलानेवाले अद्वितीय आप के शुभ अवतार हैं । श्री भट्टर स्वामीजी ने श्रीरङ्गराजस्तव-उत्तरशतक (५१) में कहा - **'मध्ये विरिञ्चगिरिशं प्रथमावतारः'** (ब्रह्मा व रुद्र के बीच आप का पहला अवतार हुआ।)

**[भगवान अत्यद्भुत गुणों और चेष्टाओं से विशिष्ट हैं]**

**देव मनुष्य तिर्यक् इत्यादि समस्त चेतनाचेतनरूपी होकर** - वेदांतियों का सिद्धांत है कि भगवान समस्त चेतन व अचेतन पदार्थो के अंतर्यामी होने से तत्तत्

चेतनाचेतन वस्तु कहलाते हैं । मूल गाथास्थ **वानोर् पलरुम्** इत्यादि प्रकृत दूसरे पाद का यह भी अर्थ हो सकता है कि, 'देव मनुष्यादि समस्त पदार्थों की सृष्टि करने के लिए' । यह भी अर्थ ठीक लगता है । **महार्णव के मध्य प्रकट होकर वहां शयन करनेवाले -** यह तो नारायण का लक्षण है ; जो मनुस्मृति में भी बतलाया गया । **'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' ।।** (म.स्मृ. १-१०) यह भाव है - नार शब्द का अर्थ जल, पहले एक समय (प्रलयकाल में) भगवान के रहने का स्थान था ; अतः उन का नाम हुआ नारायण । **अत्यद्भुत गुण चेष्टा इत्यादि विशिष्ट** कहने का यह भाव है - यह दृढ संकल्प कर कि 'सर्वथा नीच मैं भगवान के पास नहीं जाऊंगा', बैठे रहे मेरे संकल्प को भी ढीला बनानेवाले भगवान के गुण आदि अत्याश्चर्यमय हैं ; तत्तत्समय के अनुगुण विशेष गुणों के प्रकाशन करते हुए भगवान मेरे संकल्प को भी दूर कर सर्वदा स्वयं विजयी होते हैं । यह बात सर्वथा सत्य है । इस दिव्यप्रबंध के प्रत्येक दशक के प्रारंभ में भी आळवार के मन में एक-एक भावना रहती है जो उस दशक में भगवान के किसी विशेष गुण के अनुभव से बदल जाती है । यह तो अवश्य ही भगवान का आश्चर्यमय चेष्टित है। अंत में **श्री वैकुंठनाथ** कहने का यह भाव है - वैकुंठनाथ ये भगवान यदि वैकुंठ में ही विराजते, तो इन का शीलगुण सर्वथा अप्रकाशित ही रह जाता; क्यों कि उधर रहनेवाले नित्य व मुक्त लोग सभी सर्वथा दोषों से दूर और भगवान के समान होते हैं, अतः उन के विषय में शील गुण का प्रकाशन नहीं किया जा सकता ; वह गुण तो नीचों के विषय में ही प्रकाशित होनेवाला है । अतः भगवान अपने शील गुण का प्रकाशन करते हुए वैकुंठ छोडकर इस भूमंडल पर पधारे । अतः हमें भी इस गुण का अनुभव करने केलिए उन से मिलना चाहिए ।।

**मानेय् नोक्कि मडवाळै मार्बिल् कोण्डाय् माधवा**
**कूनेशिदैय वुण्डैविल् निरत्तिल् तेरित्ताय् गोविन्दा**
**वानार् शोदि मणिवण्णा मधुसूदा नीयरुळाय् उन्**
**तेने मलरुम् तिरुप्पादम् शेरुमारु विनैयेने ।। ५ ।।**

**(गाथा) - लक्ष्मीं तां मृगलोचनां शुभगुणां धृत्वा स्वयं वक्षसि**
**श्रीमन् ! चापमिव स्वयं किल हरे! कुब्जामृजूकृत्य ताम् ।**

**गोविन्दो मधुसूदनो मणिनिभस्त्वं ज्योतिषां भास्वर-**
**स्त्वत्पादाब्जयुगं कथं बत! सुधास्यन्दि त्वघी प्राप्नुयाम्?।।५।।**

**[प्रतिपदार्थः]**

**विवरणम् - हरिणीनयनसदृशनयनां मुग्धां महालक्ष्मीं वक्षस्स्थले विनिवेशितवन् हे माधव ! (कंसकैङ्कर्यनिरतायाः) कुब्जायाः स्थगुं अनायासेन विनिवर्त्य तस्याः आर्जवमुत्पादितवन् गोविन्द ! नित्यविभूतिव्याप्ततेजःपुञ्ज ! मणिसवर्ण ! मधुसूदन भगवन्! महापापी सोऽहं यथा त्वदीयं मधुस्यन्दिचरणारविन्दं प्राप्नुयां तथा नाम त्वमनुगृहाण ।।**

**[आर्त्याविष्करणम्]**

प्रथमद्वितीयगाथाद्वितयेन अयोग्यतानुसन्धानतो दूरतोऽपसर्पणोन्मुखः इवासीत् मुनिवरः ; अथ भगवति सदुपायेन स्वशीलगुणं संस्मारितवति सति मुनिवरस्य संजातम् अपसर्पणरुचिशैथिल्यम् तृतीयचतुर्थगाथाद्वितये समसूच्यत । ततो भगवान् स्वयमेव तेन सह संश्लेष्टुकामोऽपि सन् 'स्वकीयम् आर्त्यतिशयं स्वयमेव स उद्धाटयन् 'आक्रन्दतु ; परस्तात् द्रक्ष्यामः' इति हृदि कलयन् जोषमवतस्थे । अस्यामा अवस्थायाम् मुनिवरः स्वकीयम् आर्तिभरम् आविष्करोति गाथयाऽनया ।

**[श्रियं पुरस्कृत्य प्रपत्तिः]**

**यथाऽहं त्वदीयं मधुस्यन्दिचरणारविन्दं प्राप्नुयां, तथा त्वमनुगृहाण** इत्येषा प्रार्थनाऽवधेया। महालक्ष्मीसनाथवक्षस्कः इति प्राथमिकं संबोधनम् । तस्याः पुरुषकारबलेन स्वसमीहितसिद्धिम् अव्यभिचरिष्णुं मन्यते मुनिवरः । **'लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्'** ।। इति भगवच्छास्त्रोक्तरीत्या संसिद्धपुरुषकारभावायाः श्रियः पुरस्कारे सति समीहितसिद्धिः अमोघा इति हि वस्तुस्थितिः। लक्ष्म्याः नयनसौभाग्यवर्णनं यत्कृतमिह तत् तत्कटाक्षपातलिप्सास्फोरकं मन्तव्यम् । हरिणीत्यादिना महता विशेषणवाक्येन कथितोऽर्थः **माधव !** इत्यनेन लघुना पदेन उपसंह्रियते।

**[भगवतः शीलगुणस्य प्रकाशनम्]**

अथ द्वितीयपादस्थितेन विशेषणेन कंसकिङ्कर्यां कुब्जायाम् अनुग्रहकर्तृत्वख्यापनमुखेन 'नीचोऽहमपि तथाऽनुग्राह्यः इति सूचयति मुनिवरः । कुब्जायाः कथा कृष्णावतारे सुप्रसिद्धा।

कंसचोदितेन अक्रूरेण मथुरापुरीमानीतो मुकुन्दः तत्रत्यमहावीथ्याम् आगच्छति कंसभवनजिगमिषया; तत्र पथि यदृच्छया दृष्टा नैकवक्रानाम्नी काचन कुब्जा कंसस्य चन्दनादिसुगन्धद्रव्यसज्जीकरणकर्मणि नियुक्ता नानाविधचन्दनसंभृतपात्रहस्ता । तामेनाम् अवलोक्य कृष्णः **'सुगन्धमेतद्राजार्हं रुचिरं रुचिरानने !। आवयोर्गात्रसदृशं दीयतामनुलेपनम्'**।। (वि.पु.५-२०-६) (**आवयोः -** अग्रजन्मनः बलरामस्य, मम च इत्यर्थः।) इत्यपेक्ष्य, अथ प्रेमविवशया तया अनुलिप्तगात्रो भूत्वा तत्प्रत्युपकाररूपेण आजन्मनः तस्याः कृष्णस्य सौशील्यातिशयम् अत्यद्भुतम् उपपादयति । तथा हि तत्रत्याः अमी श्लोकाः - **'ततस्तां चुबुके शौरिरुल्लापनविधानवित्। उत्पाट्य तोलयामास द्व्यङ्गुलेनाग्रपाणिना । चकर्ष पद्भ्यां च तदा ऋजुत्वं केशवोऽनयत् ।। ततस्सा ऋजुतां प्राप्ता योषितामभवद्वरा । विलासललितं प्राह प्रेमगर्भभरालसम्। वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै ।। एवमुक्तस्तया शौरिः रामस्यालोक्य चाननम् । प्रहस्य कुब्जां तामाह नैकवक्रामनिन्दिताम् । आयास्ये भवतीगेहमिति तां प्रहसन् हरिः । विससर्ज जहासोच्चैः रामस्यालोक्य चाननम्'** ।। (वि.पु.५-२०-९,१०,११,१२,१३) इति। अत्र बहुषु पदेषु कृष्णस्य शीलगुणप्रकाशः प्रेक्ष्यः ।

श्रीरामचरितेऽपि कुब्जाकथा काचिदायाति; तामप्यत्र व्याख्यातारः आचार्यवर्याः अनुस्मारयन्ति । कुब्जा नाम मन्थरा । तस्यां दाशरथिना नानुग्रहः कृतः । अपितु बाल्ये रामचन्द्रो लघुतरधनुष्पाणिः भूत्वा क्षत्रियकुलानुरूपं विहरन् चापतो मृण्मयीं गुलिकाम् उदमोचयत् ; सा च कुब्जायाः मन्थरायाः तनौ कुटिलप्रदेशविशेषे न्यपतत् । नैतत्कर्म रामेण मात्सर्यतः कृतम् ; केवलं क्रीडावशात् कृतम् । सा तु कुब्जा 'राजकुमारः इत्यवलेपभरेणैवं कृतवान् रामः' इति मन्यमाना तदात्वे प्रतिक्रियां कर्तुमशक्ता प्राप्तसमये करवाणि इति हृदि निगूहितामर्षा स्थिता समयं प्रतीक्ष्य अभिषेकविघ्नम् उदपादयत् इति कथा । वाल्मीकिरामायणे असदपि चरित्रमिदं रामायणान्तरे स्थितम् अनुसन्धीयते । श्रीविष्णुपुराणोपात्तकुब्जाकथायाः इव एतत्कथाया अपि बोधकस्सन्नेव मूलगाथावाक्यसंनिवेशः अवतिष्ठते । अत एव एतामपि कथामिह व्याचचक्षिरे आचार्याः ।

### ['सर्वेऽप्यपराधाः अवधूतमौनिशिरसि']

द्वितीयपादान्ते गोविन्देति संबोधनमस्ति। गोविन्दनामवत्त्वं कृष्णे एव हि प्रसिद्धम् ; रामावतारीयकथाविवक्षणे सति गोविन्द इति संबोधनं कथम् उपपद्यते इत्याशङ्क्य द्वेधा समादधिरे;

**'भूर्भूमिरचलाऽनन्ता ... गौरिला कुम्भिनी क्षमा'** (अ.को.२-१-२,३) इत्यमरकोशरीत्या गोशब्दो भुवमपि वक्तीति कृत्वा भूपालकः इत्यर्थवर्णनम् एकः प्रकारः (२) गोविन्देति कृष्णः एव संबोधितो भवति कामम्; कुत्सितचेष्टितकरणापराधस्य कृष्णे एव सुघटत्वात् रामकृतमपि चेष्टितमेतत् कृष्णे अन्वारोप्यते इति समाहितेः द्वितीयः प्रकारः । अत्र तावदाचार्यणां सूक्तिरेषा **'यथा सर्वेऽप्यपराधाः अवधूतमौनिशिरसि'** इति । एतत्तु द्राविडवाचि प्रसिद्धस्य 'पोम्पळियेल्लाम् अमणन् तलैयोडे' इत्याभाणकस्य प्रतिच्छन्दः । अन्यायधन्यनाम्ना राज्ञा परिपालितायां क्वचन नगर्यां कोऽपि तस्करः कस्यचन गृहे चोरयितुं गतः कुड्ये अपवरकं कृत्वा प्रविशन् कुड्यपातेन म्रियते स्म ; प्रभाते विदितैतदुदन्ताः चोरस्य कलत्रपुत्रादयः समागत्य समीक्ष्य राज्ञः सकाशे अभियोगं चक्रुः 'वधापराधनिमित्तेन गृहस्वामी दण्डयितव्यः' इति । अथ राज्ञाऽऽहूतो गृहस्वामी पृष्टः प्रत्युवाच - 'नैष ममापराधः, कुड्यनिर्माता घनतरं कुड्यं यतो न निरमिमीत, तत एव कुड्यपातः समजनि, मृतिश्चास्य समभूत् ; स एव अपराधी, स एव दण्डनार्हः' इति । निशम्य एतत् राजा गृहस्वामिनं विसृज्य कुड्यनिर्मातारम् आकार्य 'त्वमेव दण्ड्योऽसि' इत्याह । स च प्राह -'कुड्यार्थं मृत्पिण्डदाता कर्मचरः सलिलम् अधिकम् उपयोज्य मृत्पिण्डं चक्रे ददौ च मह्यम्; अत एव कुड्ये घनत्वं नासीत्; अतश्च मृत्पिण्डनिर्माता प्रष्टव्यः' इति । अथ भूपतिः तम् इमम् उत्सृज्य मृत्पिण्डकारकम् आजुहाव। स पृष्टः प्रत्यब्रूत - 'अहं किं कुर्याम् ? कुलालो बृहत्तरं घटम् अदात् च; अत एव तोयमधिकं पतितं मृत्पिण्डे ; तत एव च अयमनर्थः समजनि; स एव कुलालो दण्ड्यः' इति । अथ राजा तं विहाय कुलालम् आनाय्य पप्रच्छ ; स च उदैरिरत् - 'अहं तु लघुतरमेव घटं निर्मातुम् ऐच्छम् ; काचन गणिका मम वीथ्यां गतागतं कुर्वती मम आन्यपर्यम् उदपादयत् ; तत एव घटो बृहत्तरोऽभूत् सैव दण्ड्या' इति । तदनु भूपो विसृज्य कुलालं गणिकाम् आकार्य 'कुतस्त्वं कुलालरथ्यायाम् असकृत् अयासीः ? त्वमेव दण्डनीयाऽसि' इत्याह । सा प्रत्यब्रवीत् - 'मदीयमम्बरं निर्णेक्तुं रजकसकाशे दत्तवती साऽहम् ; स च रजकः प्रत्यर्पणे व्यलम्बत ; अत एव तत्पथेन शश्वत् प्रयातव्यम् आपतितं मम ; सः एव रजको दण्डनीयः' इति । अथ पार्थिवः तां विमुच्य रजकम् आनाय्य पप्रच्छ 'कुतस्त्वं वस्त्रप्रत्यर्पणे व्यलम्बथाः' इति । स चाह - 'महाप्रभो ! नाहम् आगस्वी ; यस्मिन् सरसि मया वस्त्रनिर्णेजनं क्रियते, तत्र शिलायाम् अवधूतः कोऽपि उपविष्टः सुचिरं बोधितोऽपि नोदतिष्ठत् ; नाद्यापि उदतिष्ठत् ; किं करवाणि अहम् ; भवानेव वदतु, मयि कोऽपराधः' इति । अथ राजा रजकं विहाय भटान् आदिशति स्म तम् अवधूतम् आनेतुम् । स तु मौनी ; महता प्रयासेन सः राजसभाम् आनेतव्योऽभूत् । आनीतं तं पार्थिवः पप्रच्छ

'कुतस्त्वं शिलायाम् उपविश्य नोत्तिष्ठसि'? इति । सुदृढावलम्बितमौनव्रतः स तूष्णीकः एव सन् वाचं नैव उदघाटयत् । अथ राजा 'अन्ये सर्वेऽपि पृष्टाः किमपि किमपि प्रत्युत्तरम् अदुः; अतस्ते ते सत्यं निरागसः; यतोऽयं न किमपि प्रतिब्रूते, ततोऽयमेव महान् आगस्वी ; अयमेव दण्डनीयः' इत्यवधार्य तम् अवधूतं शूलम् आरोपयामास इति कथा समाप्ता । ततः प्रभृति 'सर्वेऽप्यपराधाः अवधूतमौनिशिरसि' इत्याभाणकः प्रसृमरोऽभूत् । तदिदं प्रकृते समुचितम् उदाहरणं खलु। अवशिष्टं सुस्पष्टम् ।।

## [प्रतिपदार्थ]

**हिंदी - अपने वक्ष पर हिरण के नेत्र के समान नेत्रवाली श्री लक्ष्मीजी का धारण करने वाले हे माधव ! विना क्लेश, (कंस की नौकरानी) कुबडी का कूबड मिटाकर उसे ठीक बनानेवाले हे गोविन्द ! हे परमपद में सर्वत्र व्याप्त तेजोमय ! हे मणिवर्ण ! हे मधुसूदन ! मुझ पापी पर ऐसी कृपा कीजिए, जिस से मैं आप के मधु बहनेवाले श्री पाद प्राप्त करूं ।।**

## [आर्तिप्रकाशन]

पहली दो गाथाओं में आळवार ने अपनी नीचता का अनुसंधान करते हुए भगवान् से दूर भागना चाहा । बाद की दो गाथाओं में भगवान ने उन को अपने शील गुण की याद करायी, जिस से आळवार का पूर्वोक्त संकल्प कुछ ढीला हो गया । यह देखने से प्रसन्न होकर भगवान ने तुरंत उन से मिलना चाहा । परंतु उतने में उन के मन में यह विचार हुआ - 'अब हमें उतावली करना अनुचित है ; इस बात की परीक्षा करनी चाहिए कि क्या आळवार सत्य ही हमसे मिलना चाहते हैं या नहीं । अतः हम उन्हें अपनी आर्ति का प्रकाशन करने देंगे' । यह सोचकर भगवान चुप रह गये । इस से आळवार की आर्ति बहुत बढ गयी और यही प्रकृत गाथा के द्वारा प्रकाशित की जा रही है।

## [लक्ष्मीजी को आगे करके प्रपत्ति]

इस में यह स्पष्ट प्रार्थना दीख पडती है कि **मुझ पापी पर ऐसी कृपा कीजिए, जिस से मैं आपके मधु बहनेवाले श्रीपाद प्राप्त करूं।** पहला संबोधन है - महालक्ष्मी से विभूषित वक्षवाले माधव ! श्री पांचरात्र शास्त्र कहता है कि पुरुषकार (माने

सिफारिश) करना लक्ष्मीजी का काम है ; अतः उन के द्वारा भगवत्संनिधि जानेवाले की इच्छा अवश्य ही सफल होगी। अब उन के नेत्रसौंदर्य का वर्णन करनेवाले आळ्वार उन का कटाक्ष पाना चाहते हैं। 'हरिणनेत्र' इत्यादि लंबे शब्दसंदर्भ से कथित अर्थ का संग्रह माधव शब्द से किया गया है ।

**[भगवान के शीलगुण का प्रकाशन]**

दूसरे पाद में कुबडी पर भगवान से कृत अनुग्रह का वर्णन करते हुए आळ्वार इस अपनी प्रार्थना की सूचना करते हैं - 'हे प्रभो ! आप कृपया मुझ नीच पर भी ऐसी कृपा कीजिए'। कुबडी की कथा कृष्णावतार में प्रसिद्ध है - अक्रूर के द्वारा कंस से बुलाए जाने पर श्री कृष्ण व बलदेव व्रज से निकल कर, मथुरा पधारकर, राजवीथी से होकर कंस के महल की ओर बढ रहे थे । तब नैकवक्रा नामक एक कुबडी, कंस के लिए तैयार सुखंड इत्यादि सुगंध द्रव्य लेती हुई सामने आयी । श्री कृष्ण ने उस से अपने दोनों के अनुरूप चंदन मांगा । श्री कृष्ण के रूप से मोहित कुब्जा ने तो दोनों भाइयों के दिव्यमंगलविग्रह पर मनोहर चंदन लीप दिया । इस से प्रसन्न श्री कृष्ण ने उस के जन्म के साथ हुए कूबड को ठीक कर दिया । यह कथा श्री भागवत, श्री विष्णुपुराण इत्यादि अनेक ग्रंथो में उपवर्णित है । श्री विष्णुपुराण के पांचवें अंश के बीसवें अध्याय के प्रारंभ में इस प्रसंग के कतिपय श्लोक श्री कृष्ण के शीलगुण का मनोहर वर्णन करते हैं । संस्कृत टीका में **'ततस्तां चुबुके शौरिः'** (वि.पु.५-२०-९) इत्यादि अनेक पद्य लिखित हैं। उन का यह अर्थ है - फिर, सीधा करने की विद्या में निपुण श्री कृष्ण ने दो अंगुलियों से उस कुबडी को चिबुक के सहारे उठाकर और पैर दबाकर उस को सीधी और सुंदरी बना दिया । तब प्रेमपरवश उस सुंदरी ने श्री कृष्ण का वस्त्र पकडकर उन से कहा कि चलो मेरा घर। यह सुनकर श्रीकृष्ण ने मंदहास पूर्वक यह आश्वासन दिया कि 'मैं अवश्य तुम्हारे घर आऊंगा', और उसे विदा किया । फिर वे श्री बलदेव का मुख देखकर खूब हँस पडे ।

श्री रामचंद्रजी के दिव्यचरित्र में भी कुब्जा की एक कथा आती है, जिस का भी वर्णन प्रकृतगाथा व्याख्यान में आचार्यों से किया गया है । श्रीरामायण में प्रसिद्ध कुब्जा मंथरा है न ? उस की यह कथा है । उसपर भगवान ने कृपा नहीं की । परंतु श्री रामचंद्रजी ने बचपन में हाथ में लीलाधनुष लेकर खेलते थे, उस से एक दिन अचानक मंथरा के कूबड पर मिट्टी की गोली चलायी । इस से वह कुबडी श्री रामचंद्रजी पर बहुत कुपित हो गयी ।

उस ने सोचा - 'राजकुमार होने के गर्व से यह राम मेरी हँसी उडाता हुआ यह काम कर रहा है । अब इस की चलती है । अस्तु । योग्य समय पाकर मैं इस का बदला लूंगी'। वर्षों के बाद उस ने ठीक अवसर पाया और कैकेयी की आड में श्रीरामचंद्रजी के राज्याभिषेक उत्सव में विघ्न डाल दिया । यद्यपि यह कथा वाल्मीकि रामायण में उपवर्णित नहीं ; तथापि दूसरे ग्रंथो में इस का उल्लेख है । प्रकृत गाथास्थ द्राविड शब्दों का यह भी अर्थ हो सकता है -'हे लीलाधनुष से कुब्जा के कूबड पर मारनेवाले गोविंद'! अतः इस प्रकरण में आचार्य इस कथा का भी वर्णन करते हैं ।

### [सारे अपराध अवधूत साधु के]

परंतु इस प्रकरण में गोविंद शब्द सुनने से शंका होगी कि यह श्रीकृष्ण का ही चरित्र हो सकता है ; न तु श्रीरामचंद्र का ; क्यों कि उन का गोविंद नाम नहीं होता । परंतु यह कोई बडी बात नहीं । क्यों कि यह गोविंद शब्द भगवान का अनादि नाम है ; श्रीकृष्णावतार में इस की विशेष प्रसिद्धि हुई, इतनी ही बात है । गोविंद शब्द का अर्थ होता है भूपाल, जो श्रीरामचंद्र पर भी ठीक लगता हैं । गोविंद शब्द का अर्थ कृष्ण ही मान कर भी आचार्य एक अद्भुत समाधान बतलाते हैं चूंकि कुचेष्टा करने की प्रसिद्धि श्री कृष्ण की है, न तु श्रीराम की, अतः आळ्वार श्रीरामकृत चेष्टा को श्री कृष्ण पर लाद देते हैं । इस विषय के दृष्टांत रूप एक द्राविडी कहावत है - **'पोम्बळियेल्लाम् अमणन् तलैयोडे'** । माने सभी अपराध अवधूत साधु पर लग जाते हैं । अन्यायधन्य नामक राजा के नगर में एक चोर ने किसी के मकान में चोरी करने के उद्देश्य से दीवार में सेंध लगायी थी । दीवार गीली थी, अतः वह गिर गयी और चोर उस के नीचे दब कर मर गया । प्रातःकाल होने पर चोर के पत्नी पुत्रादि को इस बात की खबर मिली और उन्होंने उस मकान के स्वामी को राजा के पास लेकर उस पर (चोर की) हत्या करने का अभियोग किया। राजा ने उस से कहा 'तुम्हारी दीवार गीली थी, अतः बेचारा यह चोर मर गया; अतः यह तुम्हारा अपराध हुआ जिस के लिए अब तुम्हें दंड भोगना पडेगा'। गृहस्थ ने उत्तर दिया - 'सरकार ! यह तो दीवार बनानेवाले राज का दोष है, मेरा नहीं'। राजा ने राज को बुलाकर सुदृढ दीवार न बनाने के कारण उसे दंड देने की धमकी दी । उस ने कहा - 'मिट्टी से पानी मिलानेवाले नौकर ने अधिक पानी डाल दिया; फलतः मिट्टी पतली हो गयी और दीवार गिर गयी। अतः यह अपराध उस नौकर

का है'। फिर नौकर बुलाया गया । उस ने कहा कि 'कुम्हार ने मुझे बडा घडा दिया, जिस से पानी माप से अधिक हुआ'। कुम्हार ने कहा - 'मैं तो प्रमाण के अनुसार ही घडा बनानेवाला था ; परंतु ठीक उसी समय मेरे घर के सामने से एक वेश्या निकली ; मेरा ध्यान उस पर गया और फलतः घडा बडा हो गया'। तब वेश्या बुलायी गयी । उस ने निवेदन किया - मैं ने धोबी को अपना कपडा दिया था । उस ने ठीक समय पर उसे नहीं लौटाया। अतः मुझे उस के घर जाना पडा। मैं वहां जा रही थी । मुझे इस कुम्हार की चिंता थोडी थी? 'फिर धोबी की बारी आयी । उस ने विनती की' - प्रभो ! मैं कभी कपडे लौटाने में विलंब नहीं करता। परंतु उस दिन के बारे में मैं क्या कहूं ? मैं तो बडे सबेरे ही उठकर कपडा लेकर घाट पर गया। परंतु कपडा धोने के पत्थर पर एक अवधूत साधु बैठा था, जो बहुत प्रयत्न करने पर भी उठा नहीं। फलतः मुझे कपडा धोये विना ही घर लौटना पडा'। फिर राजा की आज्ञा से सेवक बहुत प्रयत्न से उस साधु को ढूंढ कर राजा के पास ले आये । राजा ने उस से पूछा - 'तुम ने क्यों पत्थर पर बैठकर इस धोबी को अपना काम करने नहीं दिया'? साधु तो मौनी था और शायद विदेशी भी । जो भी हो । वह चुप रहा । तब राजा ने सोचा - 'दूसरे सभी ने सकारण अपने को निर्दोष बताया ; परंतु यह साधु अपना मुख खोलता नहीं। इस का कारण यही होगा कि यह अपने को दोषी ही मान रहा है'। यह सोचकर उस ने साधु को सूली पर चढाने की आज्ञा दे दी । तब से यह कहावत बन गयी कि सभी अपराध अवधूत साधु पर लग जाते हैं । इसी न्याय से यहाँ भी श्रीरामचंद्र का अपराध श्रीकृष्ण पर लादा जा रहा है । तथा च यह तात्पर्य हुआ 'अपने पिछले अवतार में (श्रीरामावतार में) कुबडी मंथरा के कूबड पर गोली चलानेवाले हे श्री कृष्ण'! बाकी सब स्पष्ट है ।।

**विनैयेन् विनैतीर् मरुन्दानाय् विण्णोर् तलैवा केशवा**
**मनैशेर् आयर् कुलमुदले मामायने माधवा**
**शिनैयेय् तळैय मरामरङ्गळ् एळुमेय्दाय् शिरीदरा**
**इनैयाय् इनैयपेयरिनाय् एन्नु नैवन् अडियेने ।। ६ ।।**

**(गाथा) -** पापिष्ठस्य च पापशान्तिविधये दिव्यौषधात्माऽसि भो !
देवानामपि सर्वतः परिबृढस्त्वं केशवोऽसि प्रभो !।
गोपानां कुलमूलनायक ! विभो ! मायामयो माधव!
त्वं वै सप्ततरुच्छिदेव बहुधा त्वामाश्रये श्रीधर! ।। ६ ।।

[प्रतिपदार्थः]

**विवरणम् - पापिनो मम पापनिबर्हणदिव्यौषधभूत ! नित्यसूरिनाथ ! केशव ! कुञ्जकुटीरवास्तव्यगोपालकुलप्रधानभूत ! अद्भुतगुणचेष्टितशालिन् ! माधव! (राघवत्वे) शाखाविटपसंभृतां सप्तसालीं निष्पत्रीकृतवन् ! भगवन् श्रीधर ! विलक्षणस्वरूपविशिष्ट! विलक्षणदिव्यनामाढ्य ! इत्याक्रन्दन् द्रवीभूतहृदयोऽस्मि हन्त !।।**

[भगवद्वैशिष्ट्यप्रतिपादनपूर्वकं कृपाप्रार्थनम्]

इयं गाथा पूर्वगाथाशेषभूता । पूर्वस्यां गाथायामिव अस्यामपि भगवत्कृपा प्रार्थ्यते इति यावत् । भगवत्कृपाप्रार्थनाया गाथायाम् अस्यां मुक्तकण्ठम् अनुक्तत्वेऽपि पूर्वगाथातः अनुषञ्जनीयताम् आशेरते श्रीकुरुकेशाचार्याः । मुनिवरो वैमुख्यविदूरगः आभिमुख्यसन्निकृष्टो भूत्वाऽपि स्वस्मिन् भगवदाभिमुख्यम् अनवलोकयन् भगवन्तं बहुधा संबोध्य क्रन्दति । **पापिनो मम पापनिबर्हणदिव्यौषधभूत! -** इत्येतत्संबोधनं प्रकृतपरिस्थित्यनुगुणम् अजनि। 'यं खलु भगवत्संश्लेषं महान्तः सुकृतिनः कामयन्ते, सुमहत्तरतपःफलं च मन्यन्ते, तत्र वैमुख्यं यदजनि मम, तदेतत् पापफलं खलु; एतादृशपापभूयिष्ठस्य मम स्वकीयसौशील्यगुणप्रदर्शनेन यत् आभिमुख्यम् उत्पादितम्, तदेतत् सहस्रनाममध्ये **'निर्वाणं भेषजं भिषक्'** (वि.स.) इति भेषजत्वेन भिषक्त्वेन च व्यपदेशानुगुणमेव इत्युच्यत इव। परमकृपया मम स्वाभिमुख्यसमुत्पादक भगवन्! इत्युक्तं भवति। नित्यसूरिनाथ! - दिव्ये धाम्नि नित्यानुभवनिरतानां मुक्तानां नित्यानां च एतादृशपापसंभवप्रसक्तिर्नास्ति खलु इति सानन्दमुच्यते इव। एतादृशमेव अभिप्रायं व्यनक्ति संबोधनमिदम् । **केशव -** भगवते केशवनामधेयं पार्वतीपतिना वितीर्णम् इति हरिवंशतोऽवगम्यते। **'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान्'**।। (ह.वं.१-१३-६२) इति इदं हरवचनम् इहानुसन्धेयम् । प्रशस्तकेशः इत्यप्यर्थः । कृष्णावतारे कंसप्रेरितकेशिनामक (वाजिवेषधर) दैत्यहन्ता इत्यप्यर्थः। **'नरके पच्यमानस्तु यमेन परिभाषितः। किं त्वया नार्चितो देवः केशवः क्लेशनाशनः'?**।। इति इदं यमवचनं केशवनाम्नः सर्वोत्तुङ्गतां हि संप्रकाशयति।

[भगवतः अद्भुतगुणचेष्टितनिरूपणम्]

**कुञ्जकुटीरवास्तव्य गोपालकुलप्रधानभूत ! -** कुञ्जकुटीरवास्तव्यत्वविशेषणं गोपालानामिव गोपालकुलप्रधानभूतस्य भगवतोऽपि सुघटम्। वस्तुतो गोपालाश्च

गोपालचूडामणिश्च कुञ्जकुटीरवासेन एव खलु क्षपितकालाः । द्वारकाप्राप्तिसमनन्तरमेव खलु वासुदेवस्य प्रासादप्राकारादि - परिवृतरम्यहर्म्यनिवासलाभः। **अद्भुतगुणचेष्टित-शालिन्!-** व्रजात् निस्सृत्य मथुरादिस्थलविशेषेष्वपि यद्यपि कृष्णः प्राकाशयत् अद्भुतगुणचेष्टितविशेषान्, तथाऽपि व्रजे प्रकाशितानां तेषां कोटितमीमपि कलां नार्हन्ति ते इति यशोदास्तनन्धय- किशोरगुणविद्धानां रसिकमणीनां व्याहारः। **माधव ! -** व्रजे एवं विहर्ता परात्परो लक्ष्मीपतिरेव ननु इत्युक्तं भवति।

**[सप्तसालभञ्जनवृत्तान्तः]**

**शाखाविटपसंभृतां सप्तसालीं निष्पत्रीकृतवन् !** इति संबोधनं भक्तानां विश्वासनीयत्वप्रतिपादने पर्यवस्यति । यदा सुग्रीवो महाराजः वालिनः विश्वातिशायिविक्रमातिशयं मुहुर्मुहुः अनुसंदधे, तदा भस्मच्छन्नानलनिभस्य राघवस्य विक्रमभूम्नि संदेहग्रस्तचित्तो बभूव, तदा राघवः तद्विश्वासदार्ढ्यसम्पादनार्थं सप्तसालीविभेदनम् अकार्षीदिति श्रीरामायणकथा प्रथिता। यदाहुः श्रीवत्साङ्कमिश्राः - **'सालान् हि सप्त सगिरीन् सरसातलान् यान् एकेषुमन्दजवतो निरपत्रयस्त्वम्'** (अतिमानुषस्तव - २०) इत्यादि । कथायाः अस्याः अत्रानुसन्धानम् अत्यन्तमुचितम्। तथा हि- सुग्रीवो यदा स्वविक्रमे संदेग्धि स्म, तदा तदीयसंदेहापनोदनं राघवस्य किमावश्यकम् ? नैव आवश्यकम्। संदेग्धु कामं सः । तावता स्वस्य का क्षतिर्नाम ? न काऽपि क्षतिः । तथाऽपि आश्रितस्य तस्य कथञ्चिदपि परित्यागो न कर्तव्यः इति धियैव खलु तत्संदेहनिरसने प्रववृते । एवं प्रकृतेऽपि शठकोपमुनिः स्वकीयायोग्यतानुसन्धानेन यदि विमुखो भवति, एतेन भगवतः का हानिः? नैव काऽपि हानिः । पारे परार्धं हि जना भगवन्तं नमन्ति नुवन्ति च । क्वचन तिंत्रिणीकोटरे निविष्टस्य अस्य मुनेः स्वाभिमुख्यसमुत्पादनार्थं प्रयासलेशोऽपि न खलु उररीकार्यो भगवता । तथाऽपि भक्ताग्रेसरस्य अस्य कथञ्चिदपि प्रहाणं मा स्म भूदिति मनीषया एव खलु भगवानेतस्य स्वस्मिन् आभिमुख्यसंपादनार्थं सुबहु प्रयस्यति । तदेतत् सम्यगवगच्छन् मुनिवरः 'भगवतः इयं चिरंतनी प्रकृतिः' इति कथयन्निव सप्तसालीभेदनकथामिह प्रास्तौषीत् इति । निष्पत्रीकरणं नाम पर्यायतो विभेदनमेव। **श्रीधर ! -** सप्तसालभेदनकालिकवीरश्रीः इह विवक्षिता इत्याचार्याः। माधवशब्देन पौनरुक्त्यं माभूदिति । अवशिष्टं स्पष्टम् ।।

**[प्रतिपदार्थ]**

**हिंदी - 'हे मुझ पापी के पाप मिटानेवाले दिव्य औषध स्वरूपिन् ! हे नित्यसूरियों के नाथ ! हे केशव ! हे निकुंजकुटीर निवासी गोपकुल के प्रधान ! हे अत्यद्भुत गुणचेष्टित विभूषित! हे माधव ! हे (श्री रामावतार में शाखाओं व पल्लवों से भरे सात सालवृक्षों के भेदन करनेवाले ! हे श्रीधर ! हे ऐसे विलक्षण स्वरूपवाले ! हे विलक्षण शुभनाम विभूषित' ! इस प्रकार पुकारता हुआ मैं द्रुतहृदय हो रहा हूं ।।**

**[विशेषता वर्णन पूर्वक भगवान की कृपा की प्रार्थना]**

यह गाथा पिछली गाथा का शेषभूत (उसी से संबद्ध) है । अर्थात् उस की भांति इस में भी भगवान की कृपा माँगी जा रही है । यद्यपि इस में इस बात का प्रकाशक स्पष्ट शब्द नहीं है; तथापि श्री कुरुकेशस्वामीजी कहते हैं कि पूर्वगाथास्थ प्रार्थना वचन की ही इस में अनुवृत्ति करनी चाहिए । आळ्वार भगवान से वैमुख्य छोड कर अभिमुख-जैसे होकर, अपने विषय में भगवान का आभिमुख्य न देखते हुए खिन्न होकर, नानाविध संबोधनों से उन की स्तुति करते हुए उन को पुकारते हैं, प्रकृत गाथा से । आळ्वार की वर्तमान दशा के अनुगुण यह पहला संबोधन किया गया है - **हे मुझ पापी के पाप मिटानेवाले दिव्य औषध स्वरूपिन् !** - ज्ञानी महात्मा लोग जिस भगवत्संश्लेष को सदा माँगते हैं और महान् पुण्य का फल मानते हैं, उसी से मैं (आळ्वार) विमुख हुआ न ? अवश्य ही यह प्रबल पाप का फल है । अब भगवान ने अपने सौशील्यगुण का प्रकाशन करते हुए मेरा यह पाप मिटाकर मुझे अपना अभिमुख बना दिया । अतः उन को औषध पुकारना उचित है । श्रीविष्णुसहस्रनाम में भी उन के शुभ नाम गाये हुए हैं - **'निर्वाणं भेषजं भिषक्'** (वि.स.) (अर्थात् रोगनिवृत्ति का आनंद, औषध और वैद्यराज सभी भगवान हैं)। तथा च प्रकृत संबोधन का यह तात्पर्य हुआ कि 'असीम कृपा से मेरा वैमुख्य दूर कर मुझे अपना अभिमुख बनानेवाले हे भगवन्'! **हे नित्यसूरियों के नाथ !** इस से परमपद निवासी नित्यमुक्तों के भाग्य की स्तुति सानंद की जाती है, जिन्हें ऐसे पाप की प्रसक्ति नहीं; अर्थात् जो कभी भगवान से विश्लिष्ट हुए विना नित्यसंश्लेष पाते रहते हैं । इसी भाव का सूचक है आगे का यह भी संबोधन - **केशव!**। हरिवंश में भगवान के इस शुभ नाम का अर्थ शिवजी से उपवर्णित है

**'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान्'**।। (ह.वं.१-१३-६२) इस का यह तात्पर्य है - चतुर्मुखब्रह्मा का नाम है- 'क'; शिवजी का नाम है 'ईश' । ये दोनों देव भगवान के श्रीविग्रह से उत्पन्न हैं ; अतः उन का नाम हुआ - केशव । इस नाम का दूसरा यह भी अर्थ होगा कि प्रशस्त माने अति श्रेष्ठ व मनोहर केशवाले । अथवा यह भी अर्थ होगा कि श्री कृष्णावतार में कंसप्रेरित केशि नामक (जो घोडे के रूप में व्रज आया था) असुर का संहार करनेवाले । भगवान का यह अत्यंत श्रेष्ठ नाम माना जाता है । क्यों कि यमराज का यह प्रसिद्ध वचन है - **'किं त्वया नार्चितो देवः केशवः क्लेशनाशनः'**। इस का यह तात्पर्य है - नरक में दुःख भोगनेवाले चेतन से यमराज ने पूछा कि 'क्या तुमने दुःखनाशक केशव का पूजन नहीं किया' ?

### [भगवान के अद्भुत गुण और चेष्टित]

**हे निकुंजकुटीरनिवासी गोप कुल के प्रधान !** यह विशेषण 'निकुंज कुटीनिवासी' गोपों तथा उन के प्रधान श्री कृष्ण को भी लगता है। क्यों कि दोनों ही निकुंज व कुटीर में वास करते थे । श्रीद्वारका पहुंचने के बाद ही श्री कृष्ण प्रासाद में रहने लगे । **हे अत्यद्भुत गुण चेष्टित विभूषित !** - यद्यपि व्रज छोडने के बाद मथुरादि अनेक स्थलों में भी भगवान ने अपने अनेक अद्भुत गुण चेष्टितों का प्रकाशन किया; तथापि रसिकों का यह सिद्धांत है कि ये सभी यशोदास्तनंधय बालकृष्ण के गुणचेष्टितों के एक कोटितम भाग के भी समान नहीं । **हे श्रीधर !** - इस संबोधन का यह भाव है कि व्रज में ऐसी विलक्षण लीला करनेवाले ये व्यक्ति साक्षात् लक्ष्मीपति भगवान हैं ।

### [सप्तसालभंजन की कथा]

**शाखाओं व पल्लवों से भरित सात साल वृक्षों का भेदन करनेवाले !** - इस संबोधन का यह भाव है कि भगवान भक्तों के मन में अपने विषयक विश्वास समुत्पन्न करते हैं । जब सुग्रीव महाराज वालि के असदृश पराक्रम का वारंवार चिंतन करता हुआ और राख में छिपे अंगार के सदृश श्री रामचंद्र भगवान के पराक्रम से अपरिचित होने के कारण उस पर शंका करता हुआ अत्यंत दुःखी हुआ, तब श्रीरामचंद्रजी ने एक

तीर छोडकर उस से सात सालवृक्षों का भेदन कर डाला ; जिस से सुग्रीव के मन में यह विश्वास उत्पन्न हुआ कि अवश्य ही ये महापुरुष वाली का संहार कर सकेंगे । प्रकृत में इस कथा का अनुसंधान करना अत्यंत उचित हैं । तथाहि - जब सुग्रीव ने श्री रामचंद्रजी के सामर्थ्य पर शंका की, तब उन्हें वह शंका दूर करने की खास आवश्यकता नहीं थी । क्यों कि सुग्रीव के शंका करने से श्री रामचंद्रजी की कोई भी हानि नहीं होती थी । तथापि आश्रित की उपेक्षा करना अनुचित मान कर ही उन्होंने सुग्रीव को विश्वास दिलाने का प्रयास किया । यहाँ आळ्वार के विषय में भी यही न्याय लगता है । तथा हि - अयोग्यता का अनुसंधान करते हुए श्री शठकोपस्वामीजी के दूर चले जाने से भगवान की कोई हानि नहीं होगी ; उन के सिवा भी अनंत भक्त जन भगवान से मिलकर उन की स्तुति व सेवा करते ही हैं । अत: इस विशाल पृथ्वीतल के किसी एक कोने में इमली के पेड के एक कोटर में बैठ कर प्रलाप करनेवाले आळ्वार को अपने वश करने की चेष्टा करना भगवान के लिए आवश्यक नहीं है । तथापि एक भक्ताग्रेसर को छोड देने के अनिच्छुक होकर ही भगवान इन को अपने अभिमुख बनाने के लिए विशेष प्रयत्न कर रहे हैं । यही अब आळ्वार के दृष्टांत रूप से इस सप्तसालभंजन वृत्तांत को प्रस्तुत करने का कारण है। वे समझाना चाहते हैं कि 'अपने भक्तों को अपने विषय में विश्वास दिलाना भगवान का अनादि स्वभाव है'। **श्रीधर** शब्द से उक्त सप्तसालभंजन के समय की भगवान की वीरश्री सूचित की जाती है । अत: माधवशब्द से इस की पुनरुक्ति नहीं होगी । बाकी सब स्पष्ट है ।।

**अडियेन् शिरिय ञानत्तन् अरिदल् आर्क्कुमरियानै**
**कडिशेर् तण्णन्तुळाय् कण्णि पुनैन्दान् तन्नैक्कण्णनै**
**शेडियार् आक्कै यडियारै चेर्दल् तीर्क्कुम् तिरुमालै**
**अडियेन् काण्बानलत्तुवल् इदनिल् मिक्कोर् अयर्वुण्डे ।।७।।**

**(गाथा) - अल्पज्ञोऽस्मि हि दास एष महतां तं ज्ञानिनां दुर्लभं**
**श्रीकृष्णं तुलसीस्रगञ्चितमपि श्रीशं भवार्तिच्छिदम् ।**
**द्रष्टुं हा ! बत ! कामयेऽद्य मनसा मूढोऽस्मि पापी स्वयं**
**किं वेत: परमस्ति मौढ्यमधिकं दृष्टं श्रुतं वा क्वचित्?।।७।।**

**[प्रतिपदार्थः]**

**विवरणम् - अल्पीयसा ज्ञानेन युक्तोऽहं महाज्ञाननिधीनामपि दुरवबोधं सुरभिशिशिररमणीय तुलसीस्रग्विभूषितं कृष्णसमाख्यासनाथं दासभूतानां जनानां संसारमहारण्यानुबन्धिशरीरसङ्गविच्छेत्तारं च श्रियःपतिं सेवितुकामः खलु हन्त ! क्रन्दामि! है! इतोऽधिकः कश्चिदस्ति कोऽप्यविवेको नाम ।।**

**[भगवतो दुरवबोधत्वं जीवस्य अल्पिष्ठज्ञानयुक्तत्वं च]**

पुनरपि मुनिसार्वभौमस्य अयोग्यतानुसन्धानतोऽपसरणेच्छा समुन्मिषति गाथायाम् अस्याम्। भवभूतिमहाकविप्रणीतोत्तररामचरितश्लोकविशेषोऽत्रस्मृतिपथम् उपयाति । **'हा हा धिक् परगृहवासदूषणं यद् वैदेह्याः प्रशमितमद्भुतैरुपायैः। एतत्तत्पुनरपि दैव दुर्विपाकादालर्कं विषमिव सर्वतः प्रसृप्तम्'**।। (१-४०) इति। (आलर्कं विषम् - उन्मत्तशुनकदंशजनितं विषमित्यर्थः। तत् उपायविशेषतः कदाचित् प्रशमितमपि कालान्तरे पुनः प्रसर्पतीति प्रसिद्धमेतत्।) एवमेव मुनिवरस्य अस्य अनर्हतानुसन्धानपूर्वकम् अपसर्पणरुचिः उत्पन्ना भगवता कथञ्चित् प्रशमितापि सती भगवतः एव भाग्येन पुनरुन्मिषति। किं नामात्र भगवतो भाग्यमिति चेत्, पुनरस्य स्वाभिमुख्यसम्पादनार्थं समनन्तरगाथायाम् अद्भुतोपायप्रदर्शने या प्रवृत्तिः अवलोक्यते सैव सत्यं सुमहत्तरं भाग्यं भगवतः। स्वस्य अल्पिष्ठज्ञानयुक्तत्वं भगवतो महाज्ञाननिधीनामपि दुरवबोधत्वं च यदत्रानुसन्धीयते तदेव अपसरणकामनाबीजं मन्तव्यम्। लोकेऽपि महाज्ञाननिधिं विपश्चिदपश्चिमं कञ्चन महापुरुषं यदि कोऽप्यज्ञो वराकः स्तोतुं प्रवर्तेत, तर्हि स गर्हणीयो भवतीति पश्यामः । भगवान् यामुनार्योऽपि **'तत्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि शर्वपितामहाद्यैः। कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय'** ।। (स्तो.र.७) इति ह्यनुसमधत्त। तदपि एतद्गाथामूलकमेव। गाथायाः अस्याः उपक्रमे अडियेन् इति पदं विराजते । दासाऽहमिति तदर्थः । भगवतो विषये दास्यकरणं मम अनर्हमिति कथयतः अपसिसीर्षतश्चास्य मुनिवरस्य मुखात् अधुना दासोऽहमिति वाणी कथमुद्भवति? प्रथमपादोपक्रमे इव चरमपादोपक्रमेऽपि हि 'अडियेन्' इति पदं विराजते ; सर्वथाऽप्यस्थाने निविष्टं ह्येतत् इत्याशङ्कामुद्भाव्य द्वेधा समादधते पूर्वाचार्याः - अडियेनिति दास्यरुच्या नोच्यते, अपि तु वासनाबलादुच्यते इत्येकः समाहितिप्रकारः। अथापरः - ज्ञानानन्दवत् शेषत्वस्यापि निरूपकधर्मत्वेन प्रतिपत्त्या कथितमिति। अहमित्युक्तिपर्यायः एवेति फलितम्।

अथ **सुरभिशिशिररमणीयतुलसीस्त्रग्विभूषितम्** इत्येतद्विशेषणं महाज्ञाननिधीनामपि दुरवबोधत्वस्य (अधस्तादुक्तस्य) विवरणात्मकं मन्तव्यम्। परात्परस्यैव हि लक्षणं तुलसीस्त्रग्विभूषितत्वम् । उपरितनान्यपि विशेषणानि परत्वैकान्तिकत्वप्रतिपत्त्यैव प्रयुक्तानि इत्यवगन्तव्यम् ।

## [कैवल्यार्थिनः अत्र उद्दिष्टाः]

तृतीयपादे तु कश्चिदस्ति विशेषः । **'दासभूतानां जनानां शरीरसङ्गविच्छेत्तारम्'** इत्येतद्विशेषणम् कैवल्यार्थिनामपि विषये अनुग्रहशीलत्वं यदस्ति भगवतः, तत् प्रतिपादयति इत्याचार्याः व्याचक्षते । गीतायां **'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये'** (भ.गी.७-२९) इति श्लोकतो निर्दिष्टाः अधिकारिणः स्वात्मानुभवमात्रप्रेप्सवः कैवल्यार्थिनः कथ्यन्ते । एते हि केवलं पुनर्जन्म मा भूदिति कामयमानाः भगवदनुभवनिस्पृहाश्च। एतादृशाः अधिकारिणः यद्यपि मुनिवरस्य अस्य दूष्यकोटिप्रविष्टाः, तथाऽपि तान् इदानीं प्रशंसति मुनिः । कुतः ? ते भगवन्तम् उपसृप्य न दूषयन्ति खलु तम् इति धिया । ते तावदिह 'दासभूतानां जनानां' इति दासजनत्वेन कथं निर्दिश्यन्ते ? इति पूर्वाचार्या आशङ्काम् उद्भाव्य समादधते एवम् - 'सत्यं ते एव दासभूताः इति शठकोपमुनेर्मतिः; शेष्यतिशयाधाननिरता ये ते एव हि दासाः; केवलास्तावत् भगवन्तम् उपसृप्य तस्य अवद्यम् अनुत्पादयन्तः दूरतोऽवतिष्ठन्ते इति हेतुना तान् मुनिवरः मन्यते भगवदतिशयाधायकान् । प्रकरणानुगुणमिदं भाषणं रस्यं रसिकानाम् । अन्ततः **है ! इतोऽधिकः कश्चिदस्ति कोऽप्यविवेकः !** इत्यत्र आचार्याः अनुगृह्णन्ति - 'यदाऽहं संसृतिचक्रस्थो जन्मपरम्परासु भ्राम्यन् अवर्तिषि, तदा मम बहवः आसन् अविवेकाः; ते हि श्लाघ्यतमाः इति मन्ये ; यतस्तदा भगवन्तम् उपसृप्य तस्य अवद्यसम्पादने न प्रावर्तिषि' इति मुनिवरस्य हृदयमिति । एदतपि प्रकरणानुगुणं सुशोभनम् ।।

## [प्रतिपदार्थ]

**हिंदी - अत्यल्प ज्ञानवान यह दास (मैं), बडे बडे ज्ञानियों से जानने के अशक्य, सुगंधयुत सुशीतल व मनोहर तुलसीमालाधारी, शुभ 'श्रीकृष्ण' नामवाले और अपने भक्तों के संसाररूपी महारण्य से संबद्ध शरीर संबंध छुडानेवाले लक्ष्मीपति का सेवन करना चाहता हुआ पुकार रहा है (रहा हूं) । हाय ! क्या इस से भी अधिक कोई अविवेक हो सकता है ?**

**[भगवान असाधारण हैं, जीव अत्यल्पज्ञानी है]**

इस गाथा में आळ्वार, फिर भी नैच्यानुसंधान करते हुए भगवान से पीछे हटना चाहते हैं । इस विषय में भवभूति महाकवि विरचित 'उत्तररामचरित' नाटक का यह पद्य दृष्टांत होता है - **'हा हा धिक् परगृहवासदूषणं यद् वैदेह्याः प्रशमितमद्भुतैरुपायैः। एतत्तत्पुनरपि दैवदुर्विपाकात् आलर्कं विषमिव सर्वतः प्रसृप्तम् ।।'** (१-४०) यह श्रीरामचंद्रजी का वचन है । इस का यह तात्पर्य है - रावण से अपहृत जानकी जी को परगृहवासप्रयुक्त अपवाद जो लगा था, वह अग्निप्रवेशादि अत्यद्भुतोपायों से उस समय दूर किया गया था; परंतु कई वर्षों के बाद वही अपवाद पागल कुत्ते के विष की भांति धोबी के वचनरूप से फिर सिर उठा रहा है । यह तो अनुभवसिद्ध विषय है कि पागल कुत्ते के काटने का विष, उपचार करने पर तत्काल शांत दिखता हुआ भी कुछ समय के बाद फिर अपना सिर उठाकर दुःख देने लगता है । इसी प्रकार, आळ्वार की समुत्पन्न विमुखता, जो भगवान से प्रयत्नपूर्वक मिटायी गयी थी, वह अब मानों भगवान के भाग्य से फिर भी उत्पन्न हुई । तथाहि - आळ्वार को समुत्पन्न इस रोग को मिटाने के लिए भगवान आगे की गाथा में एक अत्यद्भुत उपाय करनेवाले हैं, जिस से उन के गुण बहुत प्रकाशित होंगे। अपने सुंदर गुणों के प्रकाशन का अवसर पाना ही भगवान का भाग्य है। अस्तु, यहाँ फिर भी आळ्वार के लौटने का कारण यही है कि उन्होंने ऐसा विचार किया कि मैं तो अत्यल्प ज्ञानवान हूं और भगवान महाज्ञानियों से भी ठीक समझने में अशक्य हैं । लोकव्यवहार में भी हम देखते हैं कि यदि कोई मूर्ख, महाज्ञाननिधि पंडितश्रेष्ठ की स्तुति करेगा, तो इस से इस पंडित का अपयश ही होगा। अत एव श्री यामुनाचार्य स्वामीजी ने महामहिम भगवान की स्तुति करने चाहनेवाले अपना धिक्कार किया - **'तत्वेन यस्य महिमार्णवशीकराणुः'** (स्तो.र.७) इत्यादि पद्य से। पद्य का यह तात्पर्य है - जिस भगवान की महिमारूपी सागर के एक बिंदु के भी ठीक नापने में ब्रह्मा, शिव इत्यादि बडे बडे ज्ञानी लोग भी अशक्त होते हैं ; ऐसे महामहिम की स्तुति करने में उद्युक्त मुझ लज्जाहीन का नमस्कार (माने धिक्कार) हो। समझना चाहिए कि इस पद्य का मूल, आळ्वार की प्रकृत गाथा है । अस्तु । इस गाथा में पहले तथा चौथे पाद के प्रारंभ में 'अडियेन्' शब्द प्रयुक्त है ; इसका अर्थ है- दास (मैं) । भगवद्दास्य को अनुचित मान कर उस से दूर भाग जाना चाहनेवाले आळ्वार के श्रीमुख से दो बार इस 'अडियेन्' शब्द का प्रयुक्त होना कुछ विचित्र-सा प्रतीत होगा। पूर्वाचार्य इस के दो समाधान देते हैं - (१) आळ्वार यहाँ इस शब्द के अर्थ पर ध्यान दिये विना ही अभ्यासबल से यह कह रहे हैं ; अर्थात् आळ्वार को 'मैं' कहने की जगह

'अडियेन्' कहने की आदत पड गयी है, जिसे रोकना अशक्य है । (२) आळ्वार का यह अभिप्राय है कि ज्ञान व आनंद की भांति भगवद्दास्य भी आत्मा का असाधारण निरूपक धर्म है; अतः चित्, चेतन इत्यादि शब्दों की भांति 'अडियेन्' शब्द भी आत्मा का पर्याय है । तथा च 'अडियेन्' शब्द का अर्थ आत्मा अथवा 'मै' है । **सुगंधयुत सुशीतल व मनोहर तुलसीमालाधारी -** कहने से पूर्वोक्त इस अर्थ का विवरण किया जा रहा है कि भगवान विशेषज्ञानियों से भी ठीक नहीं समझे जा सकते । क्यों कि तुलसीमाला परात्पर वस्तु का असाधारण लक्षण है। इसी प्रकार आगे के विशेषण भी परत्व की सूचना करने की भावना से ही प्रयुक्त हैं ।

### [कैवल्यार्थियों का संकेत]

तीसरे पाद में एक विशेषता है । आचार्यों का अभिप्राय है कि वहां का विशेषण अपने भक्तों के संसाररूपी महारण्य से संबद्ध शरीरसंबंध छुडानेवाले भगवान के उस स्वभाव का वर्णन आनंदरूपी है, जो स्वरूप संसार दशा में कर्म के निमित्त तिरोहित है, और उसके सर्वथा नष्ट हो जाने पर प्रकाशित होता है । अतः कितने लोग संसार को पार कर इस आत्मानुभवमात्र पाना चाहते हैं । इन्हीं का नाम केवल है । भगवद्गीता में **'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये'** (भ.गी.७-२९) इत्यादि पद्य से इन का वर्णन किया गया है। भगवदनुभव करने की इच्छा से विरहित केवल पुनर्जन्मनिवृत्ति के इच्छुक इन जनों की यद्यपि आळ्वार निंदा ही करते हैं, तथापि यहाँ वे इन की स्तुति कर रहे हैं। आळ्वार इन पर अब इस लिए प्रसन्न हैं कि ये लोग भगवान से मिलकर उन्हें दूषित तो नहीं करते । उन्हें भक्त बताने का भी एक रसमय कारण आचार्यों से दिया जाता है । तथा हि - आळ्वार के प्रकृत अभिप्राय से ये केवल ही वास्तव में भगवान के सच्चे भक्त हैं । क्यों कि वही भक्त कहलाता है जो अपने स्वामी का मान बढाता है। केवल तो भगवान से मिलकर उन्हें अवद्य पहुंचाने के काम से सुदूर रहते हैं। अतः आळ्वार यहाँ इन्हीं को वास्तव में भगवान के अच्छे भक्त मान रहे हैं । यह विवरण प्रकरणानुगुण व बहुत रसमय होने से भक्तों को भोग्य है । गाथा के अंत में क्या इससे भी अधिक कोई अविवेक हो सकता है ? कहने का आळ्वार का अभिमत यह रसमय तात्पर्य आचार्यों से बताया गया है - जब मैं संसारचक्र में फँस कर जन्म परंपरा में घूमता रहा, तब अवश्य ही मेरे अनेक अविवेक हुए । परंतु अब मुझे लगता है कि वास्तव में वे सभी अविवेक बहुत श्लाध्य ही रहे । क्यों कि तब मैंने भगवान से मिलकर उन को अवद्य उत्पन्न करने की चेष्टा तो नहीं की । यह भी प्रकरण का चित रसमय तात्पर्य है ।।

**[अवतारिका]**

**विवरणम् -** अधस्तनगाथातः परं सर्वेश्वरस्य शठरिपुमुनेश्च कश्चन संवादः प्रवृत्तः। तं प्रथमतो विशदीकृत्य परस्तात् गाथायाः अर्थं विवृणुमः सुखप्रतिपत्तये । अयोग्यतानुसन्धानेन पुनरपि विमुखोऽभून्मुनिवरः इति परिज्ञातं खल्वधस्तनगाथया ।।

**उण्डाय् उलहेळ् मुन्नमे उमिळ्न्दु मायैयाल् पुक्कु**
**उण्डाय् वेण्णेय् शिरुमनिशर् उवलैयाक्कै निलै येय्दि**
**मण्तान् शोर्न्द दुण्डेलुम् मनिशर्क्कु आहुम् पीर् शिरिदुम्**
**अण्डावण्णम् मण्करैय नेय्यूण् मरुन्दो मायोने ।। ८ ।।**

**(गाथा) - मायाचेष्टित ! पूर्वमेव हि भवान् भुङ्क्ते स्म लोकानिमान्**
**सप्तापि स्वयमुद्गिरन्नपि पुनर्जातो मनुष्यात्मना ।**
**एवं किं नवनीतभुक्पुनरभूः ? पूर्वोक्तमृद्भक्षणा**
**च्छेषं किं द्रवयेस्सितत्वहतये दिव्यौषधं किं घृतम् ?।। ८ ।।**

अथ सर्वेश्वरः पुनःपुनः एवमस्य यथा न भवेत् अनर्हतानुसन्धानमूलकमपसरणं तथा नाम कश्चन बलवान् अभ्युपायः प्रयोक्तव्यः इति पश्यन् मुनिवरं प्रति जगाद - 'भो मुनिसार्वभौम! व्रजेऽहं नवनीतम् आस्वादयम् इति कथा भवता विदिता स्यान्नु ; तदास्वादनं मया किमर्थं कृतमिति किं भवान् जानीते'? इति । मुनिः प्राह - 'नाहं जानामि' इति, स एव स्वयं कथयतु इति धिया । अथ भगवानाह - 'यदि भवान् न जानीते तर्हि मया कथ्यमानमाकर्णयतात् । पुरा कदाचित् संवर्तसमये सकलमपि भुवनं जठरे निवेश्य परस्ताद् बहिष्कृतवानभूवम् ; तथा बहिष्करणावसरे कियांश्चन मृद्भागः अन्तरेव निलीनस्सन्' मानुषाणामिव रोगकारी स्यात्किमु! इति भिया विरेचनस्वीकरणपर्यायतया व्रजे नवनीतम् आस्वादयम् इति। तदेतन्निशम्य मुनिवरः प्राह - 'भगवन् ! आः किमेतत् ? सर्वात्मनाऽप्यसंबद्धं खलु भाषसे । प्रलयकाले सकलस्यापि भुवनस्य स्वजठरेऽवस्थापनं वास्तविकमेव ; तत् कदा प्रवृत्तम् ? व्रजे नवनीतास्वादनं कदा प्रवृत्तम् ? मध्ये भूयिष्ठं हि कालव्यवधानमस्ति । तत्सर्वथाऽप्यसंगतं भाति त्वदुक्तम्' इति । अथ भगवानाह - 'मुनिमहात्मन् भोः ! मत्कृतनवनीतास्वादने कारणं पृष्टो भवानपि न ब्रवीति; मदुक्तमपि नाङ्गीक्रियते भवता। तर्हि भवानेव पुनर्विमृश्य तत्कारणं कथयतात्' इति।

अथ मुनिराह - 'आश्रितकरस्पर्शतः पवित्रं वस्तु मम परमभोग्यमिति मन्वानेन त्वया नवनीतमुपभुक्तमिति मम मनीषा' इति । तदनु भगवानुवाच - 'मुनीन्द्र ! तत्वं जानासीति संतुष्यामि ; तन्नवतीतं यथा मम भोग्यं तथैव भवता सह संश्लेषोऽपि मम परमभोग्यः ; यदि भवान् स्वसंश्लेषरसं मह्यमदत्वा विमुखो भवेत्तर्हि नवनीतभुक्तिप्रतिरोधकानां योग्यं लोकमेव भवानपि प्राप्नुयात्' इति । तमिमं संवादं सर्वसुगमत्वाय गाथयाऽनया निबध्नाति । व्रजे नवनीतभुक्ताविव मदुपभोगेऽपि भगवान् हन्त! भुशमुत्कण्ठितो वर्तते ; मदीयम् अनर्हतानुसन्धानं कस्मै फलाय कल्पेत ? इति मुनिवरः प्रोक्तवान् भवति इति परमतात्पर्यमत्र प्रतिपत्तव्यम् ।

**[प्रतिपदार्थः]**

**विवरणम् - अयि मायानिधे भगवन् ! बहोः कालात्पूर्वं हि त्वं सप्तलोकीं जठरे निवेशयामासिथ । पश्चात् सर्गकाले तत्सर्वमुद्गीर्य, ततश्च भूयसः कालात् पश्चात् मायाशब्दितेन संकल्पेन क्षुद्रमनुष्यहेयशरीरसंस्थानं प्राप्य गोपगृहं प्रविश्य नवनीतम् आस्वादितवानसि। सप्तभुवनोद्गारसमये उदरे अनुद्गीर्णमृदंशसद्भावशङ्कया मनुष्यजातिसंभावितव्याधिविशेषानुदयाय औषधस्वीकाररूपेण नवनीतम् आस्वादितमिति कथनं कथमिव युज्यते ? (आश्रितकरस्पर्शसुभगं वस्तु भोग्यमिति धियैव भुक्तवानसि इत्यादिशेषपूरणमावश्यकम् ) ।।**

**[अवतारिका]**

**हिंदी -** पूर्वगाथा के बाद भगवान और आळ्वार के बीच में एक संवाद चला, जिस का विवरण करने के बाद प्रकृत गाथा का अर्थविवरण किया जाये, तो उस से यथार्थ अर्थ समझने में वाचकों की सुविधा होगी । पिछली गाथा का यह तात्पर्य निकला था कि आळ्वार, फिर भी अपनी नीचता का अनुसंधान करते हुए भगवान से विमुख होने लगे । तब भगवान ने विचार किया - 'इस प्रकार वारंवार नैच्यानुसंधान करते हुए मुझ से दूर हट जाने चाहनेवाले आळ्वार का यह रोग मिटाने में समर्थ किसी प्रबल उपाय का प्रयोग करना चाहिए । अस्तु ; ऐसा करूँगा' ; और आळ्वार से कहा - 'हे मुनिसार्वभौम ! आप जानते हैं कि मैं ने श्रीकृष्णावतार में व्रज में मक्खन खाया; क्या आप बता सकते हैं कि मैं ने क्यों ऐसे किया'? भगवान के श्रीमुख से ही यह रहस्य जानने की इच्छा से आळ्वार ने प्रत्युत्तर दिया -

'मैं नहीं जानता' । यह सुनकर भगवान ने कहा - 'यदि आप नहीं जानते, तो मैं बताऊँगा, सुन लीजिए । पहले एक समय मैं ने सारे भूमंडल को निगलकर फिर बाहर निकाला था । उस के बाद मुझे यह भय हुआ कि पेट में थोडी मिट्टी रह गयी होगी और मानवों की भांति मुझे भी अजीर्ण का रोग उत्पन्न होता होगा । यह रोग रोकने के लिए विरेचन का ओषध लेने की भावना से मैंने व्रज में मक्खन खाया' । आळवार ने इस का यह प्रत्युत्तर दिया - 'प्रभो ! आप यह क्या कह रहे हैं ? यह तो बडी विचित्र वार्ता हुई । यद्यपि यह सत्य है कि आप ने प्रलयकाल में जगत को निगल लिया और सृष्टिकाल में उसे बाहर निकाल दिया । परंतु यह कब की बात है ? और व्रज में मक्खन खाने की बात कब की है ? दोनों के बीच में बहुत समय का अंतर है । अतः आप की बात सर्वथा असंगत मालूम पडती है'। तब भगवान ने कहा कि - 'हे मुनिवर ! मेरे मक्खन खाने का कारण पूछे जाने पर आप स्वयं कुछ प्रत्युत्तर देते नहीं ; मेरी बात मानते भी नहीं । अतः अब आप ही फिर ठीक सोच कर मेरे प्रश्न का योग्य उत्तर दीजिए' । आळवार ने इस का यह उत्तर दिया - 'प्रभो ! मेरा तो यह अभिप्राय है कि आप ने अपने भक्तों के करस्पर्श से पवित्र बन गए पदार्थ को परम भोग्य मानते हुए ही मक्खन खाया'। फिर भगवान ने कहा - 'हे मुनिवर ! यह तो बहुत प्रसन्नता की बात है कि आप ठीक तत्त्व जानते हैं । ठीक है । अब जान लीजिए कि वह मक्खन मुझे जितना मधुर लगा, आपका संश्लेष भी मुझे ठीक इतना ही मधुर लगता है ; अतः अब यदि आप मुझे अपना संश्लेष रस न देते हुए मुझ से दूर भाग जायंगे, तो आप को वही लोक मिलेगा, जो मेरे मख्कन खाने में विघ्न डालनेवाले को मिलेगा'। यह संवाद प्रकृत गाथा में सर्वसुलभरीति से उपवर्णित है । तथा च इस गाथा का परमतात्पर्य यह हुआ कि 'व्रज में नवनीतभोजन की भांति मेरा उपभोग करने के लिए भी भगवान बहुत समुत्सुक हैं ; फिर मेरा नैच्यानुसंधान किस काम का होगा' ?

[प्रतिपदार्थ]

**विवरणम् - हे अत्याश्चर्यमय गुणचेष्टितवाले भगवन् ! आप ने बहुत पहले सातों लोकों को निगल लिया (अपने पेट में रख दिया) ; फिर (सृष्टिकाल में) उन सब को बाहर निकाल कर, (फिर बहुत समय के बाद) अपनी माया से (माने संकल्प से) क्षुद्रमानवों के हेय शरीर के सदृश विग्रह लेकर, इस लोक में प्रकट होकर मक्खन खाया । यह कैसे कहा जा सकता है कि सात लोकों को बाहर**

**निकालने के समय पेट में कुछ मिट्टी के रह जाने की और उस से साधारण मानवों की, भाँति अजीर्ण होने की शंका से औषध सेवन करने की भावना से आप ने वह मक्खन खाया ? (तत्व तो यही है कि आश्रितों के करस्पर्श से सुगंधित वस्तु पर प्यार करते हुए ही आप ने मक्खन खाया ।। )**

**मायोम् तीयवलवलै पेरुमा वञ्जप्पेय् वीय**
**तूय कुळवियाय् विडप्पाल् अमुदा अमुदु शेय्दिट्ट**
**मायन् वानोर् तनित्तलैवन् मलराळ् मैन्दन् एव्वुयिर्क्कुम्**
**तायोन् तम्मान् एन्नम्मान् अम्मा मूर्तियै च्चान्र्दे ।। ९ ।।**

**(गाथा) - मायां तामपि पूतनां विषमयीं हन्तुं स्वयं निर्मलो**
**बालोऽसौ विषमिश्रमप्यमृतवत्स्तन्यं महात्माऽपिबत् ।**
**देवानामपि देवमेव कमलाकान्तञ्च सर्वात्मनां**
**वात्सल्याम्बुनिधिं प्रभुं मम विभुं संश्रित्य जीवाम तम् ।। ९ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - क्रूरहृदयां, बहुजल्पितकरीं, अत्यन्तवञ्चनविदग्धां पूतनां नाम पिशाचीं मारयितुकामं, अत्यन्तशिशुभावे सत्यपि तस्याः विषदिग्धस्तन्यम् अमृतनिर्विशेषम् आस्वादितवन्तं, आश्चर्यस्वभावं, नित्यसूरीणाम् अद्वितीयमधिपतिं, लक्ष्मीवल्लभं, सर्वस्य जगतो मातृवद्वत्सलं, सर्वस्वामिनं, विलक्षणदिव्यमङ्गलविग्रहविशिष्टं च भगवन्तमुपसृप्य साहित्येन संजीवेम । वैमुख्यतो विनाशं न कदाऽपि विन्देम ।।**

**[नीचसंश्लेषोऽपि भगवते भोग्यः]**

अधस्तनगाथायां भगवत उक्तिविशेषः कयाचन वैखर्या प्रसञ्जितोऽभूत् । का सा भगवदुक्तिः ? 'व्रजे नवनीतास्वादनवत् परमभोग्यो हि मम मुने ! भवता सह संश्लेषः' इत्येषा । इमामाकर्णितवान् मुनिवरः प्राह - 'भगवन्! कीदृशोऽयं ते भ्रमः! वस्तुतो विषम् अमृतं हि मन्यसे ; प्रेमघनहृदयैः महात्मभिस्सह संश्लेषो हि सत्यं ते परमभोग्यः ; सर्वथा वराकेण मया सह संयोगस्तु विषमेव ननु' इति । अथ भगवानाह - 'मुनीन्द्र ! विषमेवेति

ननु सत्यं कथ्यते ? अहमपि विषमेवेति कामम् अङ्गीकरोमि ; नवनीतास्वादनवृत्तान्तमिव पूतनास्तन्यास्वादनवृत्तान्तमपि ननु जानाति भवान् ? **'स्तन्यं तद्विषसंमिश्रं रस्यमासीज्जगद्गुरोः'** इति हरिवंशे व्यासमहर्षिकथितम् अवधत्ताम् अत्रभवान् । विषमपि मम नवनीतादपि अतिभोग्यमेव खलु भोः! इति । तदिदम् आकर्ण्य मुनिवरः 'आः! कीदृशीयम् अदसीया चातुरी ! सर्वथाऽपि जयत्ययमेव' इति प्रहृष्यन् तमेव भगवत्स्मारितं पूतनावृत्तान्तम् अनुसंदधानो विधूतवैमुख्यकथः परिपूर्णमाभिमुख्यम् उपदर्शयति गाथयाऽनया । 'साहित्येन संजीवेम ; वैमुख्यतो विनाशं न कदाऽपि विन्देम' इति गाथायामस्याम् अन्तिमं वाक्यमवधेयम् ।

### [पूतनायाः वञ्चनाविदग्धता]

जगज्जीवातोः कृष्णस्य मारणं संकल्प्य यतः समागता पूतना, तत एव सा क्रूरहृदयेति विशेष्यते । **'कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल काऽपि माया। निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिराविवेश'** ।। (यादवाभ्युदये ४-३) इत्युक्तरीत्या यतः सा मातृवेषधारणेन समागता, ततो मातृवत् वात्सल्यातिशयम् अभिनयन्ती प्रेमविजल्पितानि बहूनि कथयामास इति सूच्यते **बहुजल्पितकरीम्** इत्यनेन । अन्यत् स्पष्टम् ।।

### [प्रतिपदार्थ]

**हिंदी - अतिक्रूरहृदया, बहुत बकनेवाली और अत्यंत कपटी पूतना नामक पिशाची को मारने के लिए अति शैशव में रहते हुए ही विष लगे हुए उस के स्तन्य को अमृत की भांति पीनेवाले, अत्याश्चर्यस्वभाव, नित्यसूरियों के अद्वितीय नाथ, लक्ष्मीजी के नाथ, माता के समान समस्त जगत के विषय में वत्सल, सर्वस्वामी, आत्मेश्वर और विलक्षणदिव्यमंगलविग्रहवाले भगवान के समीप जाकर उन से मिलकर उज्जीवित हो जाएँगे ; न तु कभी उन से दूर भागकर विनष्ट होंगे ।।**

### [नीचों का संश्लेष भी भगवान के लिए भोग्य है]

पूर्वगाथा में भगवान का यह चमत्कारपूर्ण वचन बताया गया कि 'व्रज में मक्खन खाने की भांति मैं आपके संश्लेष को भी परमभेग्य मानता हूं'। यह सुनकर आळवार ने कहा - 'प्रभो ! आप का यह कैसा भ्रम है कि आप विष को ही अमृत मान बैठे हैं ?

प्रेमघनहृदयवाले महात्माओं से मिलना आप को अति भोग्य होगा ; परंतु सर्वथा हेय मुझ से मिलना आप को भी विष-सदृश ही होगा'। तब भगवान बोले - 'आप अपने संश्लेष को विषसदृश बता रहे हैं ? अस्तु । मैं भी इस बात का स्वीकार करता हूं । परंतु आप जानते होंगे कि नवनीत भोजन की भांति मेरे पूतनास्तन्यपान का भी एक चरित्र है'। इस का वर्णन करते हूए श्रीव्यास महर्षि ने हरिवंश में कहा - **'स्तन्यं तद्विषसंमिश्रं रस्यमासीज्जगद्गुरोः'**। (५३) (विषमिश्रित वह स्तन्य भी भगवान को परमभोग्य लगा ।) अतः सुदृढ समझ लीजिए कि मुझे विष, मक्खन से भी अधिक प्रिय लगता है । यह सुनकर आळ्वार ने विस्मित होकर सोचा कि 'अहो! भगवान बडे चतुर हैं । इन्होंने मुझे कैसे उपाय से जीत लिया'! फिर इस गाथा में वे अत्यानंद से भगवान से स्मारित उसी पूतनास्तन्यपानवृत्तांत का अनुसंधान करते हुए सर्वथा वैमुख्य छोडकर, परिपूर्ण आभिमुख्य बता रहे हैं । गाथा के अंत में ये शब्द ध्यान देने योग्य हैं - 'उन से मिलकर उज्जीवित हो जायंगे, न तु कभी उन से दूर भाग कर विनष्ट होंगे' ।

**[पूतना का कपट]**

जगत के जीवनभूत श्रीकृष्णशिशु का संहार करने की इच्छा से आनेवाली पूतना, को क्रूरहृदया कहना उचित ही है । श्री वेदांतदेशिकस्वामीजी यादवाभ्युदय में कहते हैं कि पूतना, यशोदा का वेष लेकर व्रज आयी थी ; अतः उस ने माता की भांति वात्सल्य जताती हुई प्रेमालाप भी किया । इस अर्थ का सूचक है यह शब्द - बहुत बकने वाली । बाकी सब स्पष्ट है ।।

**शान्दे विरुवल् विनैहळुम् शरित्तु माय प्पत्तरुत्तु**
**तीन्दु तन्पाल् मनम् वैक्क त्तिरुत्ति वीडु तिरुत्तुवान् ।**
**आन्दे ञान ञ्जुडराहि अहलम् कीळ्मेल्ळविरन्दु**
**नेन्दे वुरुवाय् अरुवाहुम् इवत्तिन् उयिराम् नेड्माले ।। १० ।।**

**(गाथा) - पूर्णज्योतिर्मयोऽसौ हरिरिह परितश्चोपरिष्टादधश्च**
**व्याप्यास्ते चाप्रमेयस्सकलचिदचितामन्तरात्मा परात्मा ।**
**मन्नाथो द्वन्द्वकर्मप्रतिहतिमुखतो मेऽत्र सङ्गं प्रहत्य**
**स्वस्मिंश्चित्तं मदीयं भुवि दिवि च सदा स्थापयन्मां वृणोति ।। १० ।।**

[प्रतिपदार्थः]

**विवरणम् - अविनाभूतं पुण्यपापकर्मसञ्चयम् अपाकृत्य, अज्ञानहेतुकं विषयसङ्गं च विनिवर्त्य, मामकं मनः स्वस्मिन्नेव केवलं व्यासक्तं विरचय्य, मदर्थं संकल्पितं मोक्षं च परिष्कर्तुं प्रवृत्तोऽभूत् सः, यो हि पुष्कलज्ञानप्रभापरिवृतो दशदिग्व्यापकः अतिसूक्ष्मचिदचिद्वस्तुषु अप्यन्तर्यामी व्यामोहैकनिरूपणीयो भगवान् ।।**

[आभिमुख्येन कर्मसमुच्चयापोहनम्]

मुनीन्द्रस्य परमानन्दसंदोहमयी गाथा सेयम् । भगवता रामानुजार्येण श्रीरङ्गगद्ये **'तिलतैलवद्दारुवह्निवत् दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूप-दुरत्ययभगवन्मायातिरोहितस्वप्रकाशः'** इत्यनुग्रहीतरीत्या दुर्विवेचतया घनसंश्लिष्टं पुण्यपापरूपकर्मसमुच्चयं स्वकीयं भगवान् अपाकृतवानिति सानन्दम् अभिधीयते । प्रकृते अनर्हतानुसन्धानप्रयुक्तवैमुख्यव्यपोहनं यदकारि भगवता, तदेव सकलकर्म-समुच्चयनिरसनात्मकम् अभिप्रेयते मुनिवरेण । अथ विषयसङ्गविनिवर्तनं नाम रुचिवासनादीनामपि अवधूननम् । **मामकं मनः स्वस्मिन्नेव केवलं व्यासक्तं विरचय्य -** तुलसी यथा स्वाभाविकेन सौरभेणोत्पद्यते तथा मुनिवरोऽयमपि भगवति स्वाभाविकमेव व्यासङ्गम् उद्वहन्नवतीर्णः; ततश्च नैतदपूर्वतया वक्तव्यम् । तथाऽपि मध्ये अनर्हतानुसन्धानप्रयुक्ततया भगवति व्यासङ्गस्य शैथिल्याङ्कुरजननात् इदमिदानीम् अतिशयेन वक्तव्यमभूत् । **मदर्थं संकल्पितं मोक्षं च परिष्कर्तुं प्रवृत्तोऽभूत्** - तदिदं वाक्यमत्यन्तविस्मयनीयं भायात् । सर्वदा सर्वथा परिष्कृतस्य मोक्षस्य अधुना परिष्करणं नाम किम् ? इति प्रष्टव्यता भवेन्नाम । इदानीं मुनीन्द्रेण संश्लिष्टो भगवान् स्वकीयानन्दपारवश्येन मुनीन्द्रं प्रति कथयामास - 'स्वामिन् ! मदीयशीलगुणादिकम् अनुसंदधानः अनुभवंश्च वर्तेथाः ; प्रथमप्रबन्धे प्रथमगाथायां भवता प्रार्थितं यत् तत्परिपूरयितुं भवन्तं वैकुण्ठधाम नेतुं संकल्पितवानस्मि ; तत्र गत्वा कांश्चन परिष्कारविशेषान् विरचय्य सरभसमेव समागमिष्यामि' इति । तत् अनुवदति मुनिवरः इत्यास्थेयम् । उत्तरार्धेन भगवतः स्वरूपस्वभावादिकम् उपवर्णयति सानन्दम् ।

[प्रतिपदार्थ]

**हिंदी - मेरे साथ ही रहनेवाले पुण्यपापरूप कर्म मिटाकर, अज्ञानजनित विषयसंग भी छुडाकर, मेरे मन को अपने (भगवान ) पर ही सुदृढ आसक्त**

**बनाकर, फिर भगवान, जो समग्र ज्ञान प्रभा से परिपूर्ण, समस्तदिशाओं में भी व्याप्त, अतिसूक्ष्म चेतनाचेतनों के अंतर्यामी और (भक्तविषयक) व्यामोहशील हैं, वे मेरे लिए संकल्पित मोक्ष का भी, परिष्कार करने लगे ।**

**[भगवान की ओर आभिमुख्य से ही सकलकर्मनाश]**

यह गाथा आळ्वार के सीमातीत आनंद का प्रकाशक है । इस में वे मुख्यतया इस अंश का सानंद वर्णन कर रहे हैं कि भगवान ने आत्मा से सुदृढ मिले हुए मेरे (आळ्वार के) पुण्यपापरूप कर्म को सजड विनाश कर दिया । इस का यह तात्पर्य है कि उन्हों ने आळ्वार का स्वकीय नैच्यानुसंधानपूर्वक वैमुख्य दूर कर दिया । यही प्रकरणोचित कर्मविनाशन है । इस के बाद विषयसंगनिवारण का अर्थ है कि रुचि, वासना इत्यादियों का भी निवारण । **मेरे मन को अपने पर ही सुदृढ आसक्त बनाकर -** यद्यपि यह कोई अपूर्व अर्थ नहीं है ; क्यों कि जैसे तुलसी अंकुरित होती हुई सुगंध से विशिष्ट ही रहती है, ठीक इसी प्रकार आळ्वार भी अवतार समय से ही भगवान में संसक्तचित्त विराजमान थे। तथापि प्रकृत में नैच्यानुसंधान के कारण उस में जो विघ्न उत्पन्न हुआ था, उस के निवारणरूप उपकार का अनुसंधान करना आवश्यक हुआ । **मेरे लिए संकल्पित मोक्ष का भी, भगवान परिष्कार करने लगे ; -** यह तो अत्यंत आश्चर्य कारक वचन है । मोक्ष में कौन-सा परिष्कार करना है ? वह तो सर्वदा सभी प्रकारों से सुपरिष्कृत ही रहता है । तथापि इस वाक्य का यह तात्पर्य है - आळ्वार से मिलकर आनंदपरवश हुए भगवान ने उन से कहा कि - 'हे मुनींद्र ! आप थोडी देर मेरे इस सौशील्यगुण का ही कीर्तन व अनुभव करते करते यहीं विराजें । अब मैं तो आप से अपने पहले प्रबंध की पहली गाथा में संप्रार्थित फल (मोक्ष) का प्रदान करने के लिए आप को वैकुंठधाम ले जाना चाहता हूं ; अतः मैं पहले स्वयं उधर जाकर, वहां आवश्यक कतिपय परिष्कार रचकर शीघ्र ही लौटूँगा'। समझना चाहिए कि आळ्वार यहाँ इस वचन का अनुवाद कर रहे हैं । गाथा के अवशिष्ट भाग में आळ्वार भगवान के स्वरूपस्वभावादियों का सानंद वर्णन करते हैं ।।

**माले मायप्पेरुमाने मामायने येन्नेन्नु**
**मालेयेरि माल् अरुळालू मन्नु कुरुहूर् चडहोपन्**

पालेय् तमिळर् इशैकारर् पत्तर् परवु मायिरत्तिन्
पालेपट्ट इवै पत्तुम् वल्लार्क्कु इलै परिवदे ।। ११ ।।

। इति सहस्रगीत्यां प्रथमशतके पञ्चमदशकं समाप्तम् ।

(गाथा) - सर्वोत्कृष्टोऽसि मायिन् ! परमपुरुष ! हे माधवेत्येव मुग्ध-
स्तस्येशस्य प्रसादादवहितहृदयश्श्रीशठारिर्महात्मा ।
साहस्रं चाह शस्यं द्रविडबुधवरैर्गानलोलैश्च भक्तै-
स्तत्रेदं रत्नरूपं दशकमपि विदन् वीतदुःखस्सुखी स्यात् ।।

। इति सहस्रगाथारत्नावल्यां प्रथमशतके पञ्चमदशकं समाप्तम् ।

[प्रतिपदार्थः]

**विवरणम् - स्वरूपतो विभुत्वशालिन् ! आश्चर्यगुणतश्च विभुत्वशालिन् ! अत्यद्भुतचेष्टितैश्च विभुत्वशालिन् ! भगवन् ! इति उच्चावचनामानि संकीर्त्य चित्तोन्मादमवाप्य भगवतः कृपया संश्लिष्टेन श्री कुरुकापुरीशशठकोपसूरिणा अनुगृहीतम् परमभोग्यद्राविडशास्त्रविशारदानां संगीतकलाविचक्षणानां भक्तिभाजां च हृदयहारिण्यां सहस्रगीत्याम् अन्तर्गतमिदं दशकमधीयानाः दुःखदवीयांसो भवितारः ।।**

**[सर्वेश्वरस्य महत्त्वानुसन्धानम्]**

अयोग्यतानुसन्धानतः अपसर्पणेच्छया स्वस्य यदजनि दुःखं, तच्च तादृशानि च दुःखानि एतद्दशकानुसन्धाननिरतानां सतां नैव जायेरन्निति फलकीर्तनेन समाप्यते इदं दशकम् ।। संजातवैमुख्यमपि स्वात्मानं परमकारुणिको भगवान् केवलं स्वकीययैव अव्याजकृपया स्वेन सह संश्लिष्टकार्षीत् इति पूर्वार्धेन कथयति मुनिवरः। अनर्हतानुसन्धानेन अपसर्पणरुचिर्या जाता स्वस्य, सा चित्तोन्मादकृता इत्यपि स्वयं सूचयति । प्रथमपादे भगवतो महत्त्वं पदत्रयेण प्रतिपाद्यते । श्रीभाष्योपक्रमे ब्रह्मशब्दार्थविवरणावसरे '**सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः ; बृहत्त्वं च स्वरूपेण गुणैश्च यत्र अनवधिकातिशयं सोऽस्य मुख्योऽर्थः ; स च सर्वेश्वर एव**' इत्यनुगृहीतम् इहानुसन्धेयम् । स्वरूपेण गुणैः

चेष्टितैश्च महत्त्वशालिन् भगवन् ! इति सन्ततमाक्रन्दनमेव स्वस्य कृत्यमिति प्रथमपादेन प्रोक्तवान् भवति ।

[सहस्रगीत्याः प्रभावः]

दशकस्यास्य अवयविभूतायाः सहस्रगीत्याः प्रभावः तृतीयपादे प्रख्याप्यते । द्रमिडभाषारसिकाः लक्ष्यग्रन्थो लक्षणग्रन्थश्च अयमिति भृशम् अभिनन्दन्ति। संगीतशास्त्रज्ञाश्च दिव्यगानोपयोगी सोऽयं दिव्यप्रबन्धः इति रमन्ते । परमभक्तास्तु भक्त्युत्पादको भक्त्यभिवर्धकश्च अयं दिव्यप्रबन्धः इत्याद्रियन्ते । तत्र तत्र भगवत्कृतित्वेनैव स्वात्मना अभिधीयमानस्यास्य दिव्यप्रबन्धस्य एतादृशं प्रशंसनं न स्वात्मप्रशंसायाम् अन्वेतीति अवगन्त्यम् ।।

। इति प्रतमशतके पञ्चमदशकं विवरणं समाप्तम् ।

[एतद्दशकसारार्थसंग्राहको द्रमिडोपनिषत्सङ्गतिश्लोकः]

**स्वालिङ्गनादिचपले पुरुषोत्तमेऽपि**
**स्वायोग्यतामभिदधद्विमुखः शठारिः।**
**त्रैविक्रमादिचरितं प्रविबोध्य तेन**
**नीतः स्वशीलवशतामथ पञ्चमेन ।।**

[प्रतिपदार्थ]

**हिंदी - 'हे विभु (माने बडे) स्वरूपवाले ! हे आश्चर्यगुणनिधे ! हे अत्यद्भुत चेष्टितवाले' ! इत्यादि अनेक शुभनाम रटता हुआ, उन्मत्त-सा बनकर, भगवान की कृपा से उन से संश्लिष्ट होनेवाले श्री कुरुकापुरी के स्वामी श्री शठकोपसूरि से अनुगृहीत, क्षीरसदृश मधुर द्राविडी भाषा के विद्वानों, गानकला-प्रवीणों तथा भक्तों के हृदयहारी सहस्रगीति के अंतर्गत इस दशक का अध्ययन करनेवालों को किसी प्रकार का दुःख न होगा ।।**

[भगवान के महत्त्व का अनुसंधान]

इस गाथा में आळ्वार से यह फलकीर्तन किया जा रहा है कि इस दशक के अध्ययन करनेवाले महात्माओं को वह दुःख नहीं होगा, जो कि अपने को हुआ था;

अर्थात् नैच्यानुसंधान पूर्वक दूर भाग जाने की इच्छा से जो दुःख उत्पन्न हुआ, वह दुःख और ऐसा दूसरे किसी प्रकार का दुःख उन्हें नहीं होगा । गाथा के पूर्वार्ध में आळवार इस अर्थ का वर्णन करते हैं कि 'परमकारुणिक भगवान ने केवल अपनी निर्हेतुक कृपा से मेरा वैमुख्य दूर कर मुझे अपने साथ मिला लिया'। **उन्मत्त-सा बनकर कहने** का यह भाव है कि उक्तप्रकार नैच्यानुसंधान करता हुआ भगवान को छोडकर दूर भागने चाहना केवल पागलपन है । गाथा के प्रारंभ के तीन संबोधन भगवान की महत्ता का वर्णन करते हैं । श्रीभाष्य के उपक्रम में ब्रह्मशब्दार्थ के विवरण करते हुए श्री रामानुजस्वामी लिखते हैं - **'सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः ; बृहत्त्वं च स्वरूपेण गुणैश्च यत्र अनवधिकातिशयं सोस्य मुख्योऽर्थः। स च सर्वेश्वरः एव'**। इस का यह अर्थ है - 'महत्त्ववाली वस्तु ही ब्रह्म कहलाती है । अतः इस शब्द का मुख्य वाच्य वही होगा जिस में स्वरूप का और गुणों का महत्व परिपूर्ण हो; ऐसे व्यक्ति तो साक्षात् सर्वेश्वर ही हैं'। यह भाव है - भगवान का स्वरूप विभु, माने सब से बडा है ; एवं उन के कल्याणगुण भी सब से अधिक हैं ; अतः इस प्रकार, स्वरूप व गुणों से बडे होने से भगवान ब्रह्म कहलाते हैं । अब आळवार बताना चाहते हैं कि सर्वदा 'स्वरूप, गुणों व चेष्टितों से महत्ववाले हे भगवन्'! रटते रहना ही अपना स्वभाव है । अर्थात् भगवान जैसे अपने स्वरूपगुणों से सब से बडे हैं, ठीक वैसे ही अपने विलक्षण चेष्टितों से भी बडे हैं ।

**[सहस्रगीति का प्रभाव]**

तीसरे पाद में सहस्रगीति का विलक्षण प्रभाव बताया जाता है । तथाहि - द्राविड भाषा के वेत्ता इसे महान लक्ष्यग्रंथ मानते हैं ; और भक्त जन तो इसे भक्ति का उत्पादक व अभिवर्धक मानकर इस का आदर करते हैं । यह अपने प्रबंध की प्रशंसा आळवार की आत्मप्रशंसा नहीं होगी ; क्यों कि तत्र तत्र आप स्पष्ट बता देते हैं कि सहस्रगीति के कर्ता साक्षात् भगवान ही हैं, स्वयं तु निमित्तमात्र। अतः वास्तव में यह भगवान की ही प्रशंसा है ।।

**।। सहस्रगीति के पहले शतक का पाँचवाँ दशक का हिन्दी व्यख्यान समाप्त हुआ ।।**

**।। आळवार तिरुवडिहळे शरणम् ।।**

✡ ✡ ✡

## प्रथमशतके षष्ठं दशकम्

### अवतारिका

### [भगवतः स्वाराधत्वम्]

**विवरणम् -** एकैकस्मिन्नपि दशके भगवतः एकैको गुणः प्राधान्येन अनुभूयते मुनिवरेणेति पुनः स्मार्यते । अतीतेषु पञ्चसु दशकेषु क्रमेण परत्वं, भजनीयत्वं, भक्तिसुलभत्वं, अपराधसहत्वं, सुशीलत्वम् इत्येते गुणाः अन्वभूयन्त । अथ इदानीं षष्ठे दशके स्वाराधत्वम् इत्यसौ अनर्घो गुणोऽनुभूयते । सुखेन आराधयितुं योग्यत्वं हि स्वाराधत्वं नाम । हर्षप्रकर्षजनको व्यापारविशेषः एव आराधनम् ; तदिदं देवतान्तरेषु अत्यन्तम् आयासतस्साध्यम् ; भगवति तु आयासलेशमन्तरेण सुसाधमिति तत्तदाराधनप्रकारप्रतिपादकैः प्रमाणैः सम्यगवगम्यते । देवतान्तराणि तावत् छागबलिः कुक्कुटबलिरित्येवंरूपाणि जीवहिंसात्मकान्येव आराधनानि कामयन्ते इति प्रत्यक्षतोऽपि प्रेक्षामहे । भगवांस्तु स्वयं गायति - **'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः'**। (भ.गी ९-२६) इति श्लोकेऽस्मिन् पूर्वार्धे **'यो मे भक्त्या प्रयच्छति'** इति कथनानन्तरं पुनरुत्तरार्धे **'तदहं भक्त्युपहृतम्'** इति पुनः प्रयोगो व्यर्थस्सन् किञ्चित् ज्ञापयति - भगवान् समर्प्यमाणे वस्तुनि दृष्टिं न निधत्ते ; समर्पकस्य पुंसो हृदयशुद्धिमात्रे दृशं दिशतीति । **'याः क्रियाः संप्रयुक्तास्स्युरेकान्तगतबुद्धिभिः । तास्सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्'**।। (महा.भा.शां.प.१७१-६३) सञ्जयस्य अनर्घं वचनम् **'अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात् । अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः'**। (महा.भा.उ.प.८६-१३) इत्येतत् श्रियःपत्युः भगवतः स्वराधत्वे सर्वोत्तुङ्गं स्वानुभवसाक्षिकं च प्रमाणमिति प्रतिपत्तव्यम् । स एष स्वाराधत्वरूपो गुणविशेषः एतस्मिन् दशकेऽनुभूयते प्रकाश्यते च ।।

### अवतारिका

### [भगवान सुलभ आराध्य हैं]

**हिंदी -** यह अर्थ बताया जा चुका है कि श्री शठकोपसूरि इस सहस्रगीति के एकैक दशक में भी मुख्यतया भगवान के एकैक गुण का अनुभव करते हैं । इस प्रकार

---

अस्मिन् दशके - ईश्वरस्य कल्याणगुणानीदृशानजानानाश्चेतना नरकं प्राप्नुवन्तीति करुणया श्रीशठारिः - 'नायं दुराराधस्सर्वेषाम् उज्जीवनाय सुलभः' - इति चेतनान् बोधयति ।

वे पिछले पांच दशकों में क्रमशः भगवान के परत्व, भजनीयता, भक्तिसुलभता, अपराधसहत्व और सौशील्य नामक गुणों का अनुभव करने के बाद, इस प्रकृत छठे दशक में स्वाराधत्व नामक विशिष्ट गुण का अनुभव करने लगते हैं । स्वाराधत्व माने अतिसुलभतया आराधन करने योग्य रहना । किसी को प्रसन्न करने का काम ही उसका आराधन कहलाता है । अब शास्त्र बताते हैं कि जहाँ दूसरे देवों को प्रसन्न करने के लिए हमें बहुत प्रयास करना पडता है, वहाँ भगवान का आराधन बडा ही सरल है । कभी कभी अन्य देवों को प्रसन्न करने के लिए उन्हें बकरा, मुर्गा इत्यादियों की बलि चढानी पडती है। परंतु भगवान स्वयं गीता में गाते हैं - **'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः'**।। (भ.गी. ९-२६) (अर्थात् जो कोई भक्ति के साथ मुझे कोई भी पत्र, पुष्प, फल अथवा केवल पानी अर्पण करेगा, तो मैं भक्ति-पूर्वक दिये हुए उन सब का स्वीकार करता हूं ।) इस पद्य के उत्तरार्ध में **'भक्त्युपहृत'** शब्द पुनरुक्त अथवा बेकार प्रतीत होगा । परंतु इसका अर्थपूर्ण उपयोग हुआ है । यह शब्द बताता है कि भगवान अपने लिए दी जानेवाली वस्तु का नहीं, किंतु देनेवाले की भक्ति का ही ख्याल करते हैं । अत एव उनका यह वैभव बताया गया है कि, **'याः क्रियास्संप्रयुक्तास्स्युरेकान्तगतबुद्धिभिः । तास्सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्'** ।। (महा.भा.शां.प १७१-६३) (भगवान के अनन्य भक्त, उन की जो सेवा करते हैं, उन सब का वे अपने सिरसे (माने अत्यंत प्रेम व आदर के साथ) स्वीकार करते हैं) । एवं भक्ताग्रेसर संजय का यह वचन भी इसी अर्थ का पोषक है - **'अन्यत्पूर्णादपां कुम्भात् अन्यत्पादावनेजनात् । अन्यत्कुशलसंप्रश्नान्नचेच्छति जनार्दनः'**।। (महा.भा.उ.प.८६-१३) (अर्थात् भगवान पूर्णकुंभ, पाद धोने का पानी और कुशल प्रश्न के सिवा दूसरी कोइ पूजा माँगते नहीं) । ऐसे अनेक प्रमाणों से बताये हुए भगवान का स्वाराधत्व नामक गुण ही इस दशक में विस्तार से उपवर्णित किया जा रहा है ।

**परिवदि लीशनै प्पाडि विरिवदु मेव लुरुवीर्**
**पिरिवहै यिन्नि नन्नीर् तूय् पुरिवदुवुम् पुहैपूवे ।। १ ।।**

**(गाथा) -** **सङ्गाय पूर्णविभवं निरवद्यमीशं**
**ज्ञानादिपूर्तिमपि चेत्परिलब्धुकामाः ।**

**यूयं त्वनन्यशरणा भजताद्य नाथं**
**धूपं च पुष्पमपि तत्र समर्प्य तीर्थैः ।। १ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - अखिलहेयप्रत्यनीकं सर्वेश्वरं स्तुत्वा स्वरूपविकासं लिप्समाना भो जनाः ! प्रयोजनविशेषं प्राप्य सद्योऽपसरणे रुचिम् अपहाय शुद्धं सलिलं समर्प्य धूपपुष्पोपहरणं पर्याप्तम् ।।**

**[सारार्थः]**

भगवदाराधनोपकरणानां लाघवमिव सुस्पष्टं प्रतिपाद्यते । अर्घ्यपाद्याचमनीय उपयोगिसलिलार्पणेन धूपसमर्पणेन च केवलं सः भगवान् परमां तृप्तिं विन्दतीति विनिवेद्यते ।

**[क्षुद्रफलकामनानिषेधः]**

पूर्वार्धेन प्रकृतार्थोपदेशपात्रभूताः भक्तजनाः सबोध्यन्ते । हेयप्रत्यनीकं भगवन्तं संकीर्त्य **'स्वेन रूपेणाभिनिष्पद्यते'** (छां.उ.८-१२-२) इत्याम्नातं स्वरूपविकासं प्रेप्सन्तो भो जनाः! इत्येवं संबोधनस्य किं हृदयमिति चेत्, फलं तु सर्वोत्तुङ्गम् ; तदवाप्तये भूरितराः क्लेशाः अनुभोक्तव्याः भवेयुः किमिति विचिकित्सा माभूत् वः ; अनायाससाध्येन लघुनाऽऽराधनेन महत्तरं फलं सुसम्पादमित्युक्तं भवति । **प्रयोजनविशेषं प्राप्य सद्योऽपसरणे रुचिं विहाय** इत्यनेन क्षुद्रफलकामना निषिध्यते । प्रायः कृत्स्नं जगत् पुत्रपश्वन्नादिफल्गुप्रयोजनकाङ्क्षया भगवन्तम् उपसृप्य तल्लाभतः कृतकृत्यं सत् अपक्रामति इति पश्यामः ; मा स्म तथाविधाः भवत यूयमिति परमकृपामूलकोऽयम् उपदेशः ।

**[भगवदाराधनोपकरणानि]**

**शुद्धं सलिलं समर्प्य** इत्यनेन गङ्गादिपरमपवित्रतीर्थसम्पादनप्रयासो न विधीयते; शुद्धं घृतमित्युक्ते वस्त्वन्तरसंमिश्रणविरहितं घृतमिति यथा ह्यर्थस्सिध्यति, तथैवात्रापि एलालवङ्गघुसृणादिसंयोजनरहितं औत्पत्तिकं तोयमपि अलमिति कथितं भवति । धूपस्य पुष्पस्य च विशेषणात् यः कोऽपि वा भवतु धूपः, यत्किमपि वा भवतु पुष्पम्, नात्र विशेषविवक्षा इत्युक्तं भवति ।।

[प्रतिपदार्थः]

**हिंदी - समस्त दोषों से अलिप्त भगवान की स्तुति कर उस से स्वरूपविकास पाने चाहनेवाले हे मनुष्यों ! भगवान से कुछ अल्प प्रयोजन पाकर उन के यहां से लौटने की इच्छा छोड दें और उन्हें शुद्ध तीर्थ का अर्पण कर उस के बाद चाहे जो भी धूप और पुष्प का अर्पण करें, वही पर्याप्त पूजा है ।।**

[सारार्थ]

इस गाथा में भगवान की सेवा करने के लिए आवश्यक सामग्री बहुत सुलभ बतायी जाती हैं । तथाहि - भगवान को अर्घ्य पाद्य आचमनीयों के लिए जलार्पण के बाद थोडे धूप व पुष्प के अर्पण करने मात्र से उन की पूजा पूर्ण हो जायगी और वे बहुत तृप्ति पाएँगे ।

[अल्प फल की कामना का निषेध]

प्रकृत उपदेश के पात्र सज्जनों का यह संबोधन है - **समस्त दोषों से दूर भगवान की स्तुति कर** - इत्यादि । इनका अपेक्षित फल है समस्त कर्मबंधनों से मुक्त होकर भगवान के समान होकर अपने आत्मस्वरूप को अत्यंत विकसित बनाना । ऐसे महान फल प्राप्त करने की सामग्री तो इन के पास बस ! इतनी ही है कि भगवान की स्तुति व पूजा । अतः यह शंका हो सकती है कि ऐसे महान फल पाने के लिए बडे साधन की आवश्यकता होगी ; यह साधन हम कहाँ से ला सकेंगे । इस शंका का यह समाधान है कि भगवान की पूजा बडी सरलता से संपन्न होती है । **भगवान से कुछ अल्प प्रयोजन पाकर उन के यहां से लौटने की इच्छा छोडकर** - कहने से क्षुद्रपुरुषार्थकामना का निषेध किया जाता है । हम देखते हैं कि प्रायः भगवान की सेवा करनेवाले लोग उन से पुत्र, पशु, अन्न इत्यादि अल्प प्रयोजन प्राप्त करके लौट जाते हैं और बाद में उन का ख्याल तक नहीं करते । अतः अब आळ्वार परमकृपा से अपने श्रोताओं को यह उपदेश दे रहे हैं कि 'तुम ऐसा अल्प फल का विचार मत करो'।

[आराधन के उपकरण]

शुद्ध तीर्थ का अर्पण कर कहने का यह अर्थ नहीं है कि गंगा यमुनादि पवित्र तीर्थ से ही भगवान की सेवा करनी चाहिए । किंतु जैसे 'शुद्धघृत' कहने से दूसरी वस्तु के असंमिश्रित घृत समझा जाता है, ठीक इसी प्रकार इलायची लवंग कर्पूर इत्यादि सुगंध द्रव्यों की खोज में प्रयास नहीं उठाते केवल पानी मात्र से पूजा करना पर्याप्त है । एवं धूप

पुष्पों के बारे में भी अमुक धूप व पुष्प ही लाने की कोई आवश्यकता नहीं है ; किंतु जो धूप व पुष्प आसानी से मिले उसी से काम चलाया जा सकता है ।।

**मदुवार् तण्णन्तुळायान् मुदुवेदमुदल्वनुक्कु**
**एदुवेदेन् पणियेन्नाद अदुवे आट्चेय्यु मीडे ।। २ ।।**

**(गाथा) - सुस्वादुगन्धतुलसीधरमप्रमेयं**
**वेदैश्च वेद्यमनघं पुरुषं पुराणम् ।**
**आराधयामि कथमित्यपि माऽस्तु चिन्ता**
**सर्वं करोम्यहमितीह हि दास्यकृत्यम् ।। २ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - मधुस्यन्दिन्या तुलसीस्रजाऽलङ्कृतस्य चिरन्तनसरस्वतीप्रतिपादितोत्कर्षस्य च भगवतोऽनुरूपा सेवा कास्वित् ? मत्सुकरा सेवा च का नाम ? इति विह्वलतां विसृज्य सर्वविधकैङ्कर्येषु अन्वयस्सुशोभनः ।।**

**[आराधनस्य सर्वेऽधिकारिणः]**

आश्रयणकर्तुः समर्पणीयद्रव्ये तारतम्यपरीक्षा मा भूदिति प्रोक्तम् अधस्तनगाथायाम् । अस्यां तु, भगवद्वरिवस्यायां नाहमधिकारी इति न केनापि उदासितव्यम् इत्यभिधीयते । मधुस्यन्दीत्यादिविशेषणद्वयं यदस्ति भगवतः इह, तदिदं भगवत्पारम्यप्रतिपादने परिक्षीयते । तुलसीस्रगलङ्कृतत्वप्रयुक्तम् अखिलवेदवेद्यत्वनिबन्धनं चोत्कर्षं बिभ्रतो भगवतोऽनुरूपम् आराधनं किमस्ति नाम ? किं वाऽहं तत्राधिकारी ? इति विचिकित्सां विसृज्य, **'भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते'** ।। (रामा.अयो. कां ३०-२७) इति सौमित्रिप्रकाशितमनोरथप्रक्रियया सर्वविधेष्वपि कैङ्कर्येषु सर्वोऽपि जनः कामम् अन्वेतुमर्हति इत्युक्तं भवति ।।

**[प्रतिपदार्थ]**

**हिन्दी - मधु बहनेवाली सुंदर व सुशीतल तुलसी माला के धारण करवेनाले, पुरातन वाणी (माने अनादि वेदों) से प्रतिपादित, सर्वकारणभूत भगवान की**

**अनुरूप सेवा कौन-सी है ? एवं मेरे लिए सरल सेवा कौन-सी है ? यह चिंता छोडकर उन की सर्वविध सेवा करना ही अपने उचित काम है ।**

**[सारार्थ]**

पिछली गाथा में बताया गया कि भगवान को अर्पण किये जानेवाले द्रव्य के तारतम्य की परीक्षा करने की आवश्यकता नहीं है ; अब यह अर्थ बताया जा रहा है कि उस विषय में किसी भी मानव को, यह चिंता (यानी मैं भगवान की सेवा कर सकूंगा कि नहीं) कर के पीछे हटने की भी आवश्यकता नहीं हैं ।

**[सब आराधन के अधिकारी हैं]**

गाथा के उपक्रम में भगवान के दिये गये दोनों विशेषण उन के परत्व के द्योतक होते हैं । तथा च यह विचार हो सकता है कि तुलसीमालालंकृत और समस्तवेदप्रतिपाद्य महामहिमवाले भगवान की अनुरूप सेवा कौन-सी है ? और अत्यल्प मैं उन की कौन-सी सेवा कर सकता हूँ ? ऐसे विचारों में नहीं पडते हुए, कोई भी मानव भगवान की सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविध सेवा करने में लग सकता है और ऐसा करना आवश्यक भी होता है । जैसे लक्ष्मण जी ने निवेदन किया - **'भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते'।।** (रामा.अयो कां.३०-२७) (हे प्रभो ! आप सीतादेवी के साथ पर्वतसानुओं में विहार कीजिए ; मै आप के सोने और जागने के सभी अवसरों में सर्वविध सेवा करूंगा'।) लक्ष्मणजी की भांति सभी मानव भगवान की ऐसी नित्य सेवा कर सकते हैं ।

**ईडुम् एडुप्पुमिल् ईशन् माडुविडा देन्मनने**
**पाडु मेन्ना ववन्पाडल् आडु मेनङ्ग मणङ्गे ।। ३ ।।**

**(गाथा) - त्यागे परिग्रहविधौ च नृणां समानं**
**नैव त्यजेन्मम मनः किल तं प्रभुं मे ।**
**गानं न हि त्यजति मे रसना च तस्य**
**प्रेम्णा ममाद्य किल नृत्यति देहयष्टिः ।। ३ ।।**

[ प्रतिपदार्थः ]

**विवरणम् - केषाञ्चिदुपेक्षणं केषाञ्चिदपेक्षणमिति पक्षपातविरहिते सर्वेश्वरे मदीयं हृदयं न कदाऽपि विरक्तिं विन्दति ; मदीया जिह्वा तु तदीयानि यशांसि गायति । मदीयं वपुस्तु दैवाविष्टवत् परिनृत्यति ।।**

[ सारार्थः ]

भगवतः स्वाराधत्वानुसन्धानेन भृशं प्रहृष्टो मुनिवरः स्वकीयस्य करणत्रयस्य च भगवदेकप्रवणतां ब्रूते गाथयाऽनया । पक्षपातविरहितत्वेन विशेष्यतेऽत्र भगवान् । **'समोऽहं सर्वभूतेषु, न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्'** ।। (भ.गी.९-२९) इति भगवान् स्वयं गायति । आश्रयणीयत्वे समः इति भगवद्रामानुजभाष्यमिह अवधेयम् । **'देवानां दानवानां च सामान्यमधिदैवतम्'** (जितं.स्तो.२) इति भक्तप्रवराश्च स्तुवन्ति । एतादृशमेव पक्षपातविरहितत्वमत्र अभिहितं बोध्यम् । सर्वचेतनसाधारणसंबन्धशालिनो भगवतः एकस्मिन् आदरणं अपरस्मिन्नवधीरणं च असंभवि खलु । **'अनालोचितगुणागुणाशेषलोकशरण्य'** (जितं.स्तो.२) इति हि स्तूयते भगवान् ।।

[ प्रतिपदार्थ ]

**हिंदी - किसी की उपेक्षा करना, और दूसरे किसी की अपेक्षा करना, ऐसे पक्षपात से विरहित सर्वेश्वर भगवान के समीप से मेरा मन कभी हटता नहीं ; मेरी जीभ उन का यशोगान करती है और मेरा शरीर तो दैवाविष्ट की तरह नाचता है ।।**

[ सारार्थ ]

भगवान की स्वाराधता नामक गुण के अनुसंधान से अत्यंत प्रहृष्ट आळ्वार इस गाथा में यह कहते हैं कि मेरे तीनों करण भगवान में ही सक्त हैं ।

**[भगवान सर्वसम हैं]**

इस में भगवान पक्षपात रहित गाये गये हैं । यह इन का एक महान गुण है, जो शास्त्रों में तत्र तत्र विशेषतः उपवर्णित है । गीता में स्वयं भगवान ने भी गाया - **'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः'** । (भ.गी.९-२९) (मैं पक्षपात रहित हूं ; मेरे कोई शत्रु नहीं और न प्रिय ही है ।) इस पर भाष्य लिखते हुए श्री रामानुजस्वामीजी बताते

हैं कि भगवान आश्रयण करने के विषय में सर्वसम हैं ; अर्थात् कोई भी मानव उन का आश्रयण कर सकता है । भक्तलोग भी उन की ऐसी ही प्रशंसा करते है - **देवानां दानवानां च सामान्यमधिदैवतम्** । (जितं.स्तो.२) (अर्थात् भगवान देव व दानवों के समान देव हैं ।) प्रकृत गाथा में यही पक्षपातरहितता बतायी जा रही है । यह तो सर्वथा उचित ही है कि देव दानव मानवादि समस्त चेतनों के साथ एक प्रकार का संबंध रखनेवाले भगवान उन में पक्षपात के विना सम रह जायें । **'अनालोचितगुणागुणाशेषलोकशरण्य'** (जितं.स्तो.२) इत्यादि प्रकार से भी उन की स्तुति की जाती है । किसी के गुण दोषों की समालोचना नहीं करते हुए, एक समान सब के शरण्य होते हैं भगवान ।।

**अणङ्गॆन वाडु मेनङ्गम् वणङ्गि वळिपडु मीशन्**
**पिणङ्गि अमरर् पिदत्तुम् गुणम् केळु कोळ्हैयिनाने ।। ४ ।।**

**(गाथा) - आविष्टवत्किल वपुर्मम नृत्यतीदं**
**सम्यक्प्रणम्य मम नाथमयं हि देवैः ।**
**स्तव्योऽस्ति सूरितिलकैरपि सम्भ्रमेण**
**श्रीशस्य सद्गुणगणावळिरीदृशी हि ।। ४ ।।**

[प्रतिपदार्थः]

**विवरणम् - दैवाविष्टवत् परिनृत्यता मम वपुषा परिचर्यमाणः सर्वेश्वरः कीदृशः इति चेत्, श्रीवैकुण्ठनिकेतनैः नित्यमुक्तैरपि मिथो विवादकोलाहलविजृम्भणेन अनुभूयमानगुणगणः ।।**

[सारार्थः]

भगवतो गुणेषु 'अयमुत्तमः, अयं मध्यमः, अयमधमः' इति तारतम्यपरिकल्पना सर्वथाऽपि दुश्शका इति रस्यं रहस्यम् ।

[सर्वेऽपि गुणाः श्लाघ्याः]

परत्ववर्गे सौलभ्यवर्गे च सन्ति भूयांसो गुणाः । एकैकोऽपि गुणः रसिकैः भक्तप्रवरैः अनुभूयमानः 'अयम् असमाभ्यधिकः, असौ उत्तमोत्तमः' इत्येव वक्तव्यस्सन्

उत्तुङ्गकक्ष्यानिविष्टः एव स्यात् । **'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चितेति'** (तै.उ.आन.१-२) इत्युपनिषदाम्नासीत् । अत्र कामशब्दार्थो भगवद्गुणाः इति भगवन्तो भाष्यकाराः । तथा नाम भगवद्गुणानुभवनिरताः नित्यमुक्ताः सर्वानपि गुणान् अनुभुञ्जानाः सन्तः रासिक्यभूम्ना एकैकमपि गुणं निर्दिश्य अयमेवोत्कृष्टः इति वदन्तः, तथा नाम वदतः इतरान् सूरीन् अधिक्षिपन्तश्च विवादकेलिम् उपबृंहयन्ति । एवं तत्र सततं स्पर्धैव प्रवर्तते इति कथ्यतेऽत्र गाथायाम् । एवं च सर्वेऽपि गुणाः अविशेषेण श्लाघ्याः एव इति सिध्यति। एतादृशे अनन्तगुणसागरे भगवति मम वपुः विकृतं सत् अशेषदास्यैकसमुत्सुकं विराजते इत्युक्तं भवति ।।

**[ प्रतिपदार्थ ]**

**हिंदी - दैवाविष्ट की भांति नाचनेवाले मेरे शरीर से संसेव्यमान भगवान, श्रीवैकुंठनिवासी, नित्यसूरियों से परस्पर विवाद-कोलाहल पूर्वक संस्तूयमान, कल्याणगुणगणविभूषित होते हैं ।।**

**[ सारार्थ ]**

भगवान के परत्वसूचक तथा सौलभ्यसूचक कल्याणगुण अनंत होते हैं ; इन में से एकैक का भी वैभव अपार होता है । अतः इन में किसी एक गुण को उत्तम कहना और दूसरे किसी को मध्यम और तीसरे को अधम कहना सर्वथा अशक्य व अनुचित है ।

**[ भगवान के सभी गुण श्रेष्ठ हैं ]**

परंतु **'सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिता'** (तै.उ.आन. १-२) (मुक्त पुरुष परब्रह्म के साथ उन के काम माने कल्याणगुणों का भी अनुभव करता है) इत्याद्युपनिषद के अनुसार, जब मुक्त व नित्य लोग उन गुणों का अनुसंधान करने लगते हैं, तब एकैक गुण भी उन्हें सर्वोत्कृष्ट ही मालूम पडता है । अतः जब चार भक्त लोग, एकैक एकैक गुण के क्रम से, चार गुणों का अनुसंधान करने बैठते हैं, तब एकैक के मुख से भी यही शब्द निकलता है कि, 'अमुक गुण ही सब से श्रेष्ठ है'। फलतः उन के बीच इस विषय पर बडा वादविवाद ही उठ खडा हो जाता है । तथा च आळ्वार का कहना है कि परमपद में सर्वदा इस गुणविषयक वादविवाद का कोलाहल ही मचा रहता है । कहने का तात्पर्य है कि भगवान के सभी गुण एकदम श्रेष्ठ व परमभोग्य होते हैं । ऐसे अनंत शुभ गुण सागर भगवान के चिंतन से आळ्वार के श्रीविग्रह प्रकृत में विकृत होकर, भगवान की सर्वविध सेवा करना चाह रहा है ।।

कोळहै कोळामै यिलादान् एळह लिराग मिलादान्
विळहै विळ्ळामै विरुम्बि उळकलन्दा क्कोरमुदे ।। ५ ।।

(गाथा) - स्वीकारधिक्कृतिविहीनमरागवैरं
सुस्वादु चेदममृतं किल नित्यभोग्यम् ।
वस्तु प्रयोजनपरानपि चाप्यनन्यान्
सम्यग्विविच्य सुलभं परभक्तिभाजाम् ।। ५ ।।

[प्रतिपदार्थः]

**विवरणम् - 'अमी अल्पप्रयोजनलाभेन अपसरन्ति वा ? मया सह नित्यवासमेव परमप्रयोजनं मन्वते वा' ? इति परीक्ष्य नित्ययोगसमुत्सुकानां परमभक्तानां अमृतवत् परमभोग्यभूतो भगवान्, कतिषुचित् गुणदर्शनेन स्वीकरणं, कतिपयेषु दोषदर्शनेन दूरीकरणं चाप्यजानन् रागद्वेषविदूरगश्च विराजते ।।**

[भगवतो विलक्षणस्वभावः]

अनन्यार्हशेषत्वं, अनन्यशरणत्वं, अनन्यभोग्यत्वं चेति आकारत्रयेण संभृतसौरभाः परमैकान्तिनः विरलास्सन्ति ; एतत्प्रतिभटाकारविशिष्टाः अपशदास्तु भूयांसः सन्ति ; सर्वेऽप्यमी संमिलिताः सन्तो भगवत्सविधम् अपसर्पेयुः, भगवांस्तु तेषां तेषां चित्तवृत्तिपरीक्षणे परमचतुरः । अत एव तांस्तान् सम्यगेव परीक्ष्य सर्वथा स्वात्मन्येव निरतत्वेन गृह्यमाणानां परमभोग्यो भवन् तद्विश्लेषं क्षणमात्रमपि असहमानस्सततं तत्संश्लिष्टः एव भवति । इतरांस्तु कापुरुषान् तत्तद्रुचिगोचरीभूतक्षुद्रवस्तुप्रदानेन अपसारयति । नैतद्भगवतोऽवद्यम् ; स तावत् प्रकृत्या पक्षपातविरहितः एव......इत्युक्तं भवति ।।

[प्रतिपदार्थ]

**हिंदी - 'क्या ये लोग मेरे पास से कोई अल्प फल लेकर छूट जाना चाहते हैं ? अथवा मेरे पास ही नित्यनिवास करना चाहते हैं' ? ऐसी परीक्षा कर, अपने साथ ही रहने के इच्छुक परमभक्तों के लिए अमृत के समान अति भोग्य रहनेवाले भगवान, गुण देखकर किसी का स्वीकार और दोष देखकर किसी का परित्याग करने के पक्षपात से विरहित एवं राग द्वेष शून्य होकर विराजमान हैं ।।**

**[भगवान का विलक्षण स्वभाव]**

अनन्यार्हशेषत्व, अनन्यशरणत्व और अनन्यभोग्यत्व (माने भगवान का ही शेष रहना, उन्हीं को उपाय मानना और उन्हीं के अनुभव करने की इच्छा रखना) रूप आकारत्रय से विशिष्ट परमैकान्ती महात्मा लोग इस संसार में बहुत कम मिलते हैं । इन के विरुद्ध अल्प जन तो बहुत ही मिलते हैं । परंतु कदाचित् ये सभी लोग मिलकर भगवान के पास जाकर इन की स्तुति पूजा इत्यादि कर सकते हैं । भगवान तो अपने पास आनेवालों की सच्ची भावना के परीक्षण करने में बडे चतुर हैं । अतः ठीक परीक्षा करने के बाद उस में पूर्णरूप से समुत्तीर्ण परमभक्तों को वे अपनाकर स्वयं भी उनके क्षणमात्रवियोग के भी सहन करने में अशक्त होकर, सर्वदा उन से संश्लिष्ट ही रहते हैं ; और दूसरे क्षुद्र मानवों को उन उन की अपेक्षित अल्पवस्तु देकर हटा देते हैं । यह हुआ भगवान का विलक्षण स्वभाव । परंतु इसी से उन को पक्षपाती कहना अनुचित है, क्यों कि चेतन के अपेक्षित पुरुषार्थ देना कभी पक्षपात नहीं होगा ।।

**अमुद ममरर्हट्कीन्द निमिर् शुड राळिनेडुमाल्**
**अमुदिलु मात्त विनियन् निमिर् तिरै नीळ्कडलाने ।। ६ ।।**

**(गाथा) -** **यश्चामृतं तु वितरन्नमरान् प्रतुष्टान्**
**कुर्वन्महोज्ज्वलसुदर्शनभृत्परात्मा ।**
**कल्लोलवैभवविशालसुधाब्धिशायी**
**तत्रामृताच्च मधुरान्नितरां हि भोग्यः ।। ६ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - उदधिमथनेन देवानाममृतप्रदाता जाज्वल्यमानहेतिराजविलसत्पाणिः निरवधिकवैभवनिधिः उत्तरङ्गविपुलजलधिशायी भगवान् सत्यममृतादपि अत्यन्तभोग्यः ।।**

**[भगवान् क्षुद्रफलकामनामपि पूरयति]**

गाथायाम् अस्यां **उदधिमथनेन देवानाम् अमृतप्रदाता** - इति विशेषणं जीवनाडीभूतम् । स्वतः परमभोग्यं भगवन्तं प्राप्तवन्तोऽपि दिविषदो हन्त ! तदोयायां भोग्यतायाम् अनासक्ताः

केवलं क्षोदिष्ठं फलम् उपलभ्य कृतकृत्याः अभूवन् ; दिव्यायुधलसत्पाणिः क्षीरसागरशायी च स भगवान् अमृतादपि परमभोग्यमूर्तिः खलु ; तदेकप्रावण्येन क्षुद्रफलनिस्स्पृहाः भवितुम् अर्हन्तोऽपि अमरास्ते अहह ! अल्पप्रयोजनकाङ्क्षिणो ह्यभूवन् इति स्वकीयं निर्वेदभरं प्रकाशितवान् भवति मुनिवरः गाथया अनया । यद्यपि देवानां क्षेपो गाथायां व्यक्ततरो न दृश्यते, तथाऽपि गाथासंनिवेशः तद्गमकः एवेति गाढदर्शिभिः आचार्यवर्यैः अवधारितम् । देवानां क्षेपः इव देवदेवस्य भगवतः प्रशंसाऽपि विवक्षिता एवात्र ; 'भगवन् ! न वयं भवन्तं कामयामहे ; लवणरसमेव लिप्सामहे' इत्यभिधाय क्षुद्रफलकामनां प्रकाशयद्भ्यः तत् क्षुद्रफलमपि प्रदाय उपकरोति खलु भगवानिति प्रशंसाऽपि हि गम्यते ।।

**[ प्रतिपदार्थ ]**

**हिंदी - समुद्र को मथकर देवों को अमृत देनेवाले, जाज्वल्यमान चक्र धारण करनेवाले, सीमातीत वैभववाले और उछलनेवाली लहरों से परिवृत सागर में शयन करनेवाले भगवान, सत्य ही उस सागर में से समुत्पन्न अमृत से भी भोग्यतर हैं ।**

**[ भगवान अल्पफलकामना को भी पूरा करते हैं ]**

इस गाथा में प्रयुक्त भगवान के विशेषणों में प्रधानभूत विशेषण है - (समुद्र को मथकर, देवों को अमृत देनेवाले) । देवों ने परमभोग्य भगवान को प्राप्त करते हुए भी, उन की उस भोग्यता को समझने में अशक्त होकर, उन की उपेक्षा करते हुए अत्यल्प फल पाकर निवृत्त हो गये । दिव्यायुधधारी क्षीरसागरशायी भगवान तो अमृत से भी अधिक भोग्य दिव्यमंगलविग्रहवाले हैं ; उन के दर्शन करने पर देवों को उन्ही में चित्त लगाकर अमृत से विमुख होना चाहिए था । परंतु, हाय ! अल्प प्रयोजन मांगते हुए वे लोग भगवान से विमुख हो गये । प्रकृत गाथा में आळ्वार ऐसा अपना निर्वेद बता रहे हैं । यद्यपि मूल गाथा में इस प्रकार देवों की स्पष्ट निंदा नहीं मिलती है ; तथापि सूक्ष्म विवेचक हमारे आचार्यों का यह अभिप्राय है कि गाथा के शब्दों पर पूर्ण ध्यान देने से उन का यही तात्पर्य प्रतीत होता है । इतना ही नहीं । भगवान की यह अद्भुत प्रशंसा भी यहां पर सूचित की जाती है । 'हे भगवन् ! हम आप को पाना नहीं चाहते ; समुद्र का लवण-रस ही हमारे लिए पर्याप्त है' - इस प्रकार स्पष्ट कहते हुए अतिक्षुद्र फल पाने की अपनी इच्छा प्रकट करते हैं देव । ऐसे उन को भी भगवान उन के अपेक्षित फल देकर उन पर अनुग्रह करनेवाले परमोदार हैं ।।

**नीळ् कडल् शूळिलङ्गैक्कोन् तोळहळ् तलै तुणिशेय्दान्**
**ताळहळ् तलैयिल् वणङ्गि नाळकडलै क्कळिमिने ।। ७ ।।**

**(गाथा) - विस्तीर्णवारिधिवृतां नगरीं च लङ्कां**
**शास्तुर्भुजानपि शिरांसि च यश्चकर्त ।**
**तत्पादपद्मयुगळं शिरसा प्रणम्य**
**प्रेम्णा स्वयं तरत कालमहाम्बुराशिम् ।। ७ ।।**

[प्रतिपदार्थः]

**विवरणम् - विपुलजलधिपरिवृतलङ्कापुरीनाथस्य रावणस्य भुजवनं शिरांसि च विलूनवतो भगवतः पादौ शिरसा प्रणम्य द्राघीयांसं जीवितकालं क्षिपत भो जनाः ! ।।**

**[भगवतो गुणगणाननुभूय कालः क्षेप्तव्यः]**

पूर्वगाथोक्तपरमभोग्यतया सह अप्रमेयशक्तिविशेषं च बिभ्रतो रघुनन्दनस्य भगवतो गुणानुभवः एव कालक्षेपविषयो भवितुम् अर्हतीति गाथयाऽनया उपदिशति मुनिवरः । 'विपुलजलधिपरिवेष्टिताया लङ्कापुर्याः खल्वहमधीश्वरोऽस्मि' इत्यवलेपभरेण स्वात्मना सह प्रस्पर्धितुम् उज्जृम्भितं दशाननम् एकेन बाणेन एकपदे निहन्तुं प्रभविष्णुरपि दाशरथिः भगवान् प्रथमतो भुजवनानां लवनेन अथ शिरसां निपातनेन च लीलारसम् उपभुज्य पश्चात् विनाशितवान् । यदा दशाननं प्रत्युपदेशान् दिदेश भगवती जानकी, तदा प्राह - **'मित्रमौपयिकं कर्तुं रामस्स्थानं परीप्सता । वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः'** ।। (रामा.सुं.कां.२१-१९,२०) इति । अत्र घोरं वधम् अनिच्छता त्वयेति कथनेन मम भर्ता महातेजाः त्वां चित्रवधं हि प्रापयिष्यति इति सूचितं भवति । ततश्च चित्रवधोऽस्य देव्यभिमत इति जानन् जानकीजानिः वालिनमिव तमिमं क्षणमात्रे अनिघ्नन् एकस्मिन्दिने भुजानां लवनं अपरस्मिन्दिने शिरसां लवनं च कुर्वन् स्वकीयं चित्रवधवैदग्ध्यं दर्शयामासेव । अत एव मुनिवरोऽत्र रावणं निहत्य इत्यनुक्त्वा भुजवनलवनं शिरसां लवनं च निर्दिदेश इति बोध्यम् । आश्रितपक्षपातिनो विरोधिनिरसनशीलस्य **'बहवो नृप ! कल्याणगुणाः पुत्रस्य सन्ति ते,'** (रामा.अयो.कां.२-२६) **'धातूनामिव शैलेन्द्रो गुणानामाकरो महान्'** (रामा.कि.कां.१५-२१) इति प्रशस्यमानान् गुणगणान् अनुभूय कालं क्षिपत इति सत्यं साधीयान् अयमुपदेशः ।।

[ प्रतिपदार्थ ]

**हिंदी - विशाल सागर से परिवृत लंकापुरी के स्वामी रावण के सभी बाहुओं तथा सिरों के काटनेवाले भगवान के श्रीपादों का अपने सिर से प्रणाम कर, सुदीर्घ अपने जीवित समय को व्यतीत करें ।**

**[ भगवान के गुणानुभव के द्वारा कालक्षेप करना है ]**

इस गाथा में आळ्वार हमें यह उपदेश दे रहे हैं कि पूर्वोक्त अतिमात्र भोग्यता से एवं अप्रमेय शक्तिविशेष से विभूषित श्रीरामचंद्र भगवान के शुभगुणों का अनुभव करना ही जीवन-काल बिताने का श्रेष्ठ मार्ग है । रावण तो विशाल सागर परिवृत लंकापुरी का राजा होने के गर्व से मस्त होकर भगवान से ही स्पर्धा करने लगा । ऐसे दुष्ट को, यद्यपि भगवान एक ही बाण से मार सकते थे, फिर भी उन्होंने ऐसा नहीं किया ; किंतु पहले उस के बीसों भुजाओं को काट कर, पीछे एकैक करके दसों सिर काटते हुए कुछ लीलारस का अनुभव कर, बाद में उस का संहार किया । सुंदरकांड में रावण को हितोपदेश करनेवाली सीतादेवी ने कहा था कि **'मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता । वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः'**।। (रामा.सुं.का २१-१९,२०) (यदि तुम घोर वध पाना नहीं चाहते और श्रेष्ठ स्थान पाना चाहते हो, तो मेरे प्रभु की शरण में जा ।) यहां पर, 'घोर वध' कहनेवाली सीताजी का यह अभिप्राय था - 'मेरे प्रभु तुम्हें अनायास-मरण पाने नहीं देंगे ; अपितु तेरा भयंकर वध कर डालेंगे'। शायद हनुमान जी से यह संवाद सुनकर श्री रामचंद्रजी ने यह निश्चय किया कि सीतादेवी रावण का चित्रवध ही किया जाना चाहती है । अतः उन्होंने वाली की भांति एक बाण से सहसा उस का संहार न करते हुए पहले एक दिन उस के बाहु और अन्य दिन सिर काट कर उस का घोर वध किया । इस अर्थ की सूचना करने के लिए ही आळ्वार इस गाथा में 'रावण-संहर्ता' कहने के स्थान पर इतने लंबे शब्द का प्रयोग कर रहे हैं कि **रावण के बाहुओं और सिरों काटनेवाले** । तथा च प्रकृत गाथा का यह तात्पर्य निकला कि इस प्रकार आश्रित पक्षपाती और उन के विरोधियों का निरसन करने में समर्थ श्री रामचंद्र भगवान के उन कल्याणगुणों का चिंतन करते अपना समय बिताना मानव मात्र का कर्तव्य होगा । **'बहवो नृप ! कल्याणगुणाः पुत्रस्य सन्ति ते'**

(रामा.अयो.कां.२-२०) (हे दशरथ चक्रवर्तिन् ! आप के सुपुत्र के कल्याणगुण अनंत हैं), **धातूनामिव शैलेन्द्रो गुणानामाकरो महान्** (रामा.कि.कां.१५-२१) (जैसे पर्वत गैरिकादि धातुओं का आश्रय है, इस प्रकार श्री रामचंद्रजी सद्गुणों के आश्रय होते हैं) इत्यादि प्रकार से उन की प्रशंसा पुष्कल मात्रा में की गयी है ।।

**कळिमिन् तोण्डीर्हळ् कळित्तु तोळुमि नवनै त्तोळुदाल्**
**वळिनिन्न वल्विनै माळिवित्तु अळिविन्रि आक्कम् तरुमे ।। ८ ।।**

**(गाथा) - भक्ता अनन्यशरणा भवताद्य यूयं**
**त्यक्त्वाऽन्यसक्तिममुमेव हरिं भजध्वम् ।**
**तस्मादनादिदुरितावळिविघ्नमालां**
**हत्वा स एव तनुते परमां गतिं वः ।। ८ ।।**

[ प्रतिपदार्थः ]

**विवरणम् - भो भक्तजनाः ! विषयेषु रुचिं त्यजत । त्यक्त्वा पूर्वोक्तं दाशरथिं भगवन्तं सेवध्वम् । सेवनमात्रे स भगवान् प्राप्यप्रतिबन्धकानि पापानि दुरुद्धराण्यपि समूलमुन्मूल्य अपुनरावृत्तिलक्षणम् एश्वर्यमनुगृह्णीयात् ।।**

**[ विषयसङ्गत्यागः प्रथमतः कर्तव्यः ]**

भगवत्सङ्गः तावत् इतरसङ्गपरित्यागपूर्वकः एव सन् कार्यकारी भवितुमर्हति । **'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि'** (ना.प.उ.३-१८) इति ह्याहुः । राघवशरणागतिप्रवणो विभीषणः आह - **त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः।** (रामा.यु.कां.१२-१४) श्रीरङ्गनाथं भगवन्तं प्रपद्यमानो भगवान् रामानुजार्योऽपि **'पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून् । रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च । सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान् । लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो' ! ।।** इति भविष्यत्पुराणवचनम् अनुसंदधानः एव प्रपेदे । प्रपत्तिं विदधानो भगवान् गीताचार्योऽपि **'सर्वधर्मान्परित्यज्य'** (भ.गी.१८-६६) इति परित्याज्यपरित्यागमेव प्रथमतो विदधे। तमेव इतरसङ्गपरित्यागं मुनिवरोऽत्र प्रथमतः आदिशति । गाथायाम्

**विषयेषु रुचिं त्यजत ; त्यक्त्वा** इति वर्तते । किमेवंकथनम् आवश्यकम् ? 'विषयेषु रुचिं त्यक्त्वा' इति वाक्यभेदमन्तरा कथनं हि वरीयः, इति केचित् मन्येरन् । भगवति सङ्गादपि इतरसङ्गप्रहाणमेव प्रधानतरमिति द्योतनं वाक्यभेदफलं ध्येयम् । **'सर्वधर्मान्परित्यज्य'** इति चरमश्लोकार्थः इह गाथायाम् उत्तरार्धेऽवसेयः ।।

**[प्रतिपदार्थ]**

**हिंन्दी - हे भक्तजनो ! आप क्षुद्र विषयांतर संग छोड दें ; वह छोडकर पूर्वोक्त श्रीरामचन्द्र भगवान की सेवा करें । सेवा करने मात्र से वे भगवान जन्मपरंपरा में कमाये हुए आप के अतिप्रबल पापों का समूल विनाश कर, शाश्वत मोक्ष संपद का भी प्रदान करेंगे ।।**

**[विषयांतर संग परित्याग ही प्रधान है]**

शास्त्रों का यह सिद्धांत है कि विषयसंग छोड देने के बाद किया जानेवाला भगवदाश्रयण ही फलप्रद होगा । इस विषय में **'परमात्मनि यो रक्तः विरक्तोऽपरमात्मनि'** (ना.प.उ.३-१८) (क्षुद्रविषयों में आसक्तिहीन होकर जो भगवान पर प्रेम करेगा) इत्यादि प्रमाण हैं । श्रीरामचंद्रजी के श्रीचरणों में शरणागति करनेवाले विभीषण भी यह कहते हुए आये - **'त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः'** । (रामा.यु.कां.१७-१४) (मैं अपने पुत्र पत्नी इत्यादि छोडकर श्रीरामचंद्रजी के शरण में आया हूं) । श्रीरंगनाथ भगवान की संनिधि में शरणागति करनेवाले श्री रामानुजस्वामीजी ने भी इस भविष्यपुराणवचन का अनुसंधान करते हुए शरणागति की - (शरणागतिगद्य में) **'पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून् । रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च । सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान् । लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो'** ।। (हे प्रभो ! मैं अपने पिता, माता, पत्नी, पुत्र, दूसरे बांधव, मित्र, (सामान्यज्ञान के उपदेशक) गुरु, रत्न, धनधान्य । खेत, घर, समस्त धर्म, स्वर्गादि समस्त भोग, केवलात्मस्वरूपप्राप्ति इत्यादि सभी वस्तु छोडकर लोक नापनेवाले आप के श्रीचरणों के शरण में आ गया) । एवं प्रपत्ति की विधि करनेवाले गीताचार्य ने भी प्रारंभ में **'सर्वधर्मान् परित्यज्य'** (भ.गी.१८-६६) कहते हुए इतरसंग के त्याग करने की आज्ञा दी । अतः प्रकृत में आळ्वार भी पहले इतर संग परित्याग करने का उपदेश दे रहे

हैं । मूलगाथा में **क्षुद्र विषयांतरसंग छोड दें ; वह छोडकर** इत्यादि वचन कुछ अधिकोक्ति लगेगी । अर्थात् एक ही वाक्य में **'क्षुद्रविषयांतर संग छोड कर'** कह देना सरल प्रतीत होगा । परंतु यह सरल कथन छोडकर लंबा वाक्य लिखने का एक कारण है । वह यह है कि भगवदाश्रयण की अपेक्षा विषयांतर संग-परित्याग को ही अधिक महत्व दिया जाना चाहिए । गाथा के उत्तरार्ध में चरमश्लोक के उत्तरार्ध का विवरण किया गया है ।।

**तरुम् अव्वरुम् पयनाय तिरुमहळार् तनिक्केळ्वन्**
**पेरुमै युडैय पिरानार् इरुमैविनै कडिवारे ।। ९ ।।**

**(गाथा) - यश्चाद्वितीयविभवः प्रभुरप्रमेयो**
**विष्णुश्श्रियःपतिरुदारफलप्रदोऽस्ति ।**
**सत्यं समस्तदुरितानि च युग्मरूपा-**
**ण्युच्छेदयेत्स्वयमयं प्रतिबन्धकानि ।। ९ ।।**

**[ प्रतिपदार्थः ]**

**विवरणम् - परमपुरुषार्थं प्रयच्छन् परमः पुमान् लक्ष्मीसनाथस्सन् वितरेत् । लक्ष्मीसंबन्धेन समिन्धानसमृद्धिकस्स भगवान् पुण्यपापरूपकर्मद्वयानुषङ्गमपि छिन्द्यात् ।।**

**[ लक्ष्म्याः पुरुषकारत्वम् ]**

अधस्तनगाथायामुक्तं - 'सेवनमात्रे सः भगवान् प्राप्तिप्रतिबन्धकानि सकलान्यपि पापानि प्रणाशयेत्' इति । तदुपरि शङ्का जाता - वयं हि चिरादेव घोरदण्डनार्हपापकारिणः स्मः ; एवंविधानाम् अस्माकं विषये सेवामात्रेण कथं स एवम् अनुगृह्णीयात् ? इति । तत्र समाश्वासनं ददाति गाथा सैषा । न खलु स भगवान् ब्रह्मचारी ; कमलागृहमेधी हि सः । सा च **'लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्'** ।। इत्युपश्लोकिता । **'पापानां वा शुभानां वा वधार्हाणां प्लवंगम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति'** ।। (रामा.यु.कां.११३-४३) इति कपीश्वरस्यापि

सान्त्वनेन आश्रितजनरक्षणदाक्षिण्यं प्रकाशितवती च । भर्तृवाल्लभ्येन चेतनविषयककारुण्येन च पुष्कलायाः तस्याः सन्निधानेन नास्माकं फलव्यभिचारः शक्यशङ्कः इति सूचितं भवति । **लक्ष्मीसंबन्धेन समिन्धानसमृद्धिकस्स भगवान्** इत्यत्र **'श्रद्धयाऽदेवो देवत्वमश्नुते'** इति श्रुतिवाक्यं **'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा'** (रामा.अर.कां.३७-१८) इति इतिहासरत्नस्थं मारीचवाक्यं चानुसंधेयम् । एतादृशोऽयं भगवान् **'तदा विद्वान् पुण्यपापे विधूय'** (मुं.उ.३-१-३) इति श्रुत्युक्तरीत्या विधूननयोग्यपुण्यपापानुषङ्गविच्छेदकारी भविता नूनम् इत्युक्तं भवति ।।

**[ प्रतिपदार्थ ]**

**हिंन्दी - लक्ष्मीनाथ होनेवाले भगवान ही पूर्वोक्त अतिश्रेष्ठ पुरुषार्थ फल देंगे । एवं लक्ष्मी संबंध से उज्ज्वल वैभववाले वे भगवान (हमारे) पुण्य पाप रूप उभयविध कर्मसंबंध भी दूर करेंगे ।।**

**[ लक्ष्मीजी का पुरुषकारत्व ]**

पिछली गाथा में बताया गया कि भगवान अपने सेवन करनेवाले भक्तों के समस्त पाप भी दूर करेंगे । इस पर यह शंका हुई कि 'अनादिकाल से अत्यधिक मात्रा में नानाविध पाप करनेवाले हम पर भगवान, अपनी सेवा करने मात्र से, कैसे अनुग्रह करेंगे' ? इस का प्रकृत गाथा समाधान करती है । तथाहि - हम तो एकाकी नारायण का नहीं, किंतु श्रीमन्नारायण की ही सेवा करते हैं । श्री अथवा लक्ष्मीजी का यह लक्षण शास्त्रोक्त है - **'लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्'** ।।' अर्थात् महर्षी लोग लक्ष्मीजी को पुरुषकार बताते हैं ; मैं (भगवान) भी इस विषय में सहमत हूं ।। श्रीरामायण की यह कथा प्रसिद्ध है - रावणवध के बाद सीतादेवी को यह शुभ समाचार देने अशोकवनिका में पधारे हनुमानजी ने जब सीताजी से वहां की क्रूर राक्षसियों के संहार करने की अनुमति मांगी, तब सीताजी ने यह कहा - **'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति'** ।। (रामा.यु.कां.११३-४३) (अर्थात् विचार करने पर सभी को दोषी बताना पडता है क्यों कि इस संसार में अपराध न करनेवाला कौन है ? कोई भी नहीं । अतः गुणदोषों की चिंता छोडकर सब के प्रति दयाभाव करना ही सत्पुरुष का उचित कार्य है ।) और उन पापिनी राक्षसियों को भी उन से बचाया । ऐसी लक्ष्मीजी में भर्तृवाल्लभ्य

इति कथयेयुः इति कृत्वा गाथामिमामाह मुनिसार्वभौमः । आवयोः (भगवतो मम च) योऽयं संबन्धः सजातोऽस्ति, स कीदृग्विधः इति युष्माभिः विमर्शनीयम् । संबन्धस्यास्य समुत्पत्तये न मया कृषिलेशोऽपि कृतः ; अप्रतिषेधोऽपि नासीत् मयि । स एव भगवान् मत्संबन्धं परमप्रयोजनं मन्वानः 'पराङ्कुशमुनिना सह संबन्धे लब्धे जीवेयम्, न चेत् विलीयेय' इति सुदृढप्रतिज्ञस्सन् उपेत्य स्वकीयविप्रलम्भवैदग्ध्येन मां व्यामोह्य मयि सर्वाङ्गीणं संश्लेषमाकलय्य अलभ्यलाभसंतुष्टः इव विभाति । तत्तादृशो भगवानसौ स्वयमपि न विजह्यात्, मामपि न हापयेत् इत्युक्तं भवति ।।

[प्रतिपदार्थ]

**हिंदी - मैंने तो अपने प्रयत्न से भगवान को अपने हृदय में रखना नहीं चाहा ; किंतु स्वयं भगवान ही प्रतिज्ञापूर्वक मेरे मन को धोखा देकर, मेरे शरीर व आत्मा से मिलकर विराजमान हैं । फिर ऐसे वे, क्या मेरे विश्लेष का कभी सहन करेंगे ?**

[भगवान छोडकर नहीं जाते]

**'वळवेळुलहु'** नामक पिछले पांचवें दशक में आळवार ने अपनी नीचता का अनुसंधान करते हुए भगवान को छोड कर दूर भाग जाना चाहा न? यह अर्थ जाननेवाले किसी ने उनसे पूछा कि 'हे मुनिवर ! आप का स्वभाव सदा एकरूप नहीं,' परंतु क्षणे क्षणे बदलता रहता है ; अतः उस पर विश्वास रखना कठिन है ; (अर्थात् यह नहीं कहा जा सकता कि भगवान से मिलकर ही रहने की आप की वर्तमान इच्छा कायम रहेगी )। एतदुपरांत आप अब संसारमंडल में विराजमान हैं ; इस का भी स्वभाव अनिश्चित है । एवं भगवान भी सर्वथा स्वतंत्र हैं, जिस से वे अपनी इच्छा के अनुसार चाहे जो काम कर सकते हैं, माने आप को छोड भी सकते हैं । तथा च आप कैसे निश्चय कर सकते हैं कि भगवान से अपना विरह नहीं होगा ? इस प्रश्न का प्रत्युत्तर प्रकृत गाथा में दिया जा रहा है । यह तात्पर्य है-अब भगवान के साथ मेरा जो संबंध (माने संश्लेष) बना है, इस का स्वरूप तुम्हें अविदित है । मैं ने तो यह संबंध पाने का किंचित् भी प्रयत्न नहीं किया ; इतना ही नहीं ; यह संबंध पाने की मेरी इच्छा तक न रही । परंतु स्वयं भगवान ही मेरे संबंध को अलभ्यलाभ मानते हुए, यह सुदृढ प्रतिज्ञा कर कि 'आळवार का संबंध पाने पर ही मैं जीवित रह सकूँगा, अन्यथा शरीर छोड दूँगा', मेरे पास पधार कर, अपने कपट करने के सामर्थ्य से मेरे मन में व्यामोह पैदा कर मेरे साथ सर्वावयव

संश्लेष पाकर अपने को कृतार्थ मानते हुए विराज रहे हैं । अतः यह सर्वथा अशक्य है कि ऐसे भगवान कभी मुझे छोड दें, अथवा मुझे दूर हट जाने का अवकाश दें ।।

**एन्नै नेहिऴ्क्किलुम् एन्नुडै**
**नन्नेञ्जन्तन्नै अहल्विक्क तानुम् किल्लानिनि**
**पिन्नै नेडुम् पणैत्तोळ् महिऴ् पीडुडै**
**मुन्नै यमरर् मुऴुमुदलाने ।। ८ ।।**

**(गाथा) - मां दूरतस्स्वयमसौ यदि सन्त्यजेन्मे**
**चित्तं तथाऽपि न वियोजयितुं क्षमस्स्यात् ।**
**नीळां सुदीर्घशुभवृत्तभुजां प्रहृष्ट**
**स्संश्लिष्य भाति यदसौ दिवि सूरिनाथः ।। ८।।**

[प्रतिपदार्थः]

**विवरणम् - नीलादेवीसुभगभुजाश्लेषसमुदित्वरहर्षभूमा नित्यसूरिसर्वस्वभूतश्च भगवान् मद्वियोगं समुत्पादयन्नपि कदाचित्, ममान्तःकरणं वियोजयितुं न कथञ्चिदपि शक्तस्स्यात् ।।**

**[मम विश्लेषकरणं भगवतोऽप्यशक्यम् इत्युक्तिः]**

**'स मां न विजह्यात्' 'अहं तं न विजह्याम्'** इति कथनं विफलम् ; दुर्घटमपि घटयितुं शक्तस्स इति हेतुना कामं स मां विजहातु ; अहमपि तं विजहामीति चास्तु । मदीयं मनो विश्लेषयितुं तु सोऽपि परिबृढो न प्रभवेन्नाम । एवं सुदृढोक्तौ किं निदानमिति चेत् अनुग्रहमयी नित्यमज्ञातनिग्रहा च नीलादेवी खलु तन्नित्यसंश्लिष्टा वर्तते ; तद्विश्वासबलादेव अहमेवं प्रतिजाने। न केवलमेतावदेव ; नित्यसूरिपरिषन्निर्वाहकश्च खल्वसौ ; तेषां पुरतो न शक्नुयादसौ अकृत्यं किमपि कर्तुम् । अत एव सुदृढं प्रतिजाने ।।

[प्रतिपदार्थः]

**हिंदी - नीलादेवी के विशाल भुजों का आलिंगन कर अत्यधिक आनंद पानेवाले और नित्यसूरियों के सर्वभूत नाथ भगवान कदाचित् मुझ से वियुक्त भी होते होंगे ; तथापि वे किसी प्रकार मेरे मन को अपने से छुडा नहीं सकेंगे ।।**

[भगवान के छोडकर न जाने के कारण]

यद्यपि **'अघटितघटनासमर्थ'** बिरुदधारी भगवान कदाचित् मुझ को छोड भी सकें ; एवं संसार मंडल में निवास करनेवाला मैं भी उन को छोड सकूँ । तथापि सर्वशक्त वे सर्वेश्वर भी किसी अवस्था में मेरे मन को अपने से छुडा नहीं सकेंगे । मैं इस कारण यह दृढ प्रतिज्ञा कर रहा हूं कि वे भगवान साक्षात् अनुग्रहस्वरूपिणी और दंड देने के काम से सर्वथा अपरिचित नीलादेवी से नित्यसंश्लिष्ट विराजते हैं । पुरुषकारभूत उन के सांनिध्य में मुझे विश्लेष मिलना अशक्य है । इतना ही नहीं ; भगवान नित्यसूरियों के भी निर्वाहक हैं ; वे, स्वतंत्र होते हुए भी, उन के सामने कैसे यह अकार्य(मुझे विश्लेष देना) कर सकते हैं ? अतः मैं सुदृढ विश्वास कर सकता हूं कि मुझे कभी विश्लेष न होगा ।।

**अमरर् मुळुमुदल् आहिय आदियै**
**अमरर्क्कु अमुदीन्द आयर् कोळुन्दै**
**अमर वळुम्ब तुळावि येन्नावि**
**अमरत् तळुवित्तु इनि यहलुमो ।। ९ ।।**

**(गाथा) - सूरीन्द्रनाथमपि चादिविभुं सुराणां**
**दिव्यामृतप्रदममुं किल गोपबालम् ।**
**आत्मा मम स्वयमुपेत्य च सम्प्रविश्य**
**स्वैरं विहृत्य मिलितोऽस्ति कथं त्यजेत्तम् ? ।। ९ ।।**

[प्रतिपदार्थः]

**विवरणम् - नित्यसूरीणां स्वरूपस्थितिप्रवृत्तिनिदानभूतं, इन्द्रादीनाम् अमराणाममृतप्राशनप्रवणं गोपालकुलकिसलयं च भगवन्तं ममात्मा पृथगुपलम्भ-व्यवहारयोग्यताविरहितः सन् समाश्लिक्षत् । अतश्च नैव विश्लेषप्रसक्तिः ।।**

[संश्लेष-विश्लेषोक्तीनां औचित्यम्]

गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योश्च यथा पृथगुपलम्भो न संभवति, तथैव तस्य मम चेति वक्तव्यता हि समुत्पन्ना ; तथा च आवयोः विश्लेषानुदयकथनं

अप्रसक्तप्रसञ्जनमेव इति चारुतरम् उच्यते गाथयाऽनया । अत्रेदमवधेयम् । सिद्धान्ते **'जगत्सर्वं शरीरं ते'** (रामा.यु.कां.१२०-२५) इत्युक्तरीत्या, **'यस्य पृथिवी शरीरम् यस्यात्मा शरीरम्'** (बृ.उ.५-७-७) इत्याम्नातरीत्या च चिदचिदात्मकं सर्वं वस्तुजातं भगवतः शरीरं सत् पृथक्स्थित्युपलम्भानर्हमेव इति परमार्थः । एवं च जीवात्मपरमात्मनोः विश्लेषकथायाः एव नावसरः । कथं तर्हि दिव्यप्रबन्धेषु अन्यप्रबन्धेषु च संश्लेषविश्लेषवार्तोपलम्भः इति शङ्का जायेत । अत्रैतदवगन्तव्यम् । भगवतो दिव्यात्मस्वरूपं दिव्यमङ्गलविग्रहः इति द्वितयमस्ति । **'इच्छागृहीताभिमतोरुदेहः'** (वि.पु.६-५-८४) इति पुराणरत्नोक्तरीत्या भक्तजनानुभवैकश्रद्धया परेण पुंसा परिगृह्यमाणो दिव्यमङ्गलविग्रहो यदाऽनुभवगोचरो भवति, तदा संश्लेषव्यपदेशः, यदा तु न तथा भवति तदा विश्लेषव्यपदेशः इति ।।

**[प्रतिपदार्थ]**

**हिंदी - नित्यसूरियों के स्वरूपस्थितिप्रवृत्तियों के हेतुभूत, इंद्रादिदेवों को अमृत पिलानेवाले और गोपकुलतिलक भगवान के साथ मेरी आत्मा इस प्रकार मिल गयी है कि उस को उन से अलग देखना ही अशक्य है, अतः उन से अलग होने का प्रसंग ही नहीं बनता ।।**

**[संश्लेष-विश्लेष की बातों का औचित्य]**

इस गाथा में यह अंश बताया जाता है कि भगवान और आळ्वार के बीच में संपन्न यह मिलाप गुण-गुणी, क्रिया-क्रियावान् अथवा जाति-व्यक्तियों के मिलाप जैसा अपृथक्सिद्ध संबंध है ; अर्थात् यह संबंध ऐसा है कि इस की वजह से एक दूसरे को छोड नहीं सकता । अतः आळ्वार कहते हैं कि अब मुझे भगवान से छूट जाने का प्रसंग ही नहीं बनता । यद्यपि **'जगत्सर्वं शरीरं ते'** (रामा.यु.कां.१२०-२५) इत्यादि प्रमाण के अनुसार, एवं **'यस्य पृथिवी शरीरम्...यस्यात्मा शरीरम्'** (बृ.उ.५-७-७) इत्याद्युपनिषद के अनुसार वेदांतियों का सिद्धांत है कि चेतनाचेतनरूप समस्त पदार्थ ही भगवान का शरीर होकर उन से अविनाभूत रहते हैं; अतः किसी वस्तु को भगवान से अलग रहना अशक्य है ; अतः आळ्वार भी कभी भगवान से विश्लिष्ट न रहे । तथा च दिव्यप्रबन्धों में आळ्वार, तथा अन्यत्र भक्तलोग जो अपने भगवत्संश्लेष अथवा

विश्लेष की बात करते हैं, ये सभी अनुचित-सी प्रतीत होंगी । तथापि भगवान के दिव्यमंगल विग्रह से ही संश्लेषविश्लेष की ये बातें जाती हैं । अर्थात् भक्तलोग भगवान के दिव्यात्मस्वरूप से मिलकर रहने मात्र से अपने को कृतार्थ अथवा प्रसन्न नहीं मानते ; किंतु सदा उन के दिव्यमंगलविग्रह के ही दर्शन इत्यादि अनुभव करना चाहते हैं । परंतु ये दर्शन कभी मिलते हैं और कभी नहीं मिलते । जब यह अनुभव मिलें तब संश्लेष है, और जब यह न मिलें तब विश्लेष है । **'इच्छागृहीताभिमतोरुदेहः'** (वि.पु.६-५-८४) इत्यादि में पुराणरत्न स्पष्ट कहता है कि भगवान भक्तों पर अनुग्रह कहने की इच्छा से उन के और अपने इष्ट, सुंदर दिव्यमंगलविग्रह लेते हैं । इस प्रकार संश्लेषविश्लेषों की बातें ठीक संगत होती हैं ।।

**अहलिल् अहलुम् अणुहिल् अणुहुम्**
**पुहलु मरियन् पोरुवल्लन् एम्मान्**
**निहरिलवन् पुहळ् पाडि यिळैप्पिलम्**
**पहलु मिरवुम् पडिन्दु कुडैन्दे ।। १० ।।**

**(गाथा) - विश्लेषिणं किल वियोजयति स्वयं य-**
**स्संश्लेषिसङ्गतिरतोऽसुलभोऽस्ति वीरः ।**
**मन्नायकोऽप्रतिभटस्स्वगुणैरनन्तै-**
**स्सङ्कीर्त्य तं ननु दिवानिशमस्म्यतृप्तः ।। १० ।।**

**[प्रतिपदार्थः]**

**विवरणम् - स्वसकाशे क्षुद्रफलमुपलभ्य दवीयस्सु जनेषु स्वयमपि दवीयान्, अनन्यप्रयोजनतया सन्ततसन्निहितेषु सत्सु स्वयमपि नेदीयान्, प्रतिकूलानां दुष्प्रापः अनुकूलानां प्रतिहतोपसर्पणश्च यः, असदृशस्य तस्य भगवतो यशांसि दिवारात्रम् अविश्रान्तम् अनुभुञ्जीय ।।**

**[भगवत्समीपवर्तित्वमेव परमप्रयोजनम्]**

स्वसंश्लिष्टभगवद्गुणविशेषम् अनुभूय, एवं निरन्तरम् अनुभवे कृतेऽपि स्वस्य पर्याप्त्य नुदयम् अभिदधाति मुनिवरो गाथयाऽनया । भगवतः परमभोग्यताकथनं हि

दशकस्यास्य प्रमेयम् । तादृश्यां भोग्यतायां दत्तदृष्टयो जनाः भगवत्सकाशे न किमपि प्रयोजनं लिप्सेरन् ; लिप्सेरन् यदि केचित् **'करीश ! वर्तेय सदा त्वदन्तिके'** (श्रीवरदराजस्तवे-९८) इति श्रीकूरेशसूक्तिरीत्या सदा भगवतः सविधे वर्तनमेव परमप्रयोजनम् अध्यवस्यन्तः तदेव लिप्सेरन् । ये तु क्षुद्रं फलं किमपि कामयमानः तल्लाभाय भगवन्तम् उपसृप्य लब्ध्वाऽथ निवर्तन्ते, तान् अधिकृत्य भगवान् अतीव निर्विण्णहृदयो भूत्वा स्वयमपि उदास्ते । ये तावदाभिमुख्यप्रदर्शनेन क्षुद्रफलनिस्स्पृहास्सन्तः संनिदधते, तेषु स्वयमपि सदा संनिहितो भवति इत्यसौ गुणः प्रथमपादेन अन्वभावि । अथ **प्रतिकूलानां दुष्प्रापः** इत्यादिना कौरवाणां विषये पाण्डवानां विषये च भगवतो वासुदेवस्य वर्तनम् अनुस्मार्यते ।।

**[प्रतिपदार्थ]**

**हिंदी - अपने से कुछ अल्प फल लेकर दूर निकल जानेवालों से स्वयं भी दूर होनेवाले, अनन्यप्रयोजन होकर अपने सहवास चाहनेवालों से स्वयं भी मिलनेवाले, प्रतिकूलों के लिए पाने अशक्य, अनुकूलों को सुप्राप, एवं उक्त प्रकारों से अद्वितीय भगवान के दिव्ययश को दिनरात गाकर अविश्रांत होकर अनुभव करें ।।**

**[भगवान का संग ही परमप्रयोजन है]**

इस गाथा में आळ्वार कहते हैं कि मेरे साथ संश्लेष करनेवाले भगवान का गुणगान करता हुआ, कल्पांत तक उन के अनुभव करने पर भी मैं तृप्त नहीं बनूँगा । यह अर्थ बताया गया कि भगवान की भोग्यता का वर्णन करना ही प्रकृत दशक का लक्ष्य है । ऐसी भोग्यता की परवाह न करते हुए कितने लोग भगवान से कुछ अल्प फल पाकर निकल जाते हैं । भक्तजन तो **'करीश ! वर्तेय सदा त्वदन्तिके'** (श्रीवरदराजस्तवे -९८) (हे वरदराज भगवन् ! मैं सदा के लिए आप के पास ही रहूं) इत्यादि श्री कूरेश स्वामीजी की श्रीसूक्ति के अनुसार भगवान की संनिधि में रहना ही परम पुरुषार्थ मानते हुए वही माँगते हैं । इन में से, जो अल्प फल पाकर भगवान को छोड निकल जाते हैं, उन के विषय में भगवान बहुत दुःखपूर्वक, उदासीन रहते हैं ; इस के बदले जो लोग क्षुद्र फल की इच्छा छोड कर भगवान के अभिमुख होते हैं, उन के विषय में भगवान स्वयं बहुत प्रसन्न होकर, स्वयं सदा उन के पास ही विराजते हैं - यह भगवान का

विलक्षण गुण गाथा के पहले पाद में बतलाया गया । **प्रतिकूलों के लिए पाने अशक्य** इत्यादि से कौरवों तथा पांडवों के विषय में श्री कृष्णभगवान के आचरण की याद दिलायी जाती है । (भगवान कौरवों के वश न हुए ; परंतु पांडवों के दास तक बन गये)।।

**कुडैन्दु वण्डुण्णुम् तुळाय् मुडियानै**
**अडैन्द तेन्कुरुहूर्च् चडहोपन्**
**मिडैन्द शोल्तोडै आयिरत्तु इप्पत्तु**
**उडैन्दु नोय्हळै ओडुविक्कुमे ।। ११ ।।**

**।। सहस्रगीत्यां प्रथमशतके सप्तमदशकं समाप्तम् ।।**

**(गाथा)-** **भृङ्गावृतार्द्रतुलसीधरमौळिदीप्रं**
**स्तुत्वा शठारिमुनिराह शुभं सहस्रम् ।**
**तत्रेदमस्ति दशकं शुभमार्तिमालां**
**सर्वां च हन्ति जगतां सहसैव दिव्यम् ।।११।।**

**।। इति सहस्रगाथारत्नावल्यां प्रथमशतके सप्तमदशकं समाप्तम् ।।**

**[प्रतिपदार्थः]**

**विवरणम् - अवगाढचञ्चरीकोपभुक्तमाध्वीकदिव्यतुलसीस्रगलंकृतमूर्धानं भगवन्तं प्रपन्नेन श्रीकुरुकापुरावतीर्णशठकोपसूरिणा विज्ञापिते सदुक्तिसान्द्रे सहस्रे दशकमिदं भक्तानां भगवत्प्राप्तिप्रतिबन्धकवर्गं शिथिलीकुर्यात् ।।**

**[तुलसीभूषितत्वकथनं भोग्यताविवरणम्]**

दशकेऽस्मिन् अन्ननुबुभुक्षितभोग्यतागुणस्य साक्षिभूतं विशेषणं विन्यस्यते **अवगाढचञ्चरीक** इत्यादि । भगवान् स्वदिव्यमकुटे तुलसीस्रजं यद्धारयति तत् स्वयमेव सर्वरक्षकः इति ख्यापनाय इति बहवो मन्येरन् ; वस्तुस्थितिश्च तथा स्यान्नाम । मुनिवरस्तु न तथात्र अभिसंधत्ते ; तद्भोग्यतयैव स्वयम् आकृष्टचित्तो भवन् विशेषणमिदं विन्यस्यति । ईदृशभोग्यतानुभवजनितहर्षप्रकर्षपरिवाहरूपतया श्री शठकोपमुनिवरेण **'पदानां सौभ्रात्रादनिमिषनिषेव्यं श्रवणयोः'** इत्युक्तरीत्या परमभोग्यशब्दसंदर्भसुभगतया कथिते

सहस्रेऽन्तर्गतमिदं दशकं भगवत्प्राप्तिप्रतिबन्धकसकलकर्मग्रन्थिनिबर्हणे कुशलं भवति इति फलकीर्तनेन समापितमिदं दशकम् ।।

**।। इति प्रथमशतके सप्तमदशकविवरणं समाप्तम् ।।**

**[एतद्दशकसारार्थसङ्ग्राहकः द्रमिडोपनिषत्सङ्गतिश्लोकः]**

**पुंसश्श्रियः प्रणयिनः पुरुषार्थसीम्नो**
**निन्दन् फलान्तरपरान्निरवद्यगन्धात्।**
**तद्रस्यतार्हगुणजातसमर्थनेन**
**तत्सेवनं सरसमाह स सप्तमेन ।।**

**[प्रतिपदार्थ]**

**हिंदी - जिस के अंदर घुसकर भँवर मधु पीते हैं, ऐसी दिव्यतुलसी से सजाये हुए मुकुटवाले भगवान को प्रपन्न, श्री कुरुकापुरी में अवतीर्ण श्री शठकोपसूरि से अनुगृहीत सदुक्ति-भरित सहस्रगीति के अंतर्गत यह दशक भक्तों के समस्त भगवत्प्राप्ति प्रतिबंधक दूर करेगा ।।**

**[तुलसीमालालंकृत कहना भोग्यता का विवरण है]**

इस दशक में प्रधानतया उपवर्णित भोग्यता का सूचक विशेषण दिया जा रहा है । कई लोगों का यह अभिप्राय होगा कि भगवान अपने सर्वरक्षकत्व की सूचना करने के लिए मुकुट पर दिव्य तुलसीमाला का धारण करते हैं । परंतु यहाँ आळ्वार का अभिप्राय यह नहीं हैं । किंतु तुलसीसमलंकृत भगवान की भोग्यता के परवश होकर वे यहाँ भगवान को यह विशेषण दे रहे हैं । तथा च इस भोग्यता के अनुभव से आळ्वार ने अत्यंत आनंदित होकर, उस आनंद के परीवाहतया रसघन शब्द ही गूंथकर यह सहस्रगीति गायी ; उस के अंतर्गत प्रकृत दशक का अध्ययन करनेवालों के भगवत्प्राप्ति में विघ्न डालनेवाले सभी नष्ट हो जायंगे - इस फलश्रुति के साथ यह दशक समाप्त किया गया ।।

**।। पहले शतक का सातवाँ दशक का हिन्दी व्याख्यान समाप्त हुआ ।।**

**।। आल्वार तिरुवडिहळे शरणम् ।।**

# प्रथमशतके अष्टमं दशकम्

## अवतारिका

**[करणत्रयसारूप्यमार्जवं भगवद्गुणेषु अन्यतमम्]**

विवरणम् - अधस्तनदशके भगवतः परमभोग्यत्वं नाम गुणविशेषम् उपभुक्तवान् मुनिवरोऽधुना दशकेऽस्मिन् आर्जवं नाम गुणम् अनुभुङ्क्ते । ऋजोर्भावो ह्यार्जवम् । कौटिल्यप्रतिकोटिभूतोऽयं गुणः । **'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद् दुरात्मनाम्'** इति दुर्जनप्रकृतितया प्रोक्तं करणत्रयवैरूप्यमेव कौटिल्यम् । **'मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्'** इति सज्जनप्रकृतितया प्रोक्तं करणत्रयसारूप्यम् आर्जवम् । भगवान् यामुनार्यः स्तोत्ररत्ने **'वशी वदान्यो गुणवान्'** (स्तो.र.१८) इति श्लोके समनन्तरमेव **ऋजुः** इति अनुगृहीतवान् खलु । भगवति अनुसन्धेयेषु गुणेषु आर्जवम् अभ्यर्हितम् इत्यवधेयम् । पञ्चवटीम् उपागता शूर्पणखा भगवन्तं रामचन्द्रमुपसृत्य **'आगतस्त्वमिमं देशं कथं राक्षससेवितम् । किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि'** (रामा-आर.कां.७-१३) इत्यन्वयुङ्क्त । एवमनुयुक्तो दाशरथिः तस्याः कुटिलचित्तवृत्तिम् अवजग्मिवानपि स्वयं कौटिल्यलेशमपि अनवलम्बमानः **'आसीद्दशरथो नाम राजा'** (रामा.आर.कां १७-१५) इत्युपक्रम्य सर्वं यथायथम् आचचक्षे । तदिदं कथयन् भगवान् वाल्मीकिः तत्रैवम् अवतारयति **'ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे'** (रामा.आर.कां १७-१४) इति । भगवान् कौटिल्यम् अंशतोऽपि न जानाति इत्युक्तं भवति । कौटिल्यादन्यत् आजानद्भिः सद्भिस्सह संश्लिष्यन् भगवान् अस्मान् स्ववर्त्मनि आकर्षन् अस्मदीयमेव वर्त्म स्वयम् अनुव्रजन् अनुभावयति इत्येतदेव ननु आर्जवं नाम ।

**['निरुपधिमृजुतां नीरवर्णो जगाद']**

दशकेऽस्मिन् अन्तिमगाथायां **'सलिलसवर्णस्य भगवतो गुणमधिकृत्य'** इति यदनुगृहीतं, तत् आर्जवगुणदृष्ट्यैव इति श्रीपराशरभट्टार्याणाम् उपन्यासः । सलिलं हि यत्र यत्राकृष्यते तत्र तत्र स्वयम् आगच्छति, निम्नेतरस्थलेष्वपि सदुपायेनाकृष्टं सत् आयात्येव । तथा च आर्जवगुणानुभवो दशकस्यास्य प्रमेयमिति सुस्थम् । वेदान्ताचार्याः अपि तात्पर्यरत्नावल्यां **'निरुपधिमृजुतां नीरवर्णो जगाद'** (द्र.ता.र.-१९) इति, **'प्रकृतिऋजुतया'** (द्र.ता.र.१९) इति च ; (सारे-३) **'सुशीलं स्वाराधं सरसभजनं स्वार्जवगुण'** इति च श्लोकैः इमामेव पद्धतिम् आद्रियन्ते स्म ।

## अवतारिका

### [भगवद्गुणों में एक 'आर्जव' करणत्रय से सारूप्य है]

**हिंदी** - पिछले दशक में भगवान की भोग्यता का अनुभव करने के बाद, अब आळ्वार उन के आर्जवगुण का अनुभव करने को उतरते हैं । आर्जव माने कुटिलता का अभाव अथवा सीधापन । तन, मन, वाणियों का एक रूप में रहना सीधापन है और उन के अलग अलग प्रकार रहना कुटिलता है । अत एव कहा जाता है - **'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद् दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्'** ।। अर्थात् दुष्ट लोग अपने मन में एक विचार रखते हैं, बोली से कुछ और बोलते हैं और काम में कुछ अन्य ही करते हैं ; महात्मा लोग तो मन में जो विचार करते हैं, वाचा वही बोलते हैं और शरीर से वही करते हैं । अब शास्त्र बताते हैं कि भगवान में यह सीधापन पुष्कल मात्रा में विराजमान है । अत एव श्री यामुनाचार्य स्वामीजी ने भी स्तोत्ररत्न में भगवान के कल्याणगुणों में इस गुण के स्पष्ट दिखाया - **'वशी वदान्यो गुणवान् ऋजुः'** (स्तो.र.१८) । श्रीरामायण में भी इस के वर्णन मिलता है । तथा हि - पंचवटी में विराजमान श्रीरामचंद्रजी के पास आकर शूर्पणखा पूछने लगी - **'तुम लोग कौन हैं, कहाँ के हैं, क्योंकर इधर आये हैं'** इत्यादि । श्रीरामचंद्रजी जानते थे कि वह कपटी राक्षसी है, जिस को अपना परिचय बताने की कोई आवश्यकता नहीं । तथापि उन्हों ने **'आसीद्दशरथो नाम राजा'** (रामा.अर.कां १७-१५) इत्यादि से अपनी सारी कथा बतायी । भगवान के इस सीधापन से अपहृतचित्त होकर वाल्मीकीजी उस प्रकरण में लिखते हैं कि **'ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे'** (रामा.अर.कां.१७-१४) (सीधी बुद्धि के होने से श्रीरामचंद्रजी अपना सारा चरित्र बताने लगे) । तथा च इस प्रकरण का अर्थ हुआ कि भगवान कुटिलता से सर्वथा अपरिचित हैं । सर्वथा कुटिल हम से मिलने के समय, भगवान हमें अपने रास्ते में न खींचते हुए, स्वयं हमारे मार्ग में आकर, अर्थात् हमारे साथ एकरस होकर जो मिलते हैं, यही उन के आर्जवगुण का प्रयोजन है । भक्तों को भगवान के इस गुण का चिंतन करना बहुत आवश्यक है ; क्यों कि इस के चिंतन से वे भगवान पर महाविश्वास कर सकते हैं ।

### ['नीरवर्ण' विशेषण भगवान के आर्जव को बताता है]

इस दशक की अंतिम गाथा का यह वचन है कि **'नीरवर्ण भगवान को लक्ष्य कर'**। श्रीपराशरभट्टार्य स्वामीजी कहते हैं कि इस से आर्जवगुण सूचित किया जाता है ।

जल का यह स्वभाव है कि वह समाकृष्ट होने पर किसी भी स्थल पर बहता है । उचित उपायों से उसे ऊँची जगह पर भी ले जाना शक्य है । पूर्वोक्त प्रकार, यह तो आर्जव का सूचक है । अतः आचार्यों का सिद्धांत है कि यह सारा दशक ही आर्जव का प्रतिपादक है । श्रीवेदांतदेशिक स्वामीजी ने भी - अपनी द्रमिडोपनिषत्तात्पर्यरत्नावली में (-१९) **'निरुपधिमृजुतां नीरवर्णे जगाद'** (९) (नीरवर्ण भगवान की अवधिशून्य ऋजुता बतायी गयी) और **'प्रकृति ऋजुतया'** (३) (स्वाभाविक ऋजुता से), एवं द्रमिडोपनिषत्सार में **'सुशीलं स्वाराधं सरसभजनं स्वार्जवगुणं'** (२२) (भगवान को सौशील्यवान, सुलभ आराधनीय, परमभोग्य व श्रेष्ठ आर्जवगुणवाले बताया) - इन शब्दों से प्रकृत दशक का यही तात्पर्य बतलाया ।

**ओडुम् पुळ्ळेरि शूडुम् तण् तुळाय्**
**नीडु निन्नवै आडुम् अम्माने ।। १ ।।**

**(गाथा) - आरुह्य गरुडं भाति दिव्यां च तुलसीं वहन् ।**
**नित्यसूरिवरैर्नित्यं सेव्योऽस्ति दिवि माधवः ।। १ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - शेषशेषाशनगरुडप्रमुखैः नित्यसूरिभिस्सह संश्लिष्य रसोपभोगं कुर्वाणः सर्वस्वामी भगवान् गरुत्मन्तं वाहनतया परिगृह्य व्रजति सरभसम् ; शिशिरतुलसीस्रजमवतंसयति ।**

**[नित्यसूरिषु प्रकाश्यमानं भगवत आर्जवम्]**

गाथायाः उत्तरार्धं विशेष्यवाचि । आर्जवगुणयुक्तो भगवान् हि अत्र विशेष्यभूतः । स तावन्नित्यसूरिसंश्लेषैकरसिकः इति प्रोच्यते पूर्वार्धानुभूयमानगुणानुकूल्याय । पतगराजं वाहनतया स्वीकृत्य तेन उह्यमानस्सन् धावति इति, तुलसीस्रजम् अवतंसपदे निदधाति इति च कथनेन आर्जवगुणानुभवः कथमिव सिध्यति इति पृच्छा स्यात् । गरुत्मान् तुलसी च श्रीवैकुण्ठवास्तव्ये वस्तुनी ; तयोः कौटिल्यं सर्वथापि अप्रसक्तम् ; कुटिलकरणैः अस्मादृशैः सह आर्जवेन संश्लिष्यति इत्युक्तिः युज्येत कामम् ;स्वतः कौटिल्यगन्धविरहितवस्तु -

संश्लेषतः कथमार्जवं प्रकाशेत इति प्रश्नः स्थाने । उच्यते वैकुण्ठवासिनां कौटिल्यगन्धोऽपि नास्तीति सत्यमेतत् । तेषां खलु सूरीणाम् अनुभाव्यो विषयः एक एव यद्यपि, तथाप्येकैकोऽपि सूरिः एकैकां कैङ्कर्यवृत्तिं परिगृह्णाति ; परिगहीतवृत्तिभेदेन रुचिभेदो भवेदेव खलु । भगवान् तावत्तत्र स्वकीयाया रुचेः प्राधान्यम् अनिच्छन् तत्तत्सूरिगतरुचीनामेव प्राधान्यं दिशन् तान् अनुभूय तान् प्रमोदयति । भगवन्तं स्वयम् ऊढ्वा तत्र तत्र पर्यटितुम् इच्छति सति ताक्ष्यें तद्रुच्यानुगुण्येन तं स्वात्मानं वाहयति । तुलसी यदि कामयते '**भगवतोऽहमलङ्कारो भवानि**' इति, तर्हि स तयैव अलङ्कृतस्सन् तत्प्रहर्षणमुखेन स्वयं प्रहृष्यति । एतदेव सूरिषु प्रकाश्यमानं भगवतः आर्जवम् ।

### [प्रतिपदार्थ]

**हिन्दी - अनंत, गरुड, विष्वक्सेनादि नित्यसूरियों से मिलकर रसानुभव करनेवाले सर्वस्वामी भगवान गरुत्मान पर सवार होकर तेज चलते हैं और सुशीतल तुलसीमाला का धारण करते हैं ।**

### [नित्यसूरियों में प्रकाशित भगवान का आर्जव]

इस गाथा में **अनंतगरुड** - इत्यादि उत्तरार्ध विशेष्य है और गरुत्मान के इत्यादि पूर्वार्ध विशेषण है । यह कहा गया कि इस दशक में भगवान के आर्जवगुण का वर्णन चलता है । यही गुण पूर्वार्ध में उपवर्णित है । इस के अनुकूलतया यह कहा जा रहा है कि भगवान नित्यसूरियों के साथ नित्यसंश्लेष का रसानुभव करते हैं । ऐसे भगवान गरुडारूढ तथा तुलसीधारी होकर अपने आर्जवगुण का प्रकाशन कर रहे हैं । यह समझना कुछ कठिन-सा होगा कि भगवान परमपदवासियों से मिलकर आर्जवगुण का प्रकाशन कैसे कर सकते हैं ; क्योंकि परमपद में, जहाँ कुटिलता का अवकाश नहीं, सीधापन का प्रकाशन होना भी अशक्य है, दया, क्षमा इत्यादियों की भाँति आर्जवगुण भी इस कुटिल संसार में ही प्रकाशित हो सकता है । इस का यह समाधान है - यह सोलह आने सत्य है कि परमपद में सर्वथा कौटिल्य का अभाव है ; तथापि वहाँ भगवान के आर्जवगुण का प्रकाशन हो सकता है । तथाहि - यह सर्वविदित है कि वहाँ के नित्यसूरी जन, सभी एक समान होते हुए भी, एकैक एकैक प्रकार की भगवत्सेवा करते हैं । इन प्रसंगों में भगवान अपनी इच्छा की परवाह नहीं करते हुए उन

उन सूरी की इच्छा के अनुगुणतया ही उन की सेवा स्वीकार कर उन के प्रसन्न करते हैं । अर्थात् यदि कभी गरुडजी की यह इच्छा हुई कि भगवान के अपनी पीठ पर विराजमान कर उन की सेवा करनी चाहिए, तो भगवान निर्विचार ही उन पर सवार होकर उन की इच्छा के अनुसार यात्रा करते हैं । एवं कदाचित् यदि तुलसी की यह इच्छा हुई कि अब मुझे भगवान को सजाना चाहिए, तो भगवान तुरंत उस का धारण कर उसे आनंदित कर स्वयं भी प्रहर्ष पाते हैं । इस प्रकार भगवान परमपद निवासी सभी दिव्यसूरियों से अपने आर्जवगुण का प्रकाशन करते हैं ।

**अम्मानाय् प्पिन्नुम् एम्माण्बुम् आनान्**
**वेम्मावाय् कीण्ड शेम्मा कण्णने ।। २ ।।**

**(गाथा)- सर्वेश्वरोऽप्यसौ केशिहन्ता कृष्णोऽब्जलोचनः ।**
**आश्रितार्थं स्वयं जातस्सर्वमाहात्म्यशोभितः ।। २ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - सर्वस्मात्परः स्वामी सन् क्रूरवाजिवेषधरकेशिनामकदैत्यवक्त्रविदारणः सरसिजायतविलोचनो भूत्वा तत्तादृशनानाचेष्टितरसिको भगवान् ।**

**[संसारिषु प्रकाश्यमानं आर्जवम्]**

अधस्तनगाथायां नित्यविभूतिवर्तिनित्यसूरिविषये प्रकाश्यमानम् आर्जवम् अन्वभावि । गाथायामस्यां ततोऽवतीर्य विरोधिनिरसनपूर्वकं संसारिषु प्रकाश्यमानम् आर्जवम् अनुभूयते । **सर्वस्मात्परः स्वामी सन्** इति पूर्वगाथोक्तार्थानुवादः । कृष्णजिघांसया व्रजं प्रति कंसप्रचोदितेषु असुरेषु वाजिवेषधरः केशी नाम दैत्योऽन्यतमः। सः एषः तावत् स्वकीयं वक्त्रं सुमहत्तरम् उद्घाट्य व्रजम् अशेषं भक्षयितुं प्रवृत्तो यदा, तदा कृष्णकिशोरः स्वहस्ताभ्यां तदीयं वक्त्रम् उत्पाट्य तं व्यापादयामास इति कथा । तदानीं भगवान् सद्यः तन्निरसनम् आकलय्य 'अवतारे कृते विरोधिवर्गसंपातात् पुनः पुनः क्लेशो जायते, किमर्थमेवं क्लेशोऽस्माभिः अनुभाव्यः ? स्वस्थाने दिवि एव वासे कृते क्लेशावकाशो नास्त्येव खलु ; अतः इतः परं स्वस्थानगमनमेव वरम्' इति अविभावयन् संसारिभिः सह

विहरणमेव परमप्रयोजनं मन्यमानश्च सन् स्वकीयहार्दहर्षप्रकर्षसूचनाय सरसीरुहोपमविलोचनतां प्रकाशयन् नानाचेष्टितानि पुनः पुनः उदभावयत् इत्येषः महागुणोऽनुभूतोऽत्र ।

[प्रतिपदार्थ]

**हिन्दी - सर्वस्वामी होते हुए ही, क्रूर घोडे के रूप में आये केशिनामक दैत्य का मुख चीर डालनेवाले, विशाल व रक्त नयनवाले श्रीकृष्ण और भी ऐसे नानाविध चेष्टित करने में रसिक होते हैं ।**

**[संसारियों में प्रकाशित भगवान का आर्जव]**

पिछली गाथा में नित्यसूरियों के विषय में प्रकाशित किये जानेवाले भगवान के आर्जवगुण का अनुभव किया गया ; इस गाथा में परमपद से संसार में अवतार लेकर, विरोधियों का निरासपूर्वक प्रकाशित भगवान के आर्जव का अनुभव किया जा रहा है । **सर्वस्वामी -** यह तो पिछली गाथा में उक्त अर्थ का अनुवाद है । कंसप्रेषित नानाविध असुरों में से एक, केशिनामक दैत्य ने, बडे घोडे के रूप में व्रज आकर, मुख खोलकर, सारा व्रज निगलने की चेष्टा की । तब श्रीकृष्ण ने उस का मुख चीरकर संहार किया । इस के बाद भगवान ने यह विचार नहीं किया कि 'इस संसार में हमारे अवतार करने पर, यहाँ वारंवार इन दुष्ट विरोधियों से लडते ही रहना पडेगा ; हमें ऐसा दुख भोगने की आवश्यकता कौन सी है ? परमपद में यह दुख कभी न होगा । अतः अब से अवतारों को समाप्त कर, परमपद में ही रह जाना उत्तम है' । परंतु वे संसारियों के सहवास को ही परमपुरुषार्थ मानकर, उस से बहुत संतुष्ट होकर, अपनी विकसित आँखों से उस हर्ष का प्रकाशन भी करते हुए कमलनयन बनकर, पुनः पुनः ऐसी अनेकविध चेष्टा करने में ही उत्साह दिखाते विराज रहे हैं, इस महागुण का कीर्तन यहाँ पर किया गया है ।

**कण्णावान् एन्नुम् मण्णोर् विण्णोर्क्कु**
**तण्णार् वेङ्गड(म्) विण्णोर् वेर्प्पने ।। ३ ।।**

**(गाथा) - देवानामपि मर्त्यानां चक्षुर्यो वेङ्कटाचले ।**
**सूरीणामपि सेव्योऽसौ भाति रम्ये सुशीतले ।। ३ ।।**

[प्रतिपदार्थः]

**विवरणम् - भूतलवर्तिनां वैकुण्ठवर्तिनां च सदा नयनभूतः स भगवान् शिशिरवेङ्कटाद्रिनामकदिव्यगिरिराजनिवासी ।**

**[उभयलोकमध्यस्थत्ववर्णनं आर्जवनिरूपकम्]**

यमलपुत्रप्रसवित्री जननी उभयोरपि पुत्रयोः मध्ये स्थित्वा यथा स्तन्यं पाययति, तथा संसारिणां दिविषदां च रक्षायै उभयलोकमध्यस्थं श्रीवेङ्कटाद्रिम् अध्यास्ते। उभयविभूतिनाथो भगवान् इति चारुतरम् उच्यते । तैत्तिरीय संहितायां चतुर्थकाण्डे षष्ठप्रपाठके **'चक्षुर्देवानामुत मर्त्यानाम्'** (४-६-२२) इत्याम्नायते । अत्र उत इति समुच्चये । देवानां मर्त्यानां च चक्षुः इत्यर्थः । एतदेव श्रुतिवाक्यं गाथायाम् अस्यां पूर्वार्धत्वेन परिणतम् । स्वकार्यनिर्वहणे स्वेषाम् अक्षमत्वं संसारिणां दिविषदां च अविशिष्टम् इत्युक्तं भवति । **शिशिरवेङ्कटाद्रीति** - शैशिर्यकथनं सांसारिकसकलतापनिवारकत्वनिबन्धनम् । नानातीर्थनिषेवितत्वेन अविश्रान्तनिर्झरपातेन च प्रात्यक्षिकं शैत्यं च विवक्षितम् ।

[प्रतिपदार्थ]

**हिन्दी - भूलोकनिवासी तथा स्वर्गादिनिवासी सभी जनों के सदा नेत्रभूत विराजनेवाले भगवान सुशीतल दिव्य वेङ्कटाद्रि पर नित्यवास कर रहे हैं ।**

**[श्रीवेङ्कटाद्रिवास भगवान के आर्जव को दिखाता है]**

जैसे जुडवे बच्चों का जन्म देनेवाली माता बीच में रहकर दोनों को दूध पिलाती है, ठीक इसी प्रकार उभयविभूतिनाथ भगवान भी भूलोक तथा ऊपर के लोकों की रक्षा करने के लिए दोनों लोकों के बीच श्रीवेंकटाद्रि पर निवास करते हैं । तैत्तिरीययजुस्संहिता के चौथे कांड के छठे प्रपाठक में यह एक वाक्य है - **'चक्षुर्देवानामुत मर्त्यानाम्'** । (४-६-२२) इस का यह अर्थ है कि भगवान देव और मानवों के नेत्ररूपी हैं । यही अर्थ इस गाथा के पूर्वार्ध में उपवर्णित है । इस का यह तात्पर्य है कि अपने रक्षणादि कार्य करने में मानवों की भाँति देव भी अशक्त होते हैं । सांसारिक समस्त संताप मिटाने से तथा संतत बहनेवाले निर्झरों के कारण शीतल होने से श्रीवेंकटाद्रि **सुशीतल वेंकटाद्रि** कहा गया है ।

**वेपै योन्रेडुत्तु ओर्कमिन्नियै**
**निर्कुम् अम्मान् शीर् कर्प्पन् वैहले ।। ४ ।।**

**(गाथा) - धृत्वा महाद्रिमप्येष निरायासोऽस्ति वीर्यवान् ।**
**आपद्बन्धुर्मम स्वामी स्मराम्यस्य यशस्सदा ।। ४ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - गोवर्धनाभिधानमेकम् अद्रिमुद्धृत्य श्रान्तिलेशमन्तरेण सप्ताहं स्थितवतो भगवतो महागुणं सततम् उपभुञ्जीय ।**

**[गोवर्धनोद्धरणेन भगवतः इन्द्रस्य विषये आर्जवम्]**

गोवर्धनोद्धारणकथा सर्वविदिता सुप्रथिता । तत्र तावत् आर्जवमेव प्राधान्येन प्रकाशमानो महागुणः । दुर्जनेन एकस्य भागवतस्य उत्पादितामपि व्यथां न सहते मनागपि भगवान् इति स्थिते, बिडौजसा युगपदेव अपरिमितगोगणगोपालवृन्दभरितस्य व्रजस्य समुत्पादितां सुमहतीं व्यथां कथमिव विषेहे ? महाद्रोहिणो वासवस्य शिरसः छेदो हि सद्यः कर्तव्यः, कुतो न कृतः सः इति बहवः आशङ्केरन् । कृष्णस्य तावत् अभिसन्धिरेव इह ; इन्द्रस्य भुक्तिम् अपहृतवता मया किं तत्प्राणापहारकेणापि भवितव्यमिति । एतदेव आर्जवम् इहानुभूयते । श्रान्तिलेशमन्तरेण सप्ताहं स्थितवतः इत्यत्र **'क्षोणीध्रं पुनरबिभश्च सप्तरात्रं .... अम्लाना वरद ! तथापि पाणयस्ते'** (श्रीरङ्ग.स्त.४५) इति श्रीकूरनाथगुरुवरसूक्तिः अनुसन्धेया ।

**[प्रतिपदार्थ]**

**हिन्दी - गोवर्धन नामक एक पहाड उठाकर, छत्र के रूप में धारण कर, आयास के बिना सात दिन रहनेवाले भगवान के महागुण का मैं नित्य संकीर्तन करूँ ।**

**[गोवर्धनोद्धरण से भगवान का इंद्र के विषय में प्रकाशित आर्जव]**

गोवर्धन पर्वत का धारण श्रीकृष्णभगवान का एक प्रसिद्ध चेष्टित है, जिस से मुख्यतया उन के आर्जवगुण का ही प्रकाशन किया जाता है । तथाहि - भगवान का यह

स्वभाव है कि वे अपने किसी एक भक्त के विषय में किये जानेवाले अपराध का भी सहन नहीं कर सकते । ऐसे उन्होंने व्रजनिवासी समस्त गों गोपसमूह के विषय में महेंद्र से किये गये (घोरवर्षणरूप) महापराध का कैसे सहन किया ? उसी क्षण में उन्हें भक्तजनद्रोही उस महापापी का सिर काट डालना था । परंतु उन्होंने उसे अत्यल्प भी शिक्षा नहीं दी । इस विलक्षण कृत्य का कारण क्या है ? यही है कि श्रीकृष्ण ने सोचा होगा - **'महेंद्र के भोजन का अपहरण तो मैं ने किया, क्या उस के प्राणों का भी अपहरण करना उचित होगा ? नहीं, नहीं । अतः उस की उपेक्षा करना ही पर्याप्त दंड है'** । इस महान आर्जवगुण का संकीर्तन यहाँ पर किया गया ।

**वैहलुम् वेण्णेय् कैकलन्दु उण्डान्**
**पोय् कलवादु एन् मेय् कलन्दाने ।। ५ ।।**

**(गाथा) - नवनीतं सदा भुङ्क्ते स्वयं बाहू प्रसार्य यः**
**स मे वपुषि संसक्तो भाति सत्योऽनृतं त्यजन् ।। ५।।**

[प्रतिपदार्थः]

**विवरणम् - सदा नवनीतभाण्डे बाहुम् आमूलं प्रक्षिप्य नवनीतमास्वादितवान् सत्यमेव मम वपुरपि समश्लिष्यत् ।**

**[भगवतः परमसौलभ्यम्]**

यथाहं भगवन्तम् उत्सृज्य भगवतो गुणान् अनुभवामि, तथा सोऽपि परमः पुमान् मां विहाय मम वपुरेव उपभुङ्क्ते इत्याह मुनिवरो गाथया अनया । यथाहि मम तस्य गुणः सततं धारकः, तथा तस्य आश्रितकरस्पर्शपावनं गव्यमेव सततभोग्यं भवति । नवनीते संजातेन स्पृहातिशयेन स तावत् कृत्स्नमपि बाहुं पात्रे प्रवेश्य, गृहीत्वा, समास्वाद्य गव्यगन्धिना स्वविग्रहेण मम हेयमपि वपुः समाश्लिक्षत् अहहेति विस्मयस्तिमितो भवति मुनिवरः ।

[प्रतिपदार्थ]

**हिन्दी - अपने पूरे बाहु को भांडे में डालकर, मक्खन उठाकर खानेवाले भगवान सत्य ही मेरे शरीर से मिल गये ।**

**[भगवान का परमसौलभ्य]**

इस गाथा में आळवार कहते हैं - 'जैसे मैं भगवान के शुभगुणों का अनुभव करता हूँ,' इसी प्रकार वे मुझे छोड, मेरे शरीर का ही अनुभव कर रहे हैं । जैसे मुझे उन के गुण ही धारक होते हैं, वैसे उन्हें अपने आश्रितों के हस्तस्पर्श से पवित्र बना हुआ मक्खन ही धारक होता है । अतः उस पर अत्यधिक स्पृहा करते हुए वे नवनीतपात्र में अपना सारा बाहु डालकर मक्खन खाकर उस सुगंध से विभूषित अपने भुज से अति हेय मेरे शरीर का भी आलिंगन कर रहे हैं ।

**कलन्दु एन् आवि नलङ् कोळ् नाथन्**
**पुलन् कोळ् माणाय् निलम् कोण्डाने ।। ६ ।।**

**(गाथा) - संश्लिष्य मम चात्मानं कृत्वा स्वीयं मम प्रभुः ।**
**सर्वेन्द्रियहरो भाति वामनो धरणीं भजन् ।। ६ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - मया सह संश्लिष्य मदात्मभूषणभूतं शेषत्वमपहृतवान् स्वामी सर्वेन्द्रियापहारचतुरवामनवेषधारी सन् भूमिं भिक्षित्वा स्वीकृतवान् ।**

**[आर्जवेनैव भगवान् कदाचित् शेषमपि शेषिणं करोति]**

अत्र उद्देश्यविधेययोः नियमो न कोऽपि । यो महाबलिस्वम् अपहृतवान्, स एव मम स्वम् अपहृतवान् ; यो मम स्वम् अपहृतवान्, स एव महाबलिस्वम् अपहृतवान् इति उभयथापि विवक्षणम् अक्षतम् । मुनिवरस्यास्य स्वं - शेषत्वं, तस्यापहरणं नाम शेषित्वे स्थापनम् । शेषभूतस्यापि चेतनस्य कदाचित् शेषत्वप्रतिभटं शेषित्वम् आस्थेयं भवति । कथमिति चेत्, शेषत्वात् अभ्यर्हितस्य पारतन्त्र्यस्यापि परिपालनीयतया तादृशं पारतन्त्र्यं स्मारयन् भगवान् 'शठकोपमुनीन्द्र, भोः ! भवान् सिंहासनम् अधितिष्ठतु ; अहं भवतः सेवां करवाणि' इति कथयेद्यदि, तर्हि पारतन्त्र्यपरतन्त्रेण मुनिवरेण तत्प्रतिषेधस्य कर्तुम् अशक्यत्वात् अयोग्यत्वाच्च ओमिति अभ्युपगमः एव कर्तव्यो भवति । तथा अभ्युपगमे शेषत्वं प्रनष्टमेव भवतीति सुगमम् । एतदेव उच्यते **मया सह संश्लिष्य**

**मदात्मभूषणभूतं शेषत्वमपहृतवान्** इति । सैषा चर्या भगवतः कौटिल्यकृतमिति मितधियः मन्येरन् । नैव तथा । गायति स्म भगवान् स्वयम् - **'ज्ञानी त्वात्मैव मे मतम्'** (भ.गी.७-१८) इति । ज्ञानी आत्मा भवति चेत् भगवान् शरीरं ननु भवति । नियन्तृत्व-धारकत्व-शेषित्वैः निरूपणीयः आत्मा । नियाम्यत्व-धार्यत्व-शेषत्वैः निरूपणीयं शरीरम् । ज्ञानिनम् आत्मानं मन्यमानस्य कथयतश्च भगवतः शरीरत्वे अक्षतसिद्धिके सति मुनिवरस्य शेषत्वं प्रच्युतमेव खलु । नैतत् अन्याय्यं नाम । तथा च अत्र भगवतः शेषित्वप्रहाणं मुनिवरस्य शेषत्वप्रच्यावनं च न कौटिल्यम्, अपि तु आर्जवमेवेति सिध्यति । अथ सर्वेन्द्रियापहारचतुरवामनवेषधारणेन भूमिस्वीकरणे द्यावापृथिव्योः आक्रमणे च न कौटिल्यकथा, सर्वथाः अपि आर्जवमेव । भिक्षणकाले एव **'मम पादतो मयैव विक्रमणार्हा भूमिः प्रदीयताम्'** इति खलु अपेक्षितम् । ओमिति अभ्युपगम्यैव हि बलिना दानम् अकारि । तथा च आर्जवमेव इत्यलम् ।

**[प्रतिपदार्थ]**

**हिन्दी - मेरे साथ मिलकर मेरी आत्मा के अलंकारभूत शेषत्व का अपहरण करनेवाले हमारे नाथ ने सर्वेंद्रियों का अपहरण करने में समर्थ वामनवेष का धारण कर भूमि माँगकर उसे अपनाया ।**

**[आर्जव से ही भगवान कभी शेष को शेषी बना देता है]**

इस गाथा का तात्पर्य इन दोनों प्रकारों से हो सकता है - (१) महाबलि की संपत्ति का अपहरण करनेवाले भगवान ने मेरा संपत्ति भी लूट ली ; (२) मेरी संपत्ति के चोर भगवान ने महाबलि की संपत्ति भी चुरा ली । भगवान ने आळ्वार की किस वस्तु की चोरी की ? शेषत्व की । शेषत्व की चोरी क्या है ? आळ्वार को शेषी बना देना । यह भाव है - सर्वदा भगवान का शेष ही रहना चाहनेवाले इस चेतन को कभी ऐसा प्रसंग आता है जब यह अपना शेषत्व छोडकर स्वयं शेषी बनने को बाध्य हो जाता है । यह अर्थ बताया गया है कि शेषत्व की भाँति पारतन्त्र्य भी इस चेतन का महान गुण है, जिस का भी पालन करना आवश्यक है । तथाच कभी कभी इस पारतन्त्र्य की याद दिलाते हुए भगवान आळ्वार से कहें कि 'हे शठकोप मुनिवर ! आप कृपा करके इस सिंहासन पर विराजिएगा ; मैं आप की सेवा करूँगा', तब अपने पारतन्त्र्य का स्मरण

करनेवाले आळ्वार कैसे यह भगवदाज्ञा टाल सकें ? अतः उन्हें सिंहासन पर विराजना ही पडेगा । परंतु यह करने पर उन का शेषत्व नष्ट हो जाएगा । यहाँ इन शब्दों से इस अर्थ का वर्णन किया जाता है **मेरे साथ मिलकर मेरी आत्मा के अलंकारभूत शेषत्व का अपहरण करनेवाले** । कोई सोच सकते हैं कि यह तो भगवान की कुटिलता हुई, न तु आर्जव । यह ठीक नहीं ; चूँकि भगवान स्वयं गीता में गाते हैं - **'ज्ञानी त्वात्मैव मे मतम्'** (भ.गी.७-१८) अर्थात् ज्ञानी मेरी आत्मा ही है । ज्ञानी आत्मा हुआ तो भगवान उस का शरीर हैं । शरीर और आत्मा के ये लक्षण शास्त्रसिद्ध हैं - नियंता, धारक व शेषी आत्मा है और नियाम्य, धार्य व शेष शरीर है । तथा च ज्ञानी को आत्मा कहनेवाले भगवान के अभिप्राय से जब वे स्वयं शरीर अथवा शेष ठहरे, तब ज्ञानी का शेषत्व नष्ट ही हुआ । ज्ञानी के प्रति भगवान के सीमातीत प्रेम के कारण बने हुए इस प्रसंग में कुटिलता का प्रश्न ही नहीं उठ सकेगा, किंतु इस से पूर्ण आर्जव का ही प्रताप सिद्ध होगा । एवं सकल इंद्रियों के भी चुराने में समर्थ वामनरूप का धारण कर महाबलि से भूमि माँगने के प्रसंग में भी कौटिल्य का अवकाश नहीं है ; क्यों कि भगवान ने महाबलि से स्पष्टतया यही माँगा - **'मुझे तीन पग भूमि का प्रदान करो, जिसे मैं स्वयं अपने पाद से नाप लूँ'** । महाबलि ने भी यह ठीक जानकर ही दान दिया था । अतः इस में भी आर्जव ही प्रकट होता है ।

**कोण्डान् एळिवडै उण्डान् एळ्वैयम्**
**तण्डामम् शेय्दु एन् एण् तान् आनाने ।। ७ ।।**

**सप्तर्षभप्रहर्ताऽसौ सप्तलोकीं च भक्षयन् ।**
**परमे धाम्नि च स्थित्वा मम चित्तानुगः प्रभुः ।। ७ ।।**

[प्रतिपदार्थः]

**विवरणम् - नीलादेवीपरिणयार्थं ऋषभसप्तकौद्धत्यम् अपाकृतवान्, सप्तलोकीं संवर्तश्रये समुपभुक्तवांश्च भगवान् श्रीवैकुण्ठनिर्विशेषं मयि प्रेमबन्धमाबध्य मदीयमनोरथान् अशेषानपि स्वयमुवाह हन्त ! (मदीयमनोरथप्रतिकोटिभूतान् मनोरथान् स्वयं वहतीति यावत्)**

**[भगवतः सङ्कल्पेन सहस्रगीतिः निष्पन्ना]**

**मदीयमनोरथान् अशेषानपि** इत्यादिकं गाथायाः अस्याः जीवसर्वस्वम् । मुनिवरोऽसौ श्रीवैकुण्ठभुवनगमनाय, विरजास्नानाय **'एतत्साम गायन्नास्ते'** (तै.उ.भृ.१०-५) इत्याम्नातसामगानाय च मनोरथान् बिभर्ति । भगवांस्तु श्रीवैकुण्ठात् इहागमनाय, मुनिवरपरिसरप्रवहत्ताम्रपर्णीविगाहनाय, सहस्रगीतिगाथागानाय च स्वकीयानां मनोरथानाम् अतटान् प्रवाहान् उपबृंहयन् आस्ते इत्युक्तं भवति । एवंविधं स्वाभिलषितं साधयितुं नायमशक्तः, अपि तु सुसमर्थः एवेति द्योतनाय सप्तर्षभौद्धत्यनिरसनापदानं सप्तलोकीनिगरणापदानं च पूर्वार्धेन अनुसंहितम् ।

[प्रतिपदार्थ]

**हिन्दी - नीलादेवी से परिणय करने के लिए सात बैलों का दमन करनेवाले और प्रलयकाल में सातों लोकों को अपने पेट में रखनेवाले भगवान ने श्रीवैकुण्ठ की भाँति मुझ से प्रेम करते हुए मेरी समस्त इच्छाओं को स्वयं अपनाया । (अर्थात् मैं ने जो इच्छा की, भगवान ने भी ऐसी ही इच्छा की है )**

**[भगवान के संकल्प से सहस्रगीति उत्पन्न हुई]**

इस गाथा का सारभूत भाग **मेरी समस्त इच्छाओं के** इत्यादि अंतिम वाक्य है । आळ्वार विचार करते रहे कि मुझे श्रीवैकुण्ठदिव्यलोक जाना चाहिए, विरजानदी में स्नान करना चाहिए और सामगान करना चाहिए इत्यादि । यह जानकर भगवान ने अपने मन में यह इच्छा की कि मुझे वैकुंठ से आळ्वारतिरुनगरि जाना चाहिए, ताम्रपर्णी नदी में स्नान करना चाहिए, सहस्रगीति का गान करना चाहिए इत्यादि । इस प्रकरण में सप्त वृषभमर्दन और सप्तलोकीभक्षण के इतिहासों का वर्णन करने का यह भाव है कि भगवान अपनी पूर्वोक्त इच्छा पूर्ण करने के पर्याप्त शक्तिमान हैं ।

**आनान् आन् आयन् मीनोडु एनमुम्**
**तान् आनान् एन्निल् तानाय शङ्गे ।। ८ ।।**

**(गाथा) - गोपवेषधरोऽप्येष स्वयं मत्स्यवराहवत् ।**
**अवतीर्णोऽभवन्मह्यमवतारा असङ्ख्यकाः ।। ८ ।।**

[प्रतिपदार्थः]

**विवरणम् - गोपालो भूत्वा गोरक्षणेऽधिकृतोऽभूत् । मत्स्यवराहरूपेणापि अवातरत् । एवमेव अवताराः किमर्थं कृताः इति चेत्, मयि स्वस्य संजातया प्रीत्या ।**

**[भगवदवताराः भक्तानुभवाय इति श्रीभाष्यकारोक्तिः]**

तेषु तेषु कालविशेषेषु भगवता कृताः अवताराः यद्यपि तत्तत्कालिकप्रयोजन-विशेषप्रेप्सानिमित्तेन इति पौराणिककथाविशेषैः प्रतिपत्तव्यं भवति, तथापि श्रीशठकोपमुनीन्द्रसधर्माणो ज्ञानिनाम् अग्रेसरास्तु सर्वानपि तान् अवतारान् स्वार्थमेव कृतान् अनुसंदधते । कथमुपपद्येत तदिदम् अनुसन्धानमिति शङ्का स्यादपि । **'परित्राणाय साधूनाम्'** (भ.गी.४-८) इति गीताश्लोकस्य भाष्यमनुगृह्णन् भगवान् भाष्यकारः एवमाह - **'साधवः - उक्तलक्षणधर्मशीलाः वैष्णवाग्रेसराः मत्समाश्रयणे प्रवृत्ताः मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनात् ऋते स्वात्मधारणपोषणादिकम् अलभमानाः क्षणमात्रं कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्राः भवेयुरिति मत्स्वरूपचेष्टितावलोकन - आलापादिदानेन तेषां परित्राणाय .... संभवामि'** इति । अत्र बहुभिः विशेषणैर्विशेषिताः सन्तो **वैष्णवाग्रेसराः** इति निर्दिष्टाः व्यक्तिविशेषाः पराङ्कुशपरकालादिदिव्यसूरिवराः एव इत्यत्र न सन्देहगन्धोऽपि । अनुगृहीतम् एकैकमपि विशेषणं वस्तुतः तेष्वेव हि समन्वेति । तेषां परित्राणं कीदृग्विधम् उद्दिष्टमिति निर्दिष्टभाष्यपङ्क्तितो विमर्शनीयम् । **'मत्स्वरूपचेष्टितावलोकनदानेन तेषां परित्राणाय'** इति सुस्पष्टं भाषितत्वात्, युगान्तरेषु कृतानामपि अवताराणां चेष्टितविशेषान् प्रदर्श्य तान् परिरक्षतीति सुष्ठु प्रतीयते । तथा च भगवदवताराणां तत्तत्कालिकप्रह्लादप्रभृतिभक्तरिरक्षिषामात्रं नोद्देश्यम् ; अपि तु गुणचेष्टितानुभवलोलुपानाम् एवंविधानाम् अर्वाचीनानां भक्तानां रिरक्षिषापि भगवद्विवक्षिता इति भगवद्भाष्यकाराणाम् आशयोऽवसीयते । तथा चात्र गाथायां **'मत्स्यकूर्म-गोपालाद्यवताराः भगवता मयि स्वस्य संजातया प्रीत्या कृताः'** इति कीर्तितं सर्वथा स्थाने । अवतारसमकाले रक्षणप्रकारोऽन्यः, समनन्तरकाले रक्षणप्रकारः ततोऽन्यः परमविलक्षणः । समकाले रक्षणं विरोधिविनाशप्रधानं स्यात् । समनन्तरकाले एतन्मुनीन्द्रसधर्माणां रक्षणं गुणानुभवप्रदानप्रधानं प्रतिपत्तव्यम् ; अवतारेषु पूर्वम् अकृतेषु सत्सु पश्चाद्गुणानुभवप्रसक्तेरेवानुत्थितेः ।

[प्रतिपदार्थ]

**हिन्दी - भगवान स्वयं गाय चरानेवाला गोपाल बने ; मत्स्यवराहादिरूपों से अवतीर्ण भी हुए । मुझ से प्रेम करते हुए ही उन्हों ने ये सभी अवतार किये ।**

**[श्रीभाष्यकार का कथन है कि भगवान के अवतार भक्तानुभव के लिए हैं]**

पुराणकर्ता महर्षियों का कहना है कि भगवान के इस संसार में बारबार अवतार करने का कारण उस समय के दुष्टशिक्षण, शिष्टपरिपालनादि कतिपय कार्य संभालना ही है । परंतु आळ्वार जैसे भक्तजन उन अवतारों को अपने लिए ही अनुष्ठित मानते हैं । यह बात असंभावित-सी लगती होगी ; परंतु है बिलकुल ठीक । तथाहि - भगवद्गीता में अवतारप्रयोजन का वर्णन करनेवाला **'परित्राणाय साधूनाम्'** (भ.गी.४-८) इत्यादि पद्य प्रसिद्ध है । इस पर श्रीरामानुजाचार्य स्वामीजी का यह भाष्य है - 'साधु - पूर्वोक्तलक्षणवाले वैष्णवाग्रेसर, जो मेरा आश्रयण करने में प्रवृत्त होकर, मेरे नाम कर्म स्वरूपों को अपने मन व वाणी के गोचर न होने के कारण, मेरे दर्शन पाये बिना अपनी आत्मा के धारण-पोषणादि प्राप्त न करते हुए, (मेरे दर्शन के अलाभ में) एक पल भर के समय को भी हजारों कल्प मानते हुए शिथिलगात्र हो जाएँगे ; अतः उन्हें अपने विग्रह व चेष्टितों के दर्शन, वार्तालाप इत्यादि देकर उन का संरक्षण करने के लिए ..... मैं प्रकट होता हूँ'। इस लंबे वाक्य में वैष्णवाग्रेसर शब्द से कीर्तित साधुजन श्रीपरांकुश परकालादि आळ्वार ही हैं ; क्यों कि यहाँ प्रयुक्त सभी विशेषण उन के ही योग्य हैं । भगवान के दर्शन करने की, तथा उन से वार्तालाप करने की तीव्र इच्छा करना, उन के अलाभ से बहुत दुखी होना, इस दुख के फलतया पल भर को युगसहस्र मानना, शिथिलांग होना - ये सभी आळ्वारों के ही लक्षण होते हैं । उदाहृत भाष्यपंक्ति से हम यह भी जान सकते हैं कि इन साधुशब्द वाच्य आळ्वारों का परित्राण (रक्षण) भगवान के श्रीविग्रह चेष्टितादियों के दर्शन तथा वार्तालाप से होता है । अर्थात् भगवान आळ्वारों को अपने पुरातन अवतारों के चेष्टित दिखाकर उन की रक्षा करते हैं । तथाच यह अर्थ सिद्ध हुआ कि अवतारों के प्रयोजन तत्तत्काल में स्थित प्रह्लाद विभीषणादि भक्तों का संरक्षण मात्र नहीं, वरन् बहुत समय के बाद जन्म लेनेवाले आळ्वारों का भी संरक्षण है । आळ्वारों की स्पष्ट श्रीसूक्तियों का आधार लेकर ही श्रीरामानुज स्वामीजी ने उक्त गीताश्लोक का यह सुंदर अर्थ लिखा । अतः प्रकृत में आळ्वार जो कह रहे हैं कि मुझ से प्रेम करते

ही भगवान ने अनेक अवतार किये, यह सर्वथा उचित है । अवतारों के समय दुष्टों का संहार करने से कतिपय भक्तों का रक्षण हुआ होगा ; परंतु यह बताना कठिन है कि उन समयों में कौन-सा भक्त भगवान के दर्शन पाकर, आळ्वारों की भाँति, विरहदुख से पार हुआ होगा । वे लोग तो दुष्टविनाश से तृप्त हो गये । गुणानुभव से रक्षित होनेवाले आळ्वार ही हैं । यदि भगवान पूर्व में अवतार नहीं किये होते, तो फिर आळ्वार को उन के दर्शन अथवा गुणानुभव कैसे मिलता ? अतः ठीक कहा गया है कि आळ्वार के लिए ही भगवान ने मत्स्यवराहगोपालादि अवतार किये ।

**शङ्गु शक्करम् अङ् कैयिल् कोण्डान्**
**एङ्गुम् तान् आय नङ्गळ् नाथने ।। ९ ।।**

**(गाथा) - शङ्खचक्रधरो भाति रम्ये भुजयुगे स्वयम् ।**
**मम प्रभुरसौ दीप्रस्सर्वतोऽप्यवतारतः ।। ९ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - अवतरणमुखेन सर्वगतो भगवान् अस्मन्नाथः शङ्खचक्रविभूषित-पाणितलो विराजते ।**

**[भगवान् सर्वथैव शङ्खचक्रादिवशीकरणसाधनसनाथो विराजते इत्युक्तिः]**

कतिपयान् वशयितुं पर्यटन्तो जनाः यथा हि वशीकरणौषधसनाथाः अटन्ति, तथा भगवानपि भक्तजनवशीकरणार्थम् अवतरन् वशीकरणसाधनभूतदिव्यायुधपरिकर्मितः एव सन्नवतरति इत्यनुसन्धीयते इह । अत्रेदं विमर्शपदं **'जातोऽसि देवदेवेश ! शङ्खचक्रगदाधर' !** (वि.पु.५.३.१०) इति पुराणरत्ने कथनात् कृष्णावतारे परं शङ्खचक्रादि साहित्यं सुवचम् ; रामाद्यवतारेषु च किमस्ति तत्साहित्यमिति । अत्रैवम् अनुगृह्णन्ति आचार्याः - 'अस्ति एतत्साहित्यं सर्वेषु अवतारेषु । दिव्यायुधानि तानि समयविशेषेषु सन्निधित्सया तिरोहितानि स्युः' इति । उपपद्यते सत्यमेतत् । श्रीरामायणे प्रथमतो दाशरथिं प्रेक्षमाणो हनुमान् पृच्छति - **'आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः । सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः'** (रामा.किं कां.३-१५) इति । अत्र व्याख्याता

गोविन्दराजार्यः आह - **'हनुमतो भक्तप्रवरत्वेन तस्य चतुर्भुजवेषेण दृश्योऽभवत्'** इति । रावणवधानन्तरं मन्दोदर्या क्रियमाणे प्रलापे **'व्यक्तमेष महायोगी .... शङ्खचक्रगदाधरः'** इत्येतदप्येवं भवितुमर्हति । सुदर्शनशतके प्रोक्तम् - **'वाणी पौराणिकी यं प्रथयति महितं प्रेक्षणं कैटभारेः शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम्'** इति । श्रीरामाद्यवतारेषु तिरोहितानां स्थितानां दिव्यहेतीनां शक्तिविशेषो वस्तुविशेषेषु व्याप्य कार्यकारी बभूव ; रामावतारे इषौ, वराहावतारे दंष्ट्रायां, नरसिंहावतारे नखेषु, जामदग्न्यवतारे परशौ, एवमवतारान्तरेषु यथायोगं व्याप्य स्वसत्तां प्राचीकशन् आयुधानीति भावः ।

**[प्रतिपदार्थ]**

**हिन्दी - अवतारमुख से सर्वत्र व्याप्त होनेवाले हमारे नाथ भगवान अपने सुंदर हाथों में शंखचक्रों का धारण करते हैं ।**

**[भगवान शंखचक्रादिवशीकरणसाधनसहित ही हमेशा विराजते हैं]**

इस गाथा में कहा जा रहा है कि जैसे दूसरों को अपने वश करना चाहनेवाले हाथ में वशीकरण का औषध लेकर उन के पास जाते हैं, इसी प्रकार भगवान भी भक्तों को अपने वश करने के लिए भूतल पर अवतार करते हुए, हाथ में शंखचक्रादि दिव्यायुधों का धारण करते हैं ; क्यों कि ये आयुध ही उन के वशीकारसाधन होते हैं । यद्यपि **'जातोऽसि देवदेवेश शङ्खचक्रगदाधर'** (वि.पु. ५-३-१०) (हे देवाधिदेव ! आप शंखचक्र गदा धारी होकर ही अवतीर्ण हैं) इत्यादि श्रीविष्णुपुराण के अनुसार एकमात्र श्रीकृष्णावतार में शंखचक्रों की सत्ता प्रतीत होती है ; अन्य अवतारों में तो उन की बात सुनी नहीं जाती । तथापि आचार्यों का अभिप्राय है कि सभी अवतारों में भगवान के साथ दिव्यायुध भी विराजते ही हैं ; परंतु भगवान आवश्यक किसी किसी समय उन से कार्य लेते हुए दूसरे समय उन को छिपाकर रखते हैं । यह बात बहुत ठीक है । श्रीरामावतार को ही लीजिए । साधारणतया हम कहते हैं कि श्रीरामचंद्र द्विभुज और अत एव शंखचक्रविरहित थे । परंतु पहली बार उन के दर्शन करनेवाले हनुमानजी उन से पूछते हैं - **'आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः । सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः'** ।। (रामा.कि.कां.३-१५) अर्थात् प्रभो ! वेलन के समान, परिघसदृश व समस्तविध भूषण पहनने योग्य अपने बाहुओं को आप ने क्यों कर नहीं सजाया' ? इस में विचार यह है

कि हनुमानजी ने क्योंकर बाहवः करके बहुवचन का प्रयोग किया ? संस्कृत भाषा में दो वस्तुओं की सूचना करने के लिए द्विवचन का ही प्रयोग करना चाहिए, न तु बहुवचन का । रामायण के व्याख्याता श्रीगोविंदराज यहाँ पर लिखते हैं कि भक्तप्रवर हनुमानजी को चतुर्भुज श्रीरामचंद्रजी के दर्शन हुए ; अतः इस बहुवचन का प्रयोग किया । एवं रावणवध के बाद प्रलाप करनेवाली मंदोदरी कहती है - **'व्यक्तमेष महायोगी ...... शङ्खचक्रगदाधरः** (रामा.यु.कां.३-२) (रावणवध करनेवाले श्रीरामचंद्र साधारण मानव नहीं ; किंतु साक्षात् परमपदवासी चतुर्भुज श्रीमन्नारायण ही हैं)' । इन से स्पष्ट होता है कि उसे भी चतुर्भुजरूप का ही साक्षात्कार हुआ । इस से यह अर्थ सिद्ध होता है कि श्रीरामचंद्रजी साधारणतया द्विभुज दिखते थे ; परंतु परमभक्तों को उन के चतुर्भुजरूप के ही दर्शन मिलते थे । अथवा **'शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम्'** (७६) इत्यादि श्रीसुदर्शनशतक श्रीसूक्ति के अनुसार चक्रराज की शक्ति भगवान के तत्तदवतार के अनुगुणतया श्रीरामचंद्रजी के बाण में, वराह भगवान की दंष्ट्रा में, नरसिंह भगवान के नाखूनों में, परशुराम के परशु में, एवं अन्य अवतारों में अन्यान्य वस्तु में व्याप्त होती है ; अर्थात् उक्त सभी वस्तु चक्रराज के अवतार मानी जा सकती हैं । अतः यह तत्त्व जाननेवाले भक्त जन भगवान के उक्त सभी आयुध आदियों को चक्रराज ही मानते हैं । अतः भगवान को सर्वदा चक्रधारी कहना उचित होता है । अथवा मूलगाथास्थ (शंखचक्र) शब्द न केवल शंखचक्रों का ही, किंतु सभी दिव्यायुधों का सूचक है । तथाच यह अर्थ हुआ कि भगवान एकैक अवतार में भी भक्तों के चित्त का वशीकार करने में समर्थ शंख, चक्र, बाण, हल इत्यादि कतिपय दिव्यायुध भी साथ ही लाते हैं ।।

**नाथन् ञालङ् कोळ् पादन् एन्नम्मान्**
**ओदम् बोल् किळर् वेद नीरने ।। १० ।।**

**(गाथा)**　**ईश्वरस्सर्वलोकांश्च पादेनाक्रम्य रक्षिता ।**
**सुशीलो भाति मन्नाथो वेदसागरकीर्तितः ।। १० ।।**

[प्रतिपदार्थः]

**विवरणम् - सर्वनियन्ता, वसिष्ठचण्डालविभागविरहेण सर्वजनताशीर्षविनिहितचरणोऽस्मत्स्वामी भगवान् उत्तरङ्गजलधिवत् उज्जृम्भमाणानां वैदिकगिरामेव हि गोचरमहिमा ।**

[भगवतो वेदैकवेद्यत्वविवरणम्]

भगवतो गुणगणान् कीर्तयितुं हन्त ! के वयम् ? **'वेदैश्च सर्वैरहमेव वेद्यः'** (भ.गी.१५-१५) इति गीतोक्तरीत्या वेदैकसमधिगम्यमहिमा हि सः इति कथयति गाथैषा । 'वेदैश्च' इत्यादिगीताश्लोके एकत्र अवतिष्ठमानः एवकारो बहुत्र अन्वेतुं प्रभवति । वेदैरेवाहं वेद्यः नान्यैः प्रमाणाभासैः, वेदैरहमेव वेद्यः न अन्यान्यदैवतानि, वेदैस्सर्वैरहं वेद्यः एव ; न तु प्रमाणपथातिगोऽस्मि, सर्वैरेव वेदैरहं वेद्यः (अधुना एवकारः अप्यर्थकः) ब्रह्मकाण्डगतैरिव कर्मकाण्डगतैरपि वाक्यैरहं वेद्यः । एवं नाम भगवत्प्रतिपादने प्रवणैः प्रवीणैश्च वेदैरेव स्तुत्यमहिमा परमः पुमान् इति कथितं भवति ।

[प्रतिपदार्थ]

**हिन्दी - सब के नियंता और वसिष्ठ चंडाल एवं पक्षपात के बिना सब के सिर पर अपना श्रीपाद रखनेवाले हमारे स्वामी भगवान लहरों से समावृत सागर की भाँति घोषण करनेवाले वेदों से जानने योग्य वैभववाले हैं ।**

[भगवान के वेदैकवेद्यत्व का विवरण]

इस गाथा का यह तात्पर्य है कि **'वेदैश्च सर्वैरहमेव वेद्यः'** (भ.गी. १५-१५) (इत्यादि प्रमाण के अनुसार वेद प्रतिपाद्य महा वैभववाले भगवान के कल्याणगुणों का अत्यल्प ज्ञान शक्तिवाले हम कैसे वर्णन कर सकेंगे । उक्त वाक्य में **'एव'** शब्द का अन्वय तत्रत्य अन्य सभी पदों के साथ हो सकता है । तथाहि - (१) सर्वैः वेदैरेवाहं वेद्यः - समस्त वेदों से ही मैं समझा जा सकता हूँ, न तु अन्य किसी आभास प्रमाण से । (२) सर्वैः वेदैरहमेव वेद्यः - समस्त वेदों से प्रतिपाद्य मैं ही हूँ, न तु कोई क्षुद्र देवतांतर । (३) वेदैस्सर्वैः अहं वेद्यः एव - समस्त वेदों से मैं वेद्य ही हूँ, न तु प्रमाण के अगोचर हूँ । (४) सर्वैरेव वेदैः अहं वेद्यः - सभी वेदों से भी मैं वेद्य हूँ ; (अब एवकार का अर्थ 'भी' है) अर्थात् कर्मकांड, ब्रह्मकांड नामक दोनों वेदभागों से मैं वेद्य

हूँ । इस प्रकार भगवान का प्रतिपादन करने के लिए ही प्रवृत्त, उस कार्य में समर्थ वेदों के सिवाय और कौन उन का वर्णन कर सकता है ?

**नीर् पुरै वण्णन् शीर् शठकोपन्**
**नेर्दल् आयिरत्तु ओर्दल् इवैये ।। ११ ।।**

**(गाथा) - रक्षितुर्निम्नगान् विष्णोरार्जवं कीर्तयन्मुनिः ।**
**शठारिराह साहस्त्रं तत्रेदं दशकं शुभम् ।। ११ ।।**

[प्रतिपदार्थः]

**विवरणम् - नीरसवर्णस्य सर्वेश्वरस्य (आर्जवाभिधानं) गुणविशेषमधिकृत्य शठरिपुमुनिना प्रोक्तमिदं दशकं सहस्त्रगाथामध्ये सम्यग्विमर्शसुशोभनम् ।**

**[भगवतः आर्जवगुणप्रतिपादकमिदं दशकम्]**

आर्जवगुणप्रतिपादनमेव दशकस्य अस्य प्रमेयमिति मुनिवरः गाथया अनया स्वयमेव प्रतिपादितवान् भवति । **'नीरसवर्णस्य भगवतो गुणः'** इत्यनेन आर्जवमेव विवक्षितं भवितुमर्हति इति विवृतम् अवतारिकायाम् इह अनुसन्धेयम् । अन्येषु दशकेषु इव अत्र फलकीर्तनं नास्ति । सुष्ठु विमृश्य व्याहृतस्य अस्य दशकस्य विमर्शः एव परमप्रयोजनं भक्तानामिति विवक्षितमिव ।

**[भगवतो नीरसावर्ण्यम्]**

गाथायाम् अस्यां **नीरसवर्णः** इति निर्दिष्टो भगवान् भूयोभिः प्रकारैः नीरसावर्ण्यं धत्ते । द्वाविंशत्या प्रकारैः निरूपयामः इह तत् रसिकानां मनोविनोदाय । (१) नीरं निम्नस्थलेष्वेव स्वयं रागतः प्रसरति ; उन्नतस्थलेषु तत्प्रसरं बहुलप्रयाससाध्यं हि पश्यामः । भगवान् जात्यादिभिः स्वात्मानं जघन्यं मन्यमानं नीचं जनमुद्दिश्यैव स्वरसतः प्रसारयति कृपारसम् । उत्तुङ्गम्मन्येषु अवलिप्तेषु स्वकीयं कृपारसं प्रसारयितुं सङ्कुचति च । हस्तिनापुरराजवीथिकायां राजाधिराजेषु बहुषु विराजमानेष्वपि **'विदुरस्य ययौ वेश्म'** इत्युक्तरीत्या सर्वथा त्वात्मानम् अतिजघन्यं मन्यमानस्य विदुरस्यैव हि सदनं प्रविवेश वासुदेवः । **'भीष्मद्रोणावतिक्रम्य माञ्चैव मधुसूदन ! । किमर्थं पुण्डरीकाक्ष ! भुक्तं वृषलभोजनम्'** ।। (महा.भा.उ.प.८५-९२) इति प्रष्टव्यतां दधानो **विदुरान्नानि बुभुजे**

**शुचीनि गुणवन्ति च ।** (महा.भा.उ.प.८९-४१) (२) जलं सर्वथाप्यनुपेक्षणीयं भवति । अन्नादीनि वस्तूनि यथा स्वप्रतिनिधिभूतगोधूम - क्षीर-पिष्टफलादिसहानि, न तथा जलं स्वप्रतिनिधिसहं दृश्यते । एवं भगवानपि न सहते स्वस्य प्रतिनिधिम् । फलविशेषानुरक्ताः जनाः स्वस्वरुच्यनुगुणं कर्मज्ञानभक्त्यादिषु योगेषु अन्यतम् अवलम्बमानाः अपि भगवन्तं विहातुं नैव शक्नुवन्ति । फलदशायामिव साधनदशायामपि भगवान् अपरित्याज्यः एव हि साधनान्तरनिष्ठानामपि । तदुक्तं श्रीवत्साङ्कमिश्रैः - **'या कर्मणामधिकृतिर्य इहोद्यमस्तेषु अप्येष्वनुष्ठितिरशेषमिदं हि पुंसाम् । त्वामन्तरेण न कथञ्चन शक्यमाप्तुं एवं च तेषु मयि चास्ति न ते विशेषः'** ।। इति (श्रीवैकुण्ठस्तवे-१००) । (३) आपः स्वतः शैत्यशालिन्यः, **'शीत स्पर्शवत्य आपः'** (त.सं.) इति हि लक्षणम् अपाम् । ऊष्मा तु तासाम् उपाधिकः । एवं भगवानपि स्वतः करुणाशिशिरहृदयः, **'चन्द्रमा मनसो जातः'** (पु.सू.१४) इति पुरुषसूक्ताम्नातरीत्या चन्द्रमसोऽपि जन्मस्थानत्त्वेन हि प्रसिद्धं तस्य मनः । एवंविधोऽपि भगवान् **'यद् ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे'** (श्रीवै.स्त.६१) इत्युक्तरीत्या सन्ततसन्तन्यमानैः अस्मादृशाम् अपराधैः ऊष्मलहृदयो भवति तावत् । शिशिरतरे सागरेऽपि बडबानलो ज्वलति हि । (४) आगन्तुकोष्णभावाः अपि आपः ऊष्मशमनाय अपः एवापेक्षन्ते । एवं अपराधैः आविलचेतसोऽपि भगवतः तस्यैव प्रसादोऽपेक्षितः । **'निरासकस्यापि न तावदुत्सहे महेश ! हातुं तव पादपङ्कजम्'** (स्तो.र.२६) इत्यनुगृह्णन् यामुनार्यवर्यः इममेवार्थं स्फोरयति । **'समुद्रं राघवो राजा शरणं गन्तुमर्हति'** (रामा.यु.कां.१९-३१) इति विभीषणवचसि प्रत्ययेन भगवान् रामचन्द्रः प्रतिशयनभूमिकाभूषितपयोधिपुलिनस्समभूत् । 'निशास्तिस्रोऽतिजग्मतुः' । समुद्रराजो नाभूदभिमुखः । **'चापमानय सौमित्रे ! शरांश्चाशीविषोपमान् । सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः'** ।। (रामा.यु.कां.२१-२२) इति कथयन् कोपमाहारयत् तीव्रं अवनिजाजानिः । वाचाम् अभूमिस्स कोपोऽथ स्वयमेव प्रशमम् उपययौ । (५) सलिलं तावत् अस्मदिच्छानुगुणं क्वचिन्नियन्त्रणयोग्यं क्वतित्प्रसारणार्हं च भवति । उदपाने द्वारपिधानेन अवस्थाप्यते सलिलम् ; तदेव द्वारोद्घाटनेन बहिः प्रसारयोग्यं च भवति खलु । एवं भगवानपि **'स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुङ्क्ते'** (तिरुप्पावै तनियन्) इत्युक्तरीत्या गोदादेवीसधर्मणां निगलबन्धेनानुभाव्यो भवति । इतरेषां 'दूत्य प्रसङ्गोत्सुकं' इत्युक्तरीत्या बहिः प्रसारणार्हश्च भवति । (६) पानीयम् अन्नादीनां पाकायसाधनं भवति यथा, तथा स्वयं पेयं च भवति । अन्नादिपाकोपयोगकाले पयसः उपायत्वाकारोऽनुभूयते । पानीयतादशायां तु उपेयत्वाकारोऽनुभूयते । एवं भगवानपि **'उपायोपेयत्वे तदिह तव तत्त्वं न**

**तु गुणौ'** (श्रीरङ्ग.उत्तरश.८७) इति श्रीपराशरभट्टार्यदिव्यसूक्त्यनुरोधेन उपायत्वम् उपेयत्वं च बिभर्ति । भगवन्तम् उपायतया परिगृह्य प्रयोजनान्तराणि प्रेप्सन्ति केचित् । कर्मज्ञान-भक्त्यादिकम् उपायतया स्वीकृत्य भगवन्तम् उपैतुम् ईहन्ते केचित् । उपायस्पर्शगन्धमपि असहमानाः परमैकान्तिनः उपायत्वम् उपेयत्वं च तस्मिन्नेव सुप्रतिष्ठितम् अवधारयन्ति । (७) अन्नगोधूमादिकानि वस्तुजातानि स्वप्रतिनिधिसहानि प्रेक्ष्यन्ते । कन्दमूलफलादीनि च अन्नस्थाने निविशन्ते खलु । पानीयं तु न तथा प्रतिनिधिसहम्। पानीयस्थाने वस्त्वन्तरं न किमपि निवेशमर्हति। पानीयेन निर्वाह्यं कृत्यं पानीयेनैव हि निर्वाह्यं । भवति । भगवानपि न प्रतिनिधिं सहते । भगवतो लिप्सा भगवतो लाभेनैव पूरणीया भवति । गुणानुभवतोऽपि कालक्षेपो न सुकरो भवति भगवद्दर्शनकामुकानाम् । (८) अन्नमश्यमानं सत् तोयम् अवश्यमपेक्षते । विना तोयमशितुं न प्रभूयते खलु । तोयं तु स्वोपभोगकाले न इतरदपेक्षते । पिपासितो हि पयसैव तृप्यति ; बुभुक्षितो न भुक्त्यैव तृप्यति । भगवद्विषयोऽपि एतादृशः । उपायान्तरनिष्ठाः भगवन्तमवश्यं कामयन्ते । भगवन्निष्ठास्तु (प्रपन्नाः) उपायान्तरेषु सर्वथा निरपेक्षाः । (९) जलाधारभूतेषु भाजनेषु तारतम्यसद्भावेऽपि जलं तावत् लघुनि वा बृहति वा पात्रे स्वयं परिपूर्णं भवति । एवं भगवता प्रयोजनान्तराणि प्रेप्सन्तो जनाः लघवश्च गुरवश्च भवन्तु कामम् ; सर्वत्र परिपूर्णफलप्रदः एव भगवान् । अलम् अलम् इति यथा सर्वेऽपि कथयेयुः तथा हि वितरति भगवान् । (१०) सलिलं पञ्च प्रकारकं प्रेक्षामहे । भूगतजलं, आवरणसलिलं, क्षीराब्धिपयः, प्रवाहतोयं, वापीकूपादिगतम् उदकमिति । भूमौ सर्वत्रापि अन्तरवतिष्ठते सलिलम्, अथापि पिपासितस्य सद्यः पिपासाप्रशमनार्हं तन्न भवति । एवमन्तर्यामी भगवान् सर्वत्र स्थितोऽपि सद्योदर्शनसमुत्कण्ठितानां परमभक्तानाम् उपयोगार्हो न भवति । अण्डाद्बहिः प्रवहदावरणजलं श्रीवैकुण्ठम् अधिवसता भगवता तुल्यम् । पिपासितानाम् आवरणसलिलमिव सद्योदिदृक्षूणां मुमुक्षूणाम् अनुपकारको हि भवति वैकुण्ठपतिः । क्षीराब्धिः अण्डान्तर्गतोऽपि सन् यथा पिपासितानां नोपकारकः, तथा व्यूहाधिपतिः भगवानपि सद्यो दिदृक्षूणाम् अस्मादृशाम् अनुपकारकः । नेदिष्ठं सदपि प्रवाहसलिलं तत्कालवर्तिव्यतिरिक्तानां जनानां यथा नोपकारकं, तथा रामकृष्णाद्यवतारमूर्तिविशेषोऽपि पाश्चात्यानाम् अस्मादृशाम् अनुपकारकः। अन्ततो वापीकूपतटाकादिसलिलमेव यथा इदानीन्तनानामपि सर्वेषां सद्यः पिपासाप्रशमनविचक्षणम्, तथा अर्चामूर्तिरेव भगवान् सद्यो दर्शनलालसानां मुमुक्षूणाम् अशेषाणां सुष्ठु सन्दृश्यो भवति । (११) स्वतः पवित्रमपि पाथः आश्रयवशादेव त्याज्यताम् उपादेयतां च विन्दति । अपरिशुद्धाधिकरणवर्ति तत् अनुपादेयम्, सुपरिशुद्धाधिकरणवर्ति तत् उपादेयं च भवतीति पश्यामः ।

एवं भगवानपि देवतान्तरेषु अन्तर्यामी सन् आश्रयवशादेव त्याज्यो भवति ; रथाङ्गशङ्खासिगदाधनुर्वरादिदिव्यायुधदिव्यविभूषणविभूषितदिव्यमङ्गलविग्रहाश्रितो भगवान् उपादेयो विराजते । (१२) आर्द्रासु सिकतासु पुनः पुनः खनने सति सलिलमाविर्भवति अनारतम् । एवं भगवानपि आर्द्रहृदयैः सुमनोभिः अनारतम् उपन्यस्यमानोऽपि तदातनत्ववत् नवीभवत्स्वरूपरूपगुणविभूतिचेष्टितस्सन् समुज्जृम्भते पुनः पुनः । (१३) अम्भः स्वार्थतागन्धरहितं पारार्थ्यैकवेषं वीक्ष्यते । एवं भगवानपि **'न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे'**।। (जितं.स्तो.५) इति जितन्ताम्नायरीत्या, **'परिजनपरिबर्हाभूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते । परमपदम् अथाण्डान्यात्मदेहस्तथाऽऽत्मा वरद ! सकलमेतत् संश्रितार्थं चकर्थ'** ।। (वरदराजस्तवे.६३) इति श्रीकूरेशमिश्रानुगृहीतरीत्या च आश्रितार्थात्मात्मीयः चकास्ति । (१४) जलं स्वम् एव प्रादुर्भवितुमर्हति, न तु कदापि परकीयनिर्बन्धतः । एवं भगवानपि **'नासौ पुरुषकारेण न चाप्यन्येन हेतुना । केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित्कदाचन'** ।। (लक्ष्मीतन्त्रे १३-१०,११) इति स्वोक्तरीत्या स्वाधीनप्रादुर्भावः । **'नायमात्मा'** (कठ.उ.२-२-३) श्रुतिरपि अत्रानुसन्धातुं योग्या । (१५) नीरं सागरात् कालमेघद्वारा समागतं सदेव सर्वोपजीव्यं भवति। एवं भगवानपि आचान्तशास्त्रार्णवसदाचार्यसूक्तिद्वारैव सर्वोपजीव्यो भवति । (१६) क्षुद्राः महान्तः इति विभागमन्तरेण सर्वैरपि जनैस्तटाकादिषु अवगाहनार्हं भवति पयः । एवं परमपुरुषोऽपि वसिष्ठचण्डालविभागमन्तरेण सर्वनिषेव्यो विभ्राजते । अत्र **'निषादानां नेता कपिकुलपतिः काऽपि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति । अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैस्स्रोतोभिः प्रसभमनुकम्पे ! समयसि'**।। इति दयाशतकश्लोकरत्नम् (१७) एकांशतोऽनुसन्धानार्हम् । (१७) अम्बु अतिसूक्ष्मरन्ध्रवर्त्मनाऽपि स्वच्छन्दम् अन्तःप्रवेष्टुं प्रभवति । इत्थं परमकारुणिकः परमात्माऽपि संसारिषु अस्मादृशेषु यादृच्छिकप्रासङ्गिकानुषङ्गिकाद्यज्ञातसुकृतलवलेशरूपरन्ध्रलाभेऽपि स्कीयकृपारसम् अन्तःप्रवेशयति हन्त ! श्रीवचनभूषणे 'त्रिपाद्विभूतिचूर्णिकायाम् अतिविशदम् एतदिति नात्र विस्तरः । (१८) उदकं तीर्थविशेषेषु महीयते । गङ्गा यमुना सरस्वती कावेरी ताम्रपर्ण्यादिनदीविशेषेषु खलु तीर्थप्रभावो विशिष्यते । एवं भगवानपि **'श्रीरङ्गं करिशैलमञ्जनगिरिं तार्क्ष्याद्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम्'** इत्यादितोऽभिष्टुतेषु दिव्यदेशविशेषेषु अप्रतिमं महिमानम् अश्नुते । (१९) अतिशयिततापाः जनाः सलिलमुच्चावचैः प्रकारैः उपभुञ्जते स्नानपानादिरूपैः । भगवानपि मानसिकैः अनुसन्धानैः

वाचिकैः स्तवैः कायिकैः प्रणामाद्यनुष्ठानैः उपभुज्यते भक्तैः स्वस्वरुच्यनुगुणम् । (२०) पिपासितेन जनेन 'अलं जलकणिकया, अलं पानीयबिन्दुना' इति कथनात् अल्पशः काङ्क्ष्यमाणत्वं पयसि दृश्यते । एवं भगवानपि **'सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः । महात्मभिः .......'** (स्तो.र.५५) इति भगवद् यामुनार्यदिव्यसूक्त्यनुसारेण सकृत्काङ्क्षणीयदर्शनो भवति । (२१) पाथसि लघुतरः अश्मखण्डोऽपि निमज्जति ; बृहत्तरम् उडुपमपि प्लवते । अल्पवस्तुभिः अवेक्षणीयान्तःप्रदेशत्वम्, महत्तरैरपि अनवेक्ष्यान्तःप्रदेशत्वं पाथसोऽस्तीत्युक्तं भवति । सैषा रीतिर्भगवति च समाना । स तावत् **'समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम्** (वर.स्त.१०१) इत्युक्तरीत्या अल्पानामपि अवगाह्यः अनल्पानामपि दुरवगाहश्च भवति खलु । (२२) उदकं तावत् अन्नम् उत्पादयति, उत्पन्नस्य उपयोजने च हेतुर्भवति । एवं भगवानपि नानाभोगान् सृजति, सृष्टानां भोगानामनुभवे स्वयमन्तर्भवति । विना भगवन्तम् अनुभूयमानाः भोगाः न हि खलु स्वदन्ते रसिकानां चेतसे । एवमन्येऽपि नीरसाधर्म्यप्रकारा उन्नेयाः उत्तुङ्गमनीषैः भक्तप्रवरैः ।

**[एतद्दशकसारार्थसङ्ग्राहकः द्रमिडोपनिषत्सङ्गतिश्लोकः]**

**कौटिल्यवत्सु करणत्रितयेऽपि जन्तुष्वा-**
**त्मीयमेव करणत्रितयैकरूप्यम् ।**
**सन्दर्श्य तानपि हरिः स्ववशीकरोती-**
**त्याचष्ट सान्द्रकरुणो मुनिरष्टमेन ।।**

**[प्रतिपदार्थ]**

**हिन्दी - नीरसमान भगवान के (आर्जवनामक) गुण को लक्ष्यकर श्रीशठकोपसूरी से अनुगृहीत यह दशक, सहस्त्र गाथाओं के बीच बहुत विमर्श करने योग्य है ।**

**[भगवान की नीरसवर्णता]**

इस गाथा में आळ्वार यह स्पष्ट बता रहे हैं कि इस दशक में भगवान के आर्जव गुण का ही वर्णन किया गया है । इस दशक की अवतारिका में बताया गया कि भगवान को नीरसमान कहने का तात्पर्य यह है कि वे आर्जवगुण संपन्न हैं । दूसरे दशकों की भाँति इस दशक में फलश्रुति नहीं है । इस का यह भाव होगा कि इस दशक के परमभोग्य अर्थों का विवेचन करना ही भक्तों के लिए महान लाभ है ।

भगवान को नीर समान कहने का यह तात्पर्य है कि उन में पानी के अनेक धर्म होते हैं । अब इस का कुछ विवरण करेंगे - (१) जल स्वभावत: नीचे की ओर ही बहता है और बहुत प्रयत्न करने पर ही ऊपर चढता है ; भगवान भी जाति, गुण, वृत्त आदियों से अपने को नीच माननेवालों की ओर ही अपना कृपारस बढाते हैं, न तु अपने को उच्च माननेवालों की ओर । पांडवदूत बनकर हस्तिनापुर पधारनेवाले श्रीकृष्ण राजवीथी में बडे बडे राजाधिराजों के छोड, अपने को अतिनीच माननेवाले विदुरजी के घर पधारे और **'विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च'** (महा.भा.उ.प.८९-४१) इत्युक्त प्रकार भक्ति से पवित्र बने हुए सुमधुर अन्न का भोजन किया । यह देखकर दुर्योधन ने पूछा - **'भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन ! । किमर्थं पुण्डरीकाक्ष ! भुक्तं वृषलभोजनम् ?** ।। (महा.भा.उ.प.८५-९२) अर्थात् हे कमलनयन! मधुसूदन ! श्रेष्ठ जन्मवाले द्रोण, ज्ञानाधिक भीष्म, और राजाधिराज मुझ को लाँघकर तुम ने क्योंकर शूद्र का अन्न खाया' ? (२) कोई भी जल की उपेक्षा नहीं कर सकता । अर्थात्, जैसे हम चावल के बदले गेहूँ, बाजरा, दूध, फल इत्यादि दूसरी वस्तुओं का उपयोग कर सकते हैं, वैसे पानी के बदले दूसरी किसी वस्तु को काम में नहीं ला सकते ; इसी प्रकार भगवान का काम किसी दूसरे से नहीं हो सकता । यह भाव है - यह नहीं जानते हुए कि भगवत्प्राप्ति का उत्तम साधन स्वयं भगवान ही हैं, कितने लोग कर्मयोग, ज्ञानयोग, भक्तियोग इत्यादि दूसरे उपायों का अनुष्ठान करने लगते हैं । परंतु उन्हें भी अपने उपाय की सिद्धि के लिए भगवान का आश्रय लेना ही पडता है । इस तत्त्व को जाननेवाले प्रपन्न जन तो उन उपायांतरों को छोडकर भगवान को ही पूर्णरूप से उपाय मानते हैं । यथा श्रीकूरेशस्वामीजी ने श्रीवैकुण्ठस्तव में अनुगृहीत किया - **'या कर्मणामधिकृतिर्य इहोद्यमस्ते-ष्वन्येष्वनुष्ठितिरशेषमिदं हि पुंसाम् । त्वामन्तरेण न कथंचन शक्यमाप्तुमेवं च तेषु मयि चास्ति न ते विशेषः'** ।। (श्रीवै.स्त.१००) इस का यह तात्पर्य है - हे भगवन ! कर्मादि दूसरे योग करने का अधिकार पाना, उन में उतरना और विधिवत् उन का अनुष्ठान कर समाप्त करना-ये सभी आप की कृपा के बिना किसी को न मिलेंगे । मैं भी आप की कृपा का ही प्रतीक्षी हूँ । अत: उन में और मुझ में कौनसा अंतर रहता है ? इस लिए आप को मुझ पर कृपा करना ही उचित है । (३) सुशीतल रहना जल का स्वभाव है, तपाये जाने पर ही वह कदाचित् गरम होगा ; भगवान का स्वभाव भी करुणाशीतल रहना ही है, चेतनों के सीमातीत अपराध देखने पर वे कदाचित् रुष्ट होते हैं । पुरुषसूक्त

में यह एक वाक्य है - **'चन्द्रमा मनसो जातः'** (पु.सू.१४) अर्थात् चंद्रमा भगवान के मन से उत्पन्न हुआ । इस का कारण यह है कि भगवान का मन भी चंद्रमा की भाँति नहीं - उस से भी अधिक - शीतल होता है । (४) गरम पानी को ठंडा करने के लिए ठंडे पानी की ही आवश्यकता है, न तु किसी दूसरी वस्तु की ; उक्तप्रकार चेतन के अपराध को देखकर रुष्ट होनेवाले भगवान भी केवल अपनी कृपा से ही प्रसन्न होते हैं, न तु उपायांतर से । श्रीयामुनाचार्य स्वामीजी ने **'निरासकस्यापि न तावदुत्सहे महेश! हातुं तव पादपङ्कजम्'** (स्तो.र.२६) (मेरे निरासक होने पर भी मैं आप के श्रीपाद कमल छोड नहीं सकता) कहते हुए इसी अर्थ की सूचना की । अपनी शरणागति से अप्रसन्न समुद्रराज पर रुष्ट होकर उसे दंड देने को उद्यत श्रीरामचंद्रजी बाद में अपने आप ही उस पर प्रसन्न हुए । (समुद्रराज की नम्रता तो व्याजमात्र थी) (५) समर्थ लोग अपनी इच्छानुसार पानी को बाँध से रोक सकते हैं और बाँध हटाकर पानी को बहने भी दे सकते हैं ; **'स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुङ्क्ते'** (गोदादेवी अपने से धारण की गयी पुष्पमाला से भगवान के बाँधकर उन के अनुभव करती हैं) इत्यादि प्रशंसा के पात्र भक्त जन भगवान को बाँध सकते हैं और अन्य भक्त उन्हें अपने दूत के रूप में भेज भी सकते हैं । (६) जल दूसरी वस्तु पकाने का साधन होता है और स्वयं फलतया भी पिया जाता है ; एवं भगवान उपाय व उपेय दोनों बनते हैं । अर्थात् कोई भगवान को उपाय मानकर उन से किसी दूसरी वस्तु (ऐश्वर्यादि) पाना चाहते हैं ; कोई अन्य कर्मज्ञानादि उपायांतर से भगवान को प्राप्त करना चाहते हैं ; प्रपन्न जन तो भगवान की ही कृपा से उन्हीं को प्राप्त करना चाहते हैं । (७) भूखा मानव अन्न की भाँति रोटी, फल इत्यादि खाने से भी तृप्त हो सकता है, प्यासा तो जल के सिवा दूसरी किसी वस्तु के उपयोग से तृप्त न हो सकता ; एवं भगवत्प्राप्ति करने के इच्छुकों की इच्छा उन को प्राप्त करने पर ही शांत होगी, न कि दूसरी किसी वस्तु के पाने पर । साक्षात् दर्शन करने के इच्छुक भक्तजन न केवल दूसरे किसी पदार्थ के लाभ से तृप्त न होगा, किंतु खुद भगवान के गुणों का अनुभव करने पर भी तृप्त न होगा । (८) अन्न खाने के समय जल की अपेक्षा रहती है, परंतु जल पीने के समय दूसरे किसी की आवश्यकता नहीं रहती ; उपायांतरनिष्ठों को भगवत्कृपा भी पाने की आवश्यकता रहती है, भगवन्निष्ठ यानी प्रपन्न को अन्य वस्तु की अपेक्षा नहीं । (९) छोटे बडे पात्रों में सर्वत्र जल पूर्ण ही भरेगा ; एवं भगवान से नाना प्रकार के फल पाना चाहनेवाले जन छोटे बडे इत्यादि नाना प्रकार के यद्यपि होंगे, तथापि भगवान सब पर परिपूर्ण अनुग्रह ही करेंगे । अर्थात् किसी को ऐसा न लगेगा कि

मुझ पर भगवान की कृपा कम हुई है, सब पूर्ण तृप्त ही होंगे । (१०) जल के ये पाँच प्रकार अनुभव और शास्त्र सिद्ध हैं - (अ) भूगत जल - साधारणतया नजर नहीं आता, किंतु भूमि खोदने पर दीख पडता है ; (आ) आवरणजल - शास्त्र के अनुसार ब्रह्मांड के बाहर बहता है ; (इ) क्षीरसागर - ब्रह्मांड के अंदर है और ब्रह्मांड की देवताओं को प्राप्य है ; (ई) प्रवाह - चौमासे में बहता और वहाँ जानेवालों को मिलता है और (उ) बावडी, तालाब इत्यादि का जल - हमेशा काम में आने योग्य रहता है ; इन के सदृश भगवान के भी ये पाँच प्रकार हैं - (अ) अंतर्यामी - प्रत्येक मानव के हृदय में विराजते हुए केवल योगियों की नजर में आते हैं, न दूसरों की ; (आ) परत्व - संसारमंडल से पर श्रीवैकुंठदिव्यधाम पर विराजमान हैं ; (इ) व्यूह - क्षीरसमुद्रादि कतिपय जगह पर विराजते हैं ; (ई) रामकृष्णादि विभवावतार - त्रेता, द्वापर आदि युगों में अयोध्या, मथुरा इत्यादि स्थलों में प्रकट हुए थे ; और (उ) अर्चावतार - श्रीरंगादि सभी क्षेत्रों में सर्वदा विराजमान हैं । अब इस अर्थ का वर्णन करने की आवश्यकता नहीं कि जैसे पिपासित व्यक्ति के काम में बावडी इत्यादियों के सिवा दूसरी जगह होनेवाला पानी सर्वदा नहीं आ सकेगा, इसी प्रकार सद्यः भगवान के दर्शन करने को उत्कंठित भक्त के काम में अर्चारूपी भगवान ही आ सकते हैं, न कि दूसरे रूपवाले । (११) स्वतः परिशुद्ध होने पर, शुद्धपात्र गत जल को ही हम पानादि कार्य में ले सकते हैं, न तु अशुद्धपात्रस्थ को ; एवं भगवान का भी देवतांतर के अंतर्यामी होने पर हम प्रदक्षिण प्रणाम इत्यादि नहीं कर सकते, किंतु शंखचक्रादि दिव्यायुधधारी, किरीट, मकुट, चूडावतंस इत्यादि दिव्यविभूषण विभूषित तथा लक्ष्म्यादियुत दिव्यमंगल विग्रहधारी होने पर हम उन की पूजा, उपासना इत्यादि कर सकते हैं । (१२) गीली रेतीली भूमि में खोदने पर स्वच्छ नया जल मिलता है ; आर्द्रचित्त (भगवद्गुणानुभव से गीले मनवाले) भक्तों से संकीर्त्यमान होने पर भगवान अपने स्वरूपरूप गुणविभूत्यादियों के साथ उज्ज्वल दर्शन देते हैं । (१३) जल, रत्तीमात्र के भी स्वार्थ के बिना सर्वदा दूसरों के काम में ही आनेवाला पदार्थ है ; भगवान भी सर्वथा स्वार्थ की चिंता न करते हुए अपने भक्तों के ही उपयोग में विनियुक्त होते हैं । **'न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे'** ।। (जितं.स्तो.५) (अर्थात् रूप, आकार, आयुध, निवासस्थान इत्यादि वस्तु भगवान के उपयोग के लिए नहीं, बल्कि उन के भक्तों के लिए ही अलग कर रखे गये हैं ।) **'परिजनपरिबर्हाभूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते । परमपदमथाण्डान्यात्मदेहस्तथात्मा वरद ! सकलमेतत्संश्रितार्थं चकर्थ'** ।। (वरद.स्त.६३)

(हे वरदराजभगवन् ! आप ने अपने सेवक, सेवा के उपकरण, दिव्यभूषण, दिव्यायुध, ज्ञानशक्त्यादिकल्याणगुण, श्रीवैकुंठधाम, अनेक ब्रह्मांड, अपने दिव्यमंगलविग्रह और दिव्यात्मस्वरूप, इन सब को भक्तों के लिए ही सुरक्षित रखा है ।) (१४) जल अपने आप ही प्रकट होता है, नतु किसी के निर्बंध से ; इस प्रकार भगवान भी केवल अपनी इच्छा से किसी के सामने प्रकट होते हैं, न तु निर्बंध से । अर्थात् कोई भी मानव स्वप्रयत्न से भगवान के दर्शन इत्यादि नहीं पा सकता । (१५) सागर से उठाकर कालमेघ से बरसे जाने पर ही जल हमारे उपयोग के योग्य होता है ; भगवान भी शास्त्रसागर में निमग्न मनवाले आचार्यों से उपदिष्ट होने पर ही हमारे उपयोग के योग्य होते हैं । (१६) तटाकादि में होनेवाला जल ऊँच-नीच के विभाग के बिना समस्त जनों के काम में आता है ; एवं भगवान श्रेष्ठ-नीच विभाग के बिना सभी जनों के सेव्य होते हैं । यथा श्रीरामावतार में भील गुहदेव, वानर सुग्रीव, राक्षस विभीषण, दंडकारण्य निवासी ऋषिगण इत्यादियों ने उन की सेवा की । (१७) अतिसूक्ष्म अवकाश (रंध्र या छेद) मिलने पर भी पानी अंदर घुस जाता है और धीरे-धीरे अपना कार्यक्षेत्र बढा लेता है ; भगवान भी चेतन का उद्धार करने का अवकाश ढूँढते रहते हैं (और उन के यादृच्छिक, प्रासंगिक, आनुषंगिक इत्यादि किसी प्रकार का अल्प सुकृत मिलने पर उस के द्वारा ही उस चेतन को अपने वश कर लेते हैं । श्रीवचनभूषण दिव्यशास्त्र के **'त्रिपाद्विभूति'** चूर्णिका में इस विषय का सुंदर वर्णन किया गया है। (१८) पुण्यतीर्थ के जल का विशेष वैभव होता है ; एवं **'श्रीरङ्गं करिशैलमञ्जनगिरिं ताक्ष्यार्द्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम्'** इत्याद्युक्त दिव्यदेशों में विराजमान भगवान का मान अधिक है। (१९) गरमी से अतिमात्र तप्त जन नहाना पीना इत्यादि अनेक प्रकारों से जल का उपयोग करते हैं ; भव संतप्त भक्तजन तो कायेन, वाचा और मनसा भगवान का अनुभव कर प्रसन्न होते हैं । (२०) अत्यंत प्यासे जन 'अब एक बिंदु पानी मिले तो भी हमारी प्यास बुझ जाएगी' कहते हुए अत्यल्प पानी माँगते हैं ; भगवद्दर्शन के अलाभ से संतप्तमानस भक्त भी **'सकृदाकारविलोकनाशया'** (स्तो.र.५५) इत्याद्युक्त प्रकार अत्यल्पमात्रा में भगवद्दर्शन पाना चाहते हैं । (२१) जल में छोटा-सा भी पत्थर डूब जाता है और बडी नाव तरती है, अर्थात् अल्पवस्तु भी तलस्पर्शी होती है और कदाचित् बडा पदार्थ भी ऊपर ही रहता हुआ अंदर का वृत्तांत नहीं जान सकता; एवं भगवान भी **'समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम्'** (वर.स्त.१०१) इत्याद्युक्त

प्रकार भगवत्कृपा के पात्र भाग्यवान कतिपय व्यक्तियों को पूर्णतया ज्ञात होते हैं और स्वप्रयत्न पर भरोसा करनेवालों को अविदित ही रह जाते हैं । (२२) जल अन्नादि पदार्थों का उत्पादक होता है और उत्पन्न अन्नादि के उपभोग में सहायक भी होता है ; भगवान भी चेतनों के उपभोग के लिए नानाविध भोगों की सृष्टि करते हैं और उन का भोग करने में उन के सहायक भी होते हैं । अर्थात् भगवान की कृपा के बिना कोई भी मानव किसी प्रकार के भोग को न तो प्राप्त कर सकता, न वा भोग सकता । ऐसे दूसरे भी अनेक प्रकारों से भगवान में जल का सादृश्य समझा जा सकता है ।

**।। सटीक सहस्रगीति के पहले शतक का आठवाँ दशक समाप्त हुआ ।।**

**।। आळवार तिरुवडिहळे शरणम् ।।**

## प्रथमशतके नवमं दशकम्

### अवतारिका

**[भगवतः सात्म्यभोगप्रदत्वम्]**

भगवति सात्म्यभोगप्रदत्वं नाम कश्चन महान् गुणविशेषोऽस्ति । स्वात्मनः स्वरूप-रूप-गुण-विभूति-चेष्टितानामनुभवं युगपदेव कृत्स्नशः प्रदातुं प्रभवन्नपि स भगवान् 'क्षुद्रशक्तिकोऽयं जन एकपदे परिपूर्णभोगं कर्तुं नेष्टे ; क्षणशः कणशश्चैव भुञ्जानोऽसौ अन्ततः उपभुक्तपरिपूर्णभोगः स्यात्' इति मन्यमानः अल्पाल्पशः एव स्वभोगं वितरति इति यत्, एतदेव सात्म्यभोगप्रदत्वं नाम । शिशूनां प्रथमतः एव जननी न हि प्रयच्छति अन्नरसशाकदध्यादिकम् । क्षीरं, यवागूः, अन्नकणिका ... इत्येवंक्रमेण प्राशनं हि प्रेक्षामहे । विद्यार्थिभ्योऽपि न हि बृहत्तरग्रन्थार्थोपदेशं दिशन्ति गुरवः प्रथमतः । वार्धके वर्तमानानां जनानां कुक्षौ तण्डुलसूपशाकदधिघृतादीनि वस्तूनि अपरिमितशकटमेयानि गतानि सन्तीति नैवात्र सन्देहलेशोऽपि । किमेतावन्ति वस्तूनि युगपदेव प्रविष्टानि जठरे ? सर्वथाऽपि असंभावितं ह्येतत् । क्षणशः कणशश्चैव प्रविष्टानीति ननु सर्वे विदन्ति । एवमेव अपरिच्छिन्नविभूतिको भगवान् स्वविभूतीः कणशः एव अनुभावयन् क्रमेण अनुभावितकृत्स्नविभूतिको बोभवीति । एवमेव अनुभावयति स भगवान् मुनिवरमेनम् ।

**[सात्म्यभोगप्रदानप्रकारः]**

**तिरुविरुत्ता**ख्यप्राथमिकप्रबन्धतः प्रभृति सहस्रगीत्याः अस्याः अवसानावधि भगवान् मुनिवरमेनम् एवमेव अनुभावयति इति वस्तुतत्त्वे स्थिते, इदानीं विशिष्य एतत्प्रतिपादनं

किमर्थमिति चेत्, अवधेयम् । भगवान् मुनिवरस्य अस्य उत्तमाङ्गमारुह्य तत्रावस्थाय मोदितुम् एच्छत्; 'एकपदे उत्तमाङ्गाधिरोहणे कृते, महानिधिम् उपलब्धवान् जन्मदरिद्रः इव प्रशिथिलान्तःकरणो भवेदसौ ; अतः तदिदं साहसं नैव कर्तुमर्हम्; क्रमशः एव शनैश्शनैः उत्तमाङ्गमधिरोढव्यम्' इति हृदि कलयन्, परिसरेऽवस्थितिः, अन्तिकेऽवस्थितिः, सहावस्थितिः, कटितटेऽवस्थितिः, हृदयदेशेऽवस्थितिः, भुजेऽवस्थितिः, रसनायाम् अवस्थितिः, अक्ष्णोः अवस्थितिः, ललाटेऽवस्थितिः - इत्येवं क्रमेण अन्ततो मूर्ध्नि निषण्णस्सन् कृतकृत्यो बभूव भगवान् । एवं नाम सात्म्यभोगप्रदानसामर्थ्यमस्य जेजेति अप्रतिद्वन्द्वम्। तदिदमनुभूयते मुनिवरेण दशकेऽस्मिन् ।

**[भगवतो मुनिवरशिरस्यवस्थानकीर्तनम्]**

सत्यं भगवतः श्रुतीनां शिरसि अवस्थानापेक्षया शठरिपुमुनेः अस्य शिरसि स्थितिः परमस्पृहणीया ; अत एव श्रीवत्साङ्कमिश्रगुरुचरणाः वरदराजस्तवे देवाधिराजं भगवन्तम् अनुयुञ्जते - **'भक्तानां यद्वपुषि दहरं पण्डितं पुण्डरीकं यच्चाम्लानं वरद ! सतताध्यासनादासनाब्जम् । आम्नायानां यदपि च शिरो यश्च मूर्धा शठारेः हस्त्यद्रेर्वा किमतिसुखदं तेषु पादाब्जयोस्ते'** ? ।। (५९) इति । एतत्पुत्ररत्नभट्टपादाः अपि श्रीरङ्गराजस्तवे - (७८) **'वटदलदेवकीजठरवेदशिरःकमलास्तनशठकोपवाग्वपुषि रङ्गगृहे शयितम्'** इत्यनुगृह्णन्ति ।

## अवतारिका

**['सात्म्यभोगप्रदत्व' भगवान का एक विलक्षण गुण है]**

**हिंदी -** प्रकृत दशक में भगवान के 'सात्म्यभोगप्रदत्व' नामक विलक्षण गुण का अनुभव किया जा रहा है । भगवान अपने भक्तों को अपने स्वरूप रूप गुण विभूति चेष्टितों का अनुभव देने के समय एक ही साथ अपना परिपूर्ण अनुभव नहीं देते ; परंतु धीरे-धीरे देते हैं । क्यों कि वे अच्छी तरह जानते हैं कि अल्पशक्तिवाला यह मानव एक साथ परिपूर्ण अनुभव नहीं कर सकेगा । अतः धीरे- धीरे थोडा-थोडा अनुभव देते हुए क्रमशः परिपूर्ण अनुभव कराना भगवान का महान चातुर्य है, जिस के दूसरा नाम है सात्म्य-भोग प्रदान । बच्चे को आहार देनेवाली माता शुरू में ही अन्न, रोटी, शाक इत्यादि ठोस पदार्थ नहीं देती, किंतु प्रथमतः केवल दूध, कुछ दिनों के बाद माँड, फिर

क्रमशः अन्न शाक इत्यादि देने लगती है ; अर्थात् थोडा थोडा आहार देती हुई बच्चे की खाने तथा पचाने की शक्ति बढाती हुई धीरे धीरे आहार की मात्रा बढाती जाकर, अंततः पूर्ण आहार देती है । एवं शिष्यों को उपदेश देनेवाले आचार्य शुरू में ही नहीं, परंतु धीरे धीरे बडे बडे शास्त्रार्थों का उपदेश देते हैं । यदि कोई वृद्ध अपने मन में यह हिसाब लगाए कि अभी तक मैं ने कितना आहार खाया है, तो उस को मालूम पडेगा कि सैकडों मन चावल या गेहूँ, दाल, शाक, घी इत्यादि उस से खाये गये हैं । परंतु क्या ये सभी वस्तु एक ही समय उस के पेट में चली गयी ? नहीं, नहीं ; सब धीरे धीरे गये । इसी प्रकार भगवान भी भक्तों को धीरे धीरे अनुभव देना शुरूकर क्रमशः अपना परिपूर्ण अनुभव देते हैं । प्रकृत दशक में उन्हों ने आळवार को ऐसा ही एक विलक्षण अनुभव दिया ।

### [भगवान के सात्म्यभोग प्रदान का वर्णन]

यद्यपि यह शंका होगी कि 'इस दशक की कौन-सी विशेषता है ?' क्यों कि आळवार के प्रथम प्रबंध तिरुविरुत्तम् से शुरूकर प्रकृत सहस्रगीति के अंत तक भगवान उन्हें ऐसा क्रमिक अनुभव ही देते हैं, तथापि इस की यही विशेषता है कि इस दशक में आळवार स्वयं अपनी वाणी से इस विलक्षण अनुभव का स्पष्ट व अत्यद्भुत वर्णन कर रहे हैं । तथा हि - इस दशक की यह विषयवस्तु है - भगवान की यह इच्छा हुई कि मैं आळवार के सिर पर बैठकर आनंद पाऊँ । परंतु उन्हों ने सोचा - 'यदि मैं सहसा इन के सिर पर चढ जाऊँ, तो, अकस्मात् महानिधि पानेवाले गरीब की भाँति, आळवार मुझ को सह नहीं सकते ; अतः यह काम धीरे धीरे करना है' । तदनुसार वे आळवार के सामने प्रकट हुए, समीप पधारे, पास बैठे, गोद पर चढे और ऊपर चढते हुए क्रमशः वक्ष, भुज, जीभ, नेत्र व ललाट पार कर के अंततः सिर पर बैठकर कृतार्थ हो गये । अब आळवार इस दशक में भगवान के इस सात्म्यभोगप्रदान नामक शुभगुण का अनुभव करते हैं ।

### [भगवान आळवार के सिर पर अवस्थित हुए]

इस दशक के अंत में यह बताया जानेवाला है कि भगवान आळवार के सिर पर विराजकर कृतकृत्य हो गये । इस से स्पष्ट होता है कि उन को वह स्थान बहुत अच्छा लगा । यह बात सर्वथा सत्य और हमारे आचार्यो का परमादरणीय है । यथा

श्रीकूरेश स्वामीजी ने श्रीवरदराज भगवान से प्रश्न किया - '**भक्तानां यद्वपुषि दहरं ..... यश्च मूर्धा शठारेः ...**' इत्यादि (श्रीवरदराजस्तव - ५९) । इस का यह तात्पर्य है - भक्तों का हृदयकमल, (अर्चावतार में) आसन रूपी कमल, वेदों का सिर (वेदांत), श्रीशठकोपसूरि का सिर और हस्तिगिरि का शिखर - इतनी वस्तुओं में कौन-सी आप को सब से अच्छी लग रही है ? श्रीपराशरभट्टार्यस्वामीजी भी श्रीरङ्गराजस्तव में '**वटदलदेवकीजठर .....** ' (पू. ७८) इत्यादि पद्य में कहते हैं कि भगवान वटपत्र, देवकी गर्भ, वेदशिर (वेदांत), लक्ष्मीस्तन, श्रीशठकोपसूरी की वाणी व शरीर और श्रीरंग दिव्यधाम में विराजमान हैं । इन दोनों पद्यों का यह भावार्थ है कि भगवान श्रीशठकोपसूरि के दिव्य सिर पर ऐसे आराम व आनंद से विराजते हैं, जैसे उक्त अन्य अनेक स्थानों पर ।

**इवैयु मवैयु मुवैयुम् इवरु मवरु मुवरुम्**
**एवैयुम् यवरुम् तन्नुळ्ळे आहियु माक्कियुम् काक्कुम्**
**अवैयुळ् तनिमुदल् एम्मान् कण्णपिरान् एन्नमुदम्**
**शुवैयन् तिरुविन् मणाळन् एन्नुडैच्चूळल् उळाने ।। १ ।।**

**(गाथा) - सर्वाचेतनसन्ततिं निकटतोऽदूरेऽपि दूरे स्थिता**
**मेवं चेतनसन्ततिं च सकलां स्वस्मिन् विधायापि यः।**
**सृष्ट्वा चापि पुनस्स रक्षणपरस्सर्वान्तरात्मा स्वयं**
**स्वामी कृष्णविभुर्ममामृतरसश्श्रीशोऽस्ति चाग्रे मम ।। १ ।।**

[प्रतिपदार्थः]

**विवरणम् - नेदीयांसोऽचेतनपदार्थाः, दवीयांसोऽचेतनपदार्थाः, मध्यस्थाः अचेतनपदार्थाः; नेदीयांसः चेतनपदार्थाः, दवीयांसः चेतनपदार्थाः, मध्यस्थाः चेतनपदार्थाः (किं बहुना) सर्वेऽपि च अचेतनपदार्थाः सर्वेऽपि च चेतनपदार्थाः संवर्तसमये यस्य कुक्षिकुहरं प्रविश्य स्थितिं विन्दन्ते, यस्य कुक्षेरथ निस्सरन्ति, एवं नाम सकलजगदवननिपुणः सर्वेषु च तेषु अन्तर्यामी, तेषामद्वितीयकारणभूतश्च सः अस्मत्स्वामी कृष्णप्रभुः परमभोग्यः परमरसिकः लक्ष्मीपतिः मम परिसरमधितिष्ठति।**

[भगवान् भक्ताङ्गसंश्लेषरसरसिकः]

सकलचेतनाचेतनवर्गसृष्टिस्थितिसंहारकौशलेन सकलचराचरान्तःप्रवेशचातुर्या च प्रदर्शितपरत्वसीमा भगवान् तत्प्रत्यनीकं सौलभ्यमपि प्रदर्शयितुकामस्सन् मम सर्वाङ्गसंश्लेषरसं स्वयम् अनुबुभूषुः सात्म्यभोगप्रदानकुतूहलेन परिसरे सञ्चरन् अवतिष्ठते इत्युक्तं भवति । स्वस्य परिसरे तिष्ठन् गोधूलिधूसरितकोमलकेशवेशः पिञ्छावतंसो मृदुललितवेणुनादम् अकरोदिव ; अत एव **कृष्णप्रभुः** इत्युक्तवान् सूरिवरः । अथ च स्वकीयसर्वाङ्गसौन्दर्यलावण्यातिशयं च सन्दर्शितवानिव ; अत एव **परमभोग्यः** इत्युक्तम् । 'स्वामिन् शठकोपमुने ! गोपीजनानामिव भवतोऽपि अङ्गसङ्गमभिरोचये' इत्युक्तवानिव ; अत एव **परम रसिकः** इत्युक्तम् । 'तावद्रासिक्यं भवता कुत्र शिक्षितम्' इति मुनिवरेण पृष्टो लक्ष्मीसकाशेऽभ्यस्तमिति प्रत्युक्तवानिव ; अत एव **लक्ष्मीपतिः** इत्युक्तम् । लक्ष्मीपतित्वादेव परमरसिकोऽभूत् ; परमरसिकत्वादेव लक्ष्मीस्वयंवरपतिः अभूदिति रसपरिपुष्टो भावविशेषोऽवधेयः ।

[प्रतिपदार्थ]

**हिंदी - समीप, दूर और बीच में रहनेवाले अचेतन पदार्थ एवं चेतन पदार्थ, अर्थात् सभी अचेतन और चेतन पदार्थ, प्रलय के समय, जिन के पेट में प्रवेश कर आराम से रहते हैं तथा बाद में जिन के पेट में से बाहर निकलते हैं, वे, समस्त जगत की रक्षा करने में निपुण, उन सभी पदार्थों के अंतर्यामी और अद्वितीय कारण, हमारे स्वामी श्रीकृष्णचंद्र, जो परमभोग्य, परमरसिक तथा लक्ष्मीपति भी हैं, मेरे पास विराजमान हैं ।**

[भगवान भक्तों के अंगसंश्लेषरस के रसिक हैं]

जो भगवान समस्त चेतन और अचेतनों की सृष्टि, रक्षा व संहार करने तथा उन सब के अंतर्यामी होने से अपने परत्व का परिचय देते हैं, वे ही, उस के विपरीत अपने सौलभ्य का भी प्रदर्शन करने, स्वयं मेरा सर्वांग आलिंगन करने तथा मुझे अपने सात्म्यभोग का प्रदान करने की इच्छा करते हुए, मेरे सामने पधारकर चारों ओर घूम रहे हैं - यह है इस गाथा का तात्पर्य । **श्रीकृष्ण चंद्र** कहने से यह अर्थ प्रतीत होता है कि उस समय भगवान गोधूली से अलंकृत केशवाले और वेणुगान करनेवाले श्रीकृष्ण

के रूप में विराजमान थे ; **परमभोग्य** कहने से उन्हों ने आळ्वार को अपने दिव्यमंगलविग्रह का सारा सौंदर्य और लावण्य दिखाया । भगवान ने आळ्वार से कहा होगा कि 'हे शठकोपमुने ! गोपियों की भाँति मैं आप का आलिंगन करना चाहता हूँ, **परम रसिक** कहने का कारण यह हो सकता है । इस के बाद आळ्वार ने पूछा होगा कि आप ने किस से इतनी रसिकता सीखी ? भगवान ने उत्तर दिया होगा कि लक्ष्मीजी से । इस संवाद का सूचक है लक्ष्मीपति शब्द । लक्ष्मीपति होने से भगवान रसिक हुए और रसिक होने से लक्ष्मीपति बने - इन दोनों प्रकारों से इस वाक्य का अर्थ समझा जा सकता है ।

**शूळल् पलपल वल्लान् तोल्लैयङ् कालत्तु उलहै**
**केळल् ओन्नाहि यिडन्द केशवन् एन्नुडै यम्मान्**
**वेळ मरुप्पै योशित्तान् विण्णवर्क्कु एण्णल् अरियान्**
**आळ नेडुङ्कडल् शेर्न्दान् अवन् एन्नरुहल् इलने ।। २ ।।**

**(गाथा) -** **कुर्वंस्तामवतारसन्ततिमपि स्वेच्छाबलात्प्राक्तने**
**काले दिव्यवराहमूर्तिरवनीमुद्धृत्य यः केशवः ।**
**मन्नाथः किल हस्तिशृङ्गभिदसौ देवैरवेद्यस्स्वयं**
**गम्भीरामृतवारिधौ महति यश्शेते स पार्श्वेऽस्ति मे।। २ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - नानाविधावतरणकरणनिपुणः, पुरा महावराहमूर्त्या विरचितवसुधोद्धरणः केशवः, कुवलयापीडगजराजदन्तभञ्जनप्रवीणो, दिविषदां इदमित्थंत्वेन चिन्तयितुमप्यशक्यः गंभीरजलनिधिशयनश्च मम परिबृढो मत्समीपे वलते ।**

**[भगवान् सात्म्यभोगप्रदाननिपुणः]**

भगवतः मुनिवरपरिसरे वर्तनम् अधस्तनगाथायाम् अनुभूतम् । अथात्र सन्निहितप्रदेशे वर्तनम् अनुभूयते । प्रथमतः एव सन्निहितप्रदेशे कुतः नागतः इति अरसिकप्रश्नः मा भूत् । सात्म्यभोगप्रदानमिह विवक्षितम् इत्येतत् सदा हृदि धार्यम् । सकाशे समुपस्थितो भगवान् पञ्चभिर्विशेषणैः विशिष्यते । नानाविधावतरणकरणनिपुणः इति प्रथमं विशेषणम् । मूलगाथायां

तावत् अवतरणशब्दप्रयोगो नास्ति, अनेकसदुपायज्ञः इत्येव तु वर्तते । चेतनानां वशीकरणोपायः **'अजायमानो बहुधा विजायते'** (पु.सू.२१) इत्याम्नातम् अवतरणमेव इति आचार्याणाम् उदारं हृदयम् । वस्तुतो भगवतोऽवतारविरहे सति चेतनानां भगवति व्युत्पत्तिरेव हि न स्यात् ; शास्त्राणां च सर्वथा निर्विषयतैव स्यात् । अत एवानुगृहीतं श्रीवत्साङ्कमिश्रैः (वरदराजस्तवे ६७) **'वरद ! यदि न भुव्यवातरिष्यः श्रुतिविहितास्त्वदुपासनार्चनाद्याः । करणपथविदूरगे सति त्वयि अविषयतानिकृताः किलाभविष्यन्'** ।। इति । 'नानाविधावतरणकर्ता' इत्यनभिधाय - करणनिपुणः इति कथितम् ; किं नामात्र नैपुण्यमिति पृच्छा जायेत ; कर्मवश्यानाम् अस्मादृशां धियोऽपि अगोचरान् खलु अवतारान् कृपावश्यस्सन् स करोति ; तदिदम् अतिमात्रनैपुण्यनिबन्धनमिति मुनिवरः आशेते । दण्डकारण्ये कुब्जाम्रतयाऽवततार इत्यैतिहासिकाः । **'पिता पुत्रेण पितृमान् योनियोनौ'** इति श्रावयन्ती श्रुतिः **योनियोनौ** इत्यनेन यमर्थं विवक्षति स्म, तमेवार्थं हृदि निधाय **निपुणः** इत्याह मुनिवरः । तत्तद्योन्यनुरूपजन्मग्रहणं यत् तदेव नैपुण्यं नाम । तादृशेषु अवतारेषु अन्यतमम् अनुभवति **महावराहमूर्त्या** इत्यादिना । इतरसर्वावतारापेक्षया श्रीवराहावतारे भूरितमोऽभिनिवेशो मुनिवरस्य अस्य ; अत एव प्रथमप्रबन्धभूततिरुविरुत्तावसाने चरमप्रबन्धभूतैतत्सहस्रगीत्यवसाने च सोऽयमेव अवतारोऽनुसंहितोऽभूत् । ज्ञानप्रदानोपकारकः **ज्ञानप्पिरान्** इत्येव संज्ञा वराहभगवतः सूरिवरकृता । **केशवः** प्रशस्तकेशः इत्यर्थः। वराहशुभविग्रहस्थ वेदगन्धिकेशबृन्दानुभवः इत्याचार्याः । कुवलयापीडदन्तभञ्जनानुसन्धानं मत्तगजरूप स्वकीयेन्द्रियावलेपलोपनस्मारकम् । **दिविषदां इदमित्थंत्वेन चिन्तयितुमप्यशक्यः** इत्यनेन अस्मादृशां का कथा इत्युक्तं भवति । दिविषदामपि इत्युक्त्या अस्मादृशां परमभक्तानां सुसुखं चिन्तयितुं शक्यः इत्यर्थोऽपि स्फोरितो भवति । आर्तनादश्रवणसौकर्याय पारावारविरचितशयनो भगवान् मदार्तिहरणाय मम सन्निहितोऽभूत् ।

**[प्रतिपदार्थ]**

**हिंदी - नाना अवतार करने में निपुण, पूर्वकाल में महावराह रूप लेकर भूमि का उद्धार करनेवाले, केशवबिरुदधारी, कुवलयापीड नामक मत्तगज के दंत तोडने में समर्थ, देवों से 'इतने हैं, ऐसे हैं' करके नापने अशक्य और विशाल व गंभीर सागर पर शयन करनेवाले मेरे स्वामी मेरे समीप ही विराज रहे हैं ।**

**[भगवान सात्म्यभोग प्रदान में निपुण हैं]**

पूर्वगाथा में भगवान आळवार के सामने प्रकट होकर, दूर से उन के चारों ओर घूमते रहे, वे अब उन के बिलकुल समीप पधार गये । अर्थात् दूर से दर्शन करनेवाले आळवार ने जब उस दर्शन का सहन किया, तब भगवान आगे बढकर उन के समीप ही आ गये । ऐसे भगवान के चार-पाँच विशेषण दिये जा रहे हैं । इन में पहला विशेषण है - **नाना अवतार करने में निपुण** । यद्यपि मूलगाथा में साक्षात् अवतार शब्द प्रयुक्त नहीं ; किंतु इतना ही कहा गया है कि **अनेकसदुपायज्ञ** । उदारचित्त आचार्यों का यह अभिप्राय है कि चेतनों को वश में करने का उपाय अवतार ही है, जिस की प्रशंसा **'अजायमानो बहुधा विजायते'** (पु.सू.२१) इत्यादि वेदवाक्यों में भी की गई है । यदि भगवान का कभी अवतार ही न हुआ होता, तो चेतनों को उन का ख्याल न होता और सभी शास्त्र एकदम निर्विषय होते । अत एव श्रीकूरेशस्वामीजी ने श्रीवरदराजस्तव में अनुगृहीत किया - **'वरद यदि न भुव्यवातरिष्यः'** (६७) इत्यादि । इस का यह तात्पर्य है - हे वरदराज भगवन ! यदि आप इस धरातल पर अवतार नहीं किये होते और अवाङ्मनसगोचर ही रहे होते, तो आप के उपासन अर्चन इत्यादि सभी वेदोक्त काम, विषय के अलाभ से, अप्रामाणिक अथवा व्यर्थ हुए होते । अर्थात् वाणी व मन के भी परे रहनेवाले का अर्चन इत्यादि कैसे किये जा सकते ? अतः ये सभी अर्थशून्य हुए होते । अवतार कर्ता कहने की जगह अवतार करने में निपुण कहनेवाले आळवार अवतार में भी भगवान का चातुर्य देख रहे हैं । कर्मवश्य हमारी बुद्धि के भी अगोचर कृपामूलक अवतार लेना ही वह चातुर्य है । इतिहास बताता है कि उन्हों ने दंडकारण्य में कुब्जाम्र का अवतार लिया था । वेदपुरुष ने भी कहा - **'पिता पुत्रेण पितृमान् योनियोनौ'** (अर्थात् भगवान सब के पिता होते हुए ही अनेक योनियों में अवतार लेते हुए अपने पुत्र किसी चेतन को अपने पिता बना देते हैं) ऐसे अवतारों में से एक अवतार का अनुभव किया जा रहा है **महावराह** इत्यादि से । मालूम पडता है कि दूसरे अवतारों की अपेक्षा श्रीवराह अवतार ही श्रीशठकोप स्वामीजी को अत्यंत प्रिय है । अत एव उन्हों ने प्रथम प्रबंध **तिरुविरुत्तम्** के तथा अंतिम प्रबंध **तिरुवाय्मोळि** के अंत में इस की स्तुति की है ; और इस का **'ज्ञानप्पिरान'** (ज्ञान के उपदेशक) नाम भी रखा । **केशव** शब्द का अर्थ है श्रेष्ठ केश से विभूषित । आचार्यों का अभिप्राय है कि यह शब्द श्रीवराह भगवान के दिव्य विग्रहस्थित वेदगंधि केशों का वर्णन करता है । कुवलयापीड

वृत्तांत के कथन से आळ्वार मत्तगज की भाँति प्रबल अपनी इंद्रियों का गर्व दूर करनेवाले भगवान के सामर्थ्य की सूचना करते हैं । **देवों से नापने अशक्य** कहने का यह भाव है जब देव ही भगवान का वैभव नाप नहीं सकते, तो हमारे सरीक अज्ञों की बात ही क्या ? अथवा भगवान बेशक देवों से नापने अशक्य भी हों, हमारे जैसे भक्तों के लिए सुलभ ही होते हैं । देवों का आर्तनाद सुनने के लिए सागर में शयन करनेवाले भगवान मेरा दुख दूर करने अब मेरे समीप पधारे हैं ।

**अरुह लिलाय पेरुञ्जीर् अमरर्हळ् आदि मुदल्वन्**
**करुहिय नीलनन्मेनि वण्णन् शेन्दामरै क्कण्णन्**
**पोरुशिरैप्पुळ्ळु वन्देरुम् पूमहळार् तनिक्केळ्वन्**
**ओरुगतियिन् शुवै तन्दिट्टु ओळिविलन् एन्नोडु उडने ।।३।।**

**(गाथा) -** **नित्यानन्दसुनिर्मलात्मविभवस्सूरीन्द्रनाथस्स्वयं**
**चादिर्नीलमणिप्रभस्सुरुचिराम्भोजाक्षियुग्मो हरिः ।**
**दीव्यत्पक्षगरुत्मदाश्रय इह श्रीदेव्युपेतस्स्वयं**
**संश्लिष्याद्य मया सहाद्भुतरसं दत्वा न मान्तु त्यजेत् ।।३।।**

[प्रतिपदार्थः]

**विवरणम् - कदापि वैकल्यमनधिगच्छद्भिः कल्याणगुणैर्विभूषितः नित्यसूरीणां निर्वाहकः नीलमणिनिभविलक्षणविग्रहाभिरामः सरसिजोपमलोचनः पक्षिराजाधिरोहणेन प्रमोदमानो भूदेवीनाथो मया सहावतिष्ठमानो भगवान् कतिपयविधान् अनुभवान् प्रदिश्य न तृप्यति, अपितु सकलविधानपि अनुभवान् अनुगृह्णाति ।।**

समीपवर्तनं विहाय साहित्यम् अन्वविन्दत इत्युच्यतेऽत्र । **अविकलशुभगुणः** इति प्रथमविशेषणम् । गुणानां वैकल्यं नाम तेषां केषुचित् प्रसरः केषुचित् अप्रसरश्च; तद्राहित्यकथनेन नित्यसिद्धशुभगुणत्वम् उक्तं भवति । ननु सर्वेष्वपि अधिकारिषु भगवद्गुणाः प्रसरन्ति इति चेत् अङ्गीक्रियेत, तर्हि **'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**

**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु** ।। (भ.गी.१६-१९) ....... **कल्पकोटिशतेनापि न क्षमामि वसुन्धरे'** (वराह.पु.) इत्यादिनिग्रहवचसां कथम् उत्थितिरिति शङ्क्येत । अपत्येषु सदा वत्सलः पिता हितपरतया कदाचित् निगृह्णाति इत्येतावता किं तस्य प्रेमभङ्गः - शङ्क्येत इति समाधेयम् । **नित्यसूरीणां निर्वाहकः** तत्तादृशोऽयमिदानीं हन्त ! मम निर्वाह्यो बुभूषति इति विस्मयोक्तिः । भूपतिस्तावत् न्यायाधिकरणे निर्वाहको भवन्नपि अवरोधे निर्वाह्यो भवतीति किमत्र चित्रम् । **नीलमणिनिभविलक्षणविग्रहाभिरामः 'पश्यत्यचक्षुस्स शृणोत्यकर्णः, अपाणिपादो जवनो ग्रहीता'** (श्वे.उ.३-१९) इत्यादिः औपनिषदवाक्यराशिः आस्तां नाम दूरे; परमरसिकस्स भगवान् माम् अनुभोक्तुम् **'इच्छागृहीताभिमतोरुदेहः'** (वि.पु.६-५-८४) इति पुराणरत्नोक्तरीत्या दिव्यसुन्दरविग्रहं परिगृह्य खलु समायातः इह इत्युच्यते इव । सरसिजोपमलोचनः **'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः'** (महा.भा.शां.प.३५८-७३) इत्युक्तरीत्या येन लोचनेन पुरा मयि सत्ताम् उदपादयत् - तद्विलोचनम् असकृत् प्रदर्शयति इत्युच्यते इव। **पक्षिराजाधिरोहणेनेत्यादि 'दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः। उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रि-सम्मर्दकिणाङ्कशोभिना'**।। (स्तो.र.४१) इति यामुनार्यसूक्तिरीत्या गरुत्मन्तमिव मामपि विषयीकर्तुम् उद्युक्तः इति विवक्षितम् । **भूदेवीनाथः** रथाङ्गपाणिरिति क्वचित्, पाञ्चजन्यपाणिरिति क्वचिच्च कथनेऽपि यथा ह्युभयपरिकर्मितपाणित्वम् उक्तप्रायम्, तथैव श्रीदेवीवल्लभः इति क्वचित्, भूदेवीवल्लभः इति क्वचिच्च कथनेऽपि उभयमहिषीवाल्लभ्यम् उक्तप्रायं वेदितव्यम् । श्रीभूदेव्योरिव मय्यपि समुत्सुकः इत्युक्तं भवति । एतादृशोऽयं भगवान् परिसरवर्तनं समीपवर्तनं च विसृज्य अधुना श्रीभूभ्यां सहेव मया सहापि अवतिष्ठते ; न केवलमेतावदेव ; **कतिपयविधान् अनुभवान् प्रदिश्य न तृप्यति, अपि तु सर्वविधानपि अनुभवाननुगृह्णाति** पुत्रे पितुः कार्यमन्यत्, मातुः कार्यमन्यत् ; कलत्रे पत्युः कार्यमन्यत्, अपत्यानां कार्यमन्यत्, इत्येवंरीत्या व्यक्तिभेदेन कार्यभेदव्यवस्था हि लोके दृश्यते ; नैवं काचिदस्ति व्यवस्था भगवतो मयि ; सर्वविधानुभवजरसप्रवाहप्रदाता भवति इत्युक्तं भवति ।। **'यदा यदा हि कौसल्या दासीवच्च सखीव च । भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति'** ।। (रामा.अ.कां.१२-६८) इति श्रीरामायणश्लोकरत्नमिह भाव्यम् ।।

**हिंदी - कभी कम न होनेवाले कल्याणगुणों से विभूषित, नित्यसूरियों के नाथ, नीलमणि के समान विलक्षण दिव्यमंगल विग्रहवाले, कमलनयन, पक्षिराज**

**गरुडजी पर सवार होकर आनंदित होनेवाले, भूदेवी के नाथ, और मेरे साथ विराजमान भगवान हमें कतिपय प्रकार के भोगमात्र देकर तृप्त नहीं होंगे, किंतु सकलविध भोगों का भी परिपूर्ण प्रदान करेंगे ।।**

इस गाथा में कहा जाता है कि भगवान आळ्वार के और भी समीप पधारकर उन के साथ एकासनासीन हो गये। उन का पहला विशेषण है । **कम न होनेवाले कल्याणगुणों से विभूषित** - कहने का यह तात्पर्य है कि भगवद्गुणों में यह न्यूनता नहीं रहती कि किसी के विषय में प्रकाशित होना और दूसरे किसी के विषय में प्रकाशित न होना ; अर्थात् भगवान के कृपादि गुण विना संकोच सब के विषय में प्रकाशित होते हैं । इस पर यह शंका हो सकती है कि यदि भगवान सब पर कृपा ही करनेवाले हों, तो वे दुष्टों को कैसे दंड देते हैं ; यथा गीताजी में स्वयं उन्हों ने ही शासन किया **'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु'** ।। (भ.गी.१६-१९) इत्यादि । जैसे अपराध करनेवाले अपने पुत्र को कदाचित् दंड देने से पिता के प्रेम में कभी कमी न मानी जायगी, ठीक इसी प्रकार पापी का पाप मिटाने के लिए और उसे सन्मार्ग में लाने के लिए उसे शिक्षा देनेवाले भगवान को भी उस अपराधी पर कृपालु ही समझना चाहिए । **नित्य सूरियों के नाथ** होते हुए भी भगवान अब अपने को मेरे संश्लेष से सनाथ मान रहे हैं ; ओह ! यह कैसा गुण है ! अपने आस्थान-मंटप में सब का स्वामी होकर, अधिकार चलाता हुआ विराजनेवाला राजधिराज भी अंतःपुर में अपनी प्रियमहिषी से वही व्यवहार नहीं करता, परंतु स्वयं उस का आज्ञाधारक बनता है । इसी न्याय से नित्यसूरिनाथ भगवान भी अब आळ्वार के पराधीन बन गये हैं । **नीलमणि के समान विलक्षण दिव्यमंगल विग्रहवाले** - कितने ही लोग **'पश्यत्यचक्षुः'** (श्वे.उ.३-१९) (भगवान नेत्रहीन होते हुए ही सब को देखते हैं) इत्यादि उपनिषद्वाक्यों के अनुसार भगवान को इंद्रियशून्य, अवयवशून्य, निराकार इत्यादि मानते होंगे । परंतु श्रीपराशरमहर्षि ने श्री विष्णुपुराण में कहा कि 'भगवान अपनी इच्छा से अपने इष्ट दिव्यमंगल विग्रहों का धारण करते हैं **(इच्छागृहीताभिमतोरुदेहः)'** । (वि.पु.६-५-८२) एतदनुसार भगवान के उन नेत्रों की प्रशंसा करते हैं जिन्हों ने अपने पर पहले पहल कटाक्ष पात किया था और जो यहाँ भी ऐसे कर रहे हैं । इन का वैभव शास्त्रों में एवं उपवर्णित है - **'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः'** ।। (महा.भा.शां.प.३५८-७३) अर्थात् जन्म

लेने के समय जिस मानव पर भगवान का कटाक्ष पडेगा, वही सात्विक और मोक्षमार्ग का चिंतक होगा । **गरुडजी पर सवार होकर** कहने का यह भाव है कि भगवान जैसे **'दासस्सखा'** (स्तो.र.४१) इत्यादि स्तोत्ररत्नोक्त प्रकार गरुडजी से नानाविध सेवा सकारते हुए उन को अनुगृहीत करते हैं, ठीक इसी प्रकार अब आळवार को भी अनुगृहीत करना चाहते हैं । **भूदेवी के नाथ** कहने का तात्पर्य है - श्रीदेवी व भूदेवी के सहित विराजमान । अर्थात् इन दो देवियों में से एक का नाम लेने पर भी दोनों को समझना चाहिए । जैसे भगवान को कदाचित् शंखधारी कहें अथवा कदाचित् चक्रधारी कहें, तो दोनों समय भी हम भगवान को शंखचक्रधारी ही समझते हैं ; इसी प्रकार यहां भी समझना चाहिए । तथाच आळवार कहना चाहते हैं कि भगवान श्रीदेवी व भूदेवी की भाँति मेरे साथ भी एकासन पर विराजमान हैं । इतना ही नहीं, किंतु **कतिपय प्रकार के भोगमात्र देकर तृप्त नहीं होंगे** इत्यादि । यह भाव है - पुत्र के प्रति माता का कार्य एक प्रकार का है ; पिता का तो दूसरे प्रकार का होता है । एवं स्त्री के विषय में पति के कार्य से पुत्रों का कार्य विलक्षण होता है । इस प्रकार लोकव्यवहार में एकैक व्यक्ति का भी काम अलग अलग होता है ; एक ही व्यक्ति का दो प्रकार के काम करना असंभव है । परंतु भगवान के बारे में यह नियम लगता नहीं । **'माता पिता भ्राता निवासश्शरणं सुहृत् गतिर्नारायणः'** (सुबा.उ.खं.६) इत्याद्युपनिषद के अनुसार सकलविध बांधव होनेवाले भगवान, अब आळवार को एक दो प्रकारों का अनुभवरस मात्र देने का विचार नहीं कर रहे हैं, वरन् समस्तविध अनुभव देकर परिपूर्ण आनंद का प्रदान करने तैयार विराज रहे हैं । जैसे कि दशरथ चक्रवर्ती कौसल्या देवी की प्रशंसा करते हैं - **'यदा यदा हि कौसल्या दासीवच्च सखीव च । भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति'** ।। (रामा.अ.कां.१२-६८) यह भाव है - कौसल्या देवी नौकरानी, सखी, पत्नी, बहन और माता की भाँति दशरथ की सेवा करती थी ; अर्थात् सभी प्रकारों की सेवा करती थी ।।

**उडनमर् कादल् महळिर् तिरुमहळ् मणमहळ् आयर्**
**मडमहळ् एन्निवर् मूवर् आळुम् उलहमुम् मून्रे**
**उडनवै योक्क विळुङ्गि आलिलै च्चेर्न्दवन् एम्मान्**
**कडल्मलि मायप्पेरुमान् कण्णन् एन्नोक्कलैयाने ।। ४ ।।**

**(गाथा) - संश्लेषैकरसाश्च यस्य कमला भूमिश्च नीळा स्वयं**
**यस्यासीदुदरे जगत्त्रयमपि ! स्वामी शयानोऽम्बुधौ ।**
**मायी यो वटवृक्षपत्रशयितः कृष्णः प्रभुश्श्रीधर-**
**स्सोऽयं भाति हि पार्श्वतो मम तनौ नित्यं यशोदासुतः ।। ४ ।।**

**विवरणम् - श्रीदेवी भूदेवी नीलादेवी च नित्ययुक्ताः प्राणवल्लभास्तिस्रः । स्वकीयाधिराज्यगोचरभूतं च त्रैलोक्यमेतदखिलम् । तथा च एवंविधप्रभावशाली, त्रिलोकीमपि युगपत् आस्वाद्य वटदलमधिशयितः अस्मत्स्वामी समुद्राभ्यधिकाद्भुत-चेष्टितकारी च कृष्णो मम कटितटमध्यास्ते ।।**

**[शठकोपमुनीन्द्रस्य कटितटे कृष्णस्य उपस्थितिः]**

भगवान् व्रजवासावसरे यशोदायाः गोपीनां च कटितटमधिष्ठाय तासां यादृशान् अनुभवान् अदिशत् तादृशान् ममापि दित्सुः मम कटितटीमध्यास्ते इत्युच्यतेऽत्र । (श्रीगुणरत्नकोशे-२७) श्रीपराशरभट्टार्याः प्राहुः - **'देवि ! त्वामनु नीलया सह मही देव्यस्सहस्रं तथा याभिस्त्वं स्तनबाहुदृष्टिभिरिव स्वाभिः प्रियं श्लाघसे'** इति । एतेन सहस्रसंख्यासु वल्लभासु मध्ये श्रीभूनीलानां प्राधान्यं प्रतिपद्येत । **'श्रीभूनीलादेव्यो नित्ययुक्ताः प्राणवल्लभास्तिस्रः'** इति कथनेन परस्सहस्रदेवीवैशिष्ट्यम् उक्तप्रायम् । एतासां दिव्यमहिषीणाम् उच्चावचकैङ्कर्यवृत्तिषु अन्वयः। भगवान् राघवो यदा समुद्रशरणागतिच्छलेन पयोधिपुलिनमधिशिश्ये, तदात्वे उपधानीकृतं तदीयबाहुम् उपवर्णयन् वाल्मीकिर्मुनिवरः **'भुजैः परमनारीणामभिमृष्टमनेकधा'** (रामा.यु.कां.२१-३) इत्याचचक्षे । एकदारव्रतस्य राघवस्य बाहुः कथं परमनारीणां भुजैः अनेकधाऽभिमृष्टो भवितुमर्हति इत्याशङ्कां व्याख्यातारः प्रशमयन्ति-श्रीमति वैकुण्ठे तथात्वोपपादनेन । एवं च शठकोपमुनीन्द्रः स्वसन्निहितस्य भगवतोः विभूतिविस्तारप्रतिपादनतत्परायाम् अस्यां गाथायां देवीवर्गवैशिष्ट्यात्मकं परत्वं प्रथमतः प्रतिपादयति । श्रीभूनीलासनाथः इति विशेषणतया निर्देशं विहाय **'...प्राणवल्लभास्तिस्रः'** इति, स्वकीयं राज्यं च त्रैलोक्यमेतदखिलं इति च वाक्यभेदमाकलय्य यत्कथितमिह तदिदम् अनुभवरासिक्यव्यञ्जकम् । 'अस्य भूयस्यो देव्यः सन्ति, परिपाल्यं वस्तु च त्रैलोक्यम्' इति कथनम् अनुभवप्रणाली खलु ! एतादृशो हि भगवान् देवीरपि विसृज्य मामुपभोक्तुमुपाययौ ; त्रैलोक्येऽपि मामेकमेव

परिपाल्यम् अभिमन्यते हन्त ! इति विस्मयस्तिमितः इव भवति मुनिः । कृष्णावतारे 'नप्पिन्नैप्पिराट्टि' इति या खलु गोपी कृष्णस्य प्राणवल्लभा आसीत् । या च दिव्यसूरिभिः असकृत् संकीर्त्यते, सा नीलादेवी एवेति समुद्बोधयितुमत्र मूलगाथायाम् नीला इति नाम विन्यासमकृत्वा 'गोपाङ्गना' (आयर्मडमहळ्) इत्यनेनैव नाम्ना सा निर्दिष्टा । एवमत्र एकत्र केवलं न ; यत्र यत्र (दिव्यप्रबन्धेषु) तिस्रो देव्यो निर्देष्टव्याः इष्यन्ते तत्र सर्वत्र श्रीभूशब्दाभ्यां सह नप्पिन्नैप्पिराट्टिबोधकगोपाङ्गनाशब्दः एव संयोज्यते । अत एव आचार्यैः **'नीलातुङ्गस्तनगिरितटीसुप्तम्'** (तिरुप्पावै तनियन्) इत्यादिषु 'नप्पिनै' विवक्षया नीलाशब्दः प्रायोजीति प्रतिपत्तव्यम् । एवमस्मदीयेन विवरणेन 'नप्पिनैप्पिराट्टि' इति द्राविडगिरा व्यपदिष्टां गोपीं केन प्रमाणेन गुरुचरणाः नीलानाम्ना व्यपदिशन्ति' इति बहूनामाशङ्का परिहृता भवति इति बोध्यम् । दिव्यसूरिसूक्तिरेवात्र प्रमाणमित्युक्तं भवति ।।

**त्रिलोकीमपि युगपदास्वाद्य** इत्यादिकमपि भगवता स्वस्मिन् प्रदर्श्यमानस्य सौशील्यस्य प्रतिकोटिभूतगुणकथनमिति ध्येयम् । **समुद्राभ्यधिकाद्भुतचेष्टितकारी** मूलगाथासन्निवेशस्तावत् **'समुद्रशायी अद्भुतचेष्टितकारी'** इत्यपि अनुवादं सहते । आचार्यास्तु उभयधाऽपि व्याचक्षते । आश्चर्यचेष्टितकारित्वं कृष्णावतारकालिकं नात्र विवक्षितम् ; अपि तु प्रकृते मुनिवरेण स्वेन अनुभूयमानमेव उच्यते इत्यप्यनुगृह्णन्ति आचार्याः । श्रीशठकोपमुनीन्द्रसविधे भगवता कृष्णेन प्रदर्श्यमानम् आश्चर्यचेष्टितं किं नामेति पृष्टे कोन्वत्र प्रतिब्रूताम् ? मुमुक्षुप्पडि रहस्ये मूलमन्त्रस्थ नमःपदार्थविवरणावसरे ''भोगदशायां सर्वेश्वरे चेतनस्य स्वरूपं नाशयितुम् उद्युक्ते सति सर्वात्मना तदप्रतिषेधः एव पारतन्त्र्यपरमकाष्ठे' ति यदन्वग्राहि लोकाचार्यैः तदेवात्र स्मृतिपथं नेतव्यम् । ज्ञानिनामग्रेसरं चेतनं भुञ्जानः परमरसिकः सर्वेश्वरः किं किं कुर्वीत इति को नु वेद । मुनिवरस्य कटितटे निषण्णस्सन् स किं किमद्भुतम् आततान इति सत्यं तावेव प्रष्टव्यौ ।।

**[प्रतिपदार्थ]**

**हिंदी - श्रीदेवी, भूदेवी और नीलादेवी, ये तीनों इन के साथ ही विराजमान प्रिय पत्नियाँ हैं ; इन के शासन के अधीन लोक भी तीन होते हैं ; तथाच ऐसे वैभवोपेत, तीनों लोकों को एक साथ निगलकर वटपत्र पर शयन करनेवाले हमारे नाथ, समुद्र से भी अधिक अद्भुत चेष्टित करनेवाले श्री कृष्ण बगल पर विराजमान हैं ।**

**[शठकोपमुनीन्द्र का बगल मे कृष्ण की उपस्थिति]**

इस गाथा में आळवार कहते हैं कि श्रीकृष्ण मेरे बगल पर विराजकर मुझे ऐसा भोग देना चाह रहे हैं जैसा उन्हों ने व्रज में यशोदाजी और गोपियों को उन के बगल पर बैठकर दिया था । (श्रीगुणरत्नकोश में - २७) श्रीपराशरभट्टार्यस्वामीजी कहते हैं - **'देवि त्वामनु नीलया सह मही देव्यस्सहस्रं तथा......'** । (अर्थात् हे श्रीदेवि ! भूदेवी नीला देवी इत्यादि हजारों पटरानियाँ श्री वैकुंठलोक में विराज रही हैं जो सभी आप के अंगोंपाग के सदृश रहती हैं ।) इस से विदित होता है कि इन असंख्य महिषियों में श्री-भू-नीला देवियाँ प्रधान हैं । अतः यहाँ इन का नाम लेना सभी देवियों की ओर संकेत करना है । भगवान की नानाविध सेवा करना इन का काम है । भगवान ने जब श्रीरामचंद्रजी के रूप में अवतार लेकर लंका पहुंचने का मार्ग माँगते हुए समुद्र की शरणागति की, तब वे अपने भुज को ही तकिया बनाकर तट पर सो गये न? उस भुज का वर्णन करनेवाले वाल्मीकीजी कहते हैं **'भुजैः परमनारीणामभिमृष्टमनेकधा'** (रामा.यु.कां.२१-३) (अर्थात् परमनारियों के भुजों से बहुशः दबाया गया था श्रीरामचंद्रजी का वह भुज) यहां पर यह शंका होती है कि एकदारव्रतत्वेन प्रसिद्ध श्री रामचंद्र भगवान के भुज ने जब एकमात्र सीतादेवी को छोडकर दूसरी किसी स्त्री का हस्तस्पर्श नहीं पाया था, तब उस को कैसे परम नारियों के हाथों दबाया गया कहने में आया । अभिज्ञ व्याख्याकार इस का यह समाधान देते हैं - 'यहां पर वाल्मीकीजी परमनारी शब्द से श्रीभूनीलादेवियों की ओर संकेत कर रहें हैं, जो श्रीरामावतार में नहीं, किंतु परमपद में हमेशा भगवान के हाथ पग दबाती रहती हैं । तथाच यह विशेषण श्री रामचंद्रजी के नारायणत्व का सूचक है । 'तथाच भगवान की विभूतियों का वर्णन करनेवाली इस गाथा में आळवार प्रथमतः दिव्यमहिषियों का कीर्तन करते हुए अर्थात् भगवान के परत्व की सूचना भी कर रहे हैं । इस पर यदि पूछा जाय - 'यदि भगवान की विभूति का सविस्तर वर्णन करना ही आळवार का उद्देश्य हो, तो वे एक ही वाक्य में सब को मिलाकर क्यों नहीं कह देते कि भगवान तीन देवियों व तीन लोकों के नाथ हैं' ? इस का प्रत्युत्तर यही है कि ऐसा कहना अरसिकवचन होगा । देवियों का काम अलग है और लोकों का अलग । अतः 'इन के अनंत देवियाँ हैं और तीन परिपालनीय लोक भी हैं' कहना ही उचिततर है । अत एव 'श्रीभूनीलानाथ' कहने के बदले 'श्रीभूनीलादेवियाँ

इन की प्रियपत्नियाँ हैं' कहा गया । अब आळ्वार आश्चर्य के साथ कह रहे हैं कि प्रकृत में भगवान इन प्रिय महिषियों की भी उपेक्षा करके मेरा अनुभव, और तीनों लोक भूलकर मुझे एक का परिपालन करना चाहते हैं । मूल गाथा में 'नीला' नाम नहीं कहा गया, किंतु उस के स्थान (आयर् महळ्) अथवा गोपांगना कहा गया है । गोपांगना तो श्रीकृष्णावतार में व्रज में भगवान की प्रियपत्नी 'नप्पिन्नैप्पिराट्टी' नामवाली गोपी हैं, जिन का वर्णन दिव्यप्रबंधों में वारंवार किया जाता है । यह देवी नीलादेवी का अवतार मानी जाती हैं । यह अर्थ मन में रखकर सभी आळ्वार तीनों देवियों के नाम लेने के समय नीलादेवी को 'गोपांगना' ही कहते हैं । अत एव **तिरुप्पावै** के तनियन् पद्य में नप्पिन्नैदेवी का नाम 'नीला' बताया गया - **'नीलातुङ्गस्तनगिरितटी'** इत्यादि । इस से यह शंका भी निरस्त हो जाती है - 'कौन-से प्रमाण के आधार पर उक्त पद्य में श्रीभट्टर स्वामीजी ने नप्पिन्नैप्पिराट्टी को 'नीला' कहा'? इस का यह समाधान कहा जाता है कि आळ्वारों के दिव्यप्रबंधों में नीलादेवी कहने की जगह गोपांगना कहकर नप्पिन्नै का ही नाम लिया गया है ; अतः आळ्वारों के अभिप्राय से नप्पिन्नै और नीलादेवी, ये दोनों एक ही हैं ।

**तीनों लोकों को एक साथ निगल कर** इत्यादि भी भगवान के परत्व का ही वर्णन है । तथाच इतने प्रकारों से भगवान के परत्व का वर्णन करनेवाले आळ्वार का यह भाव है कि भगवान अपना यह परत्व भूलकर अब मुझ से मिल रहे हैं । **समुद्र से भी अधिक अद्भुत चेष्टित करनेवाले -** मूल गाथा का यह भी अर्थ आचार्यभिमत है कि भगवान समुद्र पर शयन करते हैं और अद्भुत चेष्टाकारी होते हैं । आचार्यों का यह भी अभिप्राय है कि यहां पर आळ्वार, अद्भुतचेष्टा शब्द से भगवान के श्री कृष्णावतार समय की नहीं, बल्कि अब अपने को प्रदर्शित चेष्टाओं की ओर संकेत कर रहे हैं । यह मत पूछें कि भगवान अब ऐसी कौन-सी चेष्टा दिखा रहे हैं । अपने अत्यर्थप्रिय ज्ञानी को प्राप्त कर, उन का अनुभव करनेवाले परमरसिक भगवान क्या करते हैं और क्या नहीं करते, इस विषय पर हम क्या कह सकते हैं ? यह तो उन दोनों को ही विदित होगा । मुमुक्षुप्पडि ग्रंथ में, श्रीमंत्र के मध्यम पद 'नमः' का अर्थविवरण करते हुए श्रीलोकाचार्य स्वामीजी ने भी इतना ही कहा - 'भोगदशा में (अर्थात् जब कि भगवान मुक्त पुरुष का अनुभव करते हैं), जब भगवान इस चेतन का स्वरूपनाश करने लगेंगे, तब किसी प्रकार से उसे नहीं रोकना, यही सर्वात्मना पारतंत्र्य का काम है' ।।

**ओक्कलै वैत्तु मुलैप्पाल् उण्णेन्नु तन्दिड वाङ्गि**
**चेक्कम् शेह वन्नु अवळपाल् उयिर् शेह वुण्ड पेरुमान्**
**नक्क पिरानोडु अयनुम् इन्दिरनुम् मुदलाह**
**ओक्कवुम् तोत्तिय वीशन् मायन् एन्नेञ्जिल् उळाने ।।५।।**

**(गाथा) - रुद्रश्चापि चतुर्मुखश्शतमुखस्सर्वेऽपि चोत्पादिता**
**येनेशेन स एव मायिहृदयां तां स्तन्यदां चावधीत् ।**
**तद्गुर्भावहरो हरिर्विषमयं स्तन्यं निपीय स्वयं**
**स्वामी चाद्भुतवैभवस्स भगवानास्ते हृदब्जे मम।।५।।**

[प्रतिपदार्थः]

**विवरणम् - कटितटे निषाद्य 'स्तन्यं पिबे' इत्युक्त्वा स्तन्यं पाययन्त्याः पूतनायाः मनोरथं विपर्यस्तं विरचय्य स्तन्येन सह तस्याः प्राणानपि आस्वादितवान् प्रभुः, पशुपति-प्रजापति-शचीपतिप्रभृतीन् अखिलानपि प्रादुर्भावितवान् आश्चर्यगुणचेष्टितवान् ईशो मम हृदयप्रदेशमधितिष्ठति ।।**

**[श्रीशठकोपसूरेः वक्षस्थलावगाहनम्]**

कटितटात् उरस्थलीमवजगाहे भगवान् इत्युच्यतेऽनया गाथया । यद्यपि हृदयस्थः इति वर्तते, तथाऽपि शरीरावयवसंदोहव्यासङ्गकथनप्रकरणेऽस्मिन् वक्षस्थलाधिरोहणविवक्षणमेव युक्तं प्रतिपत्तुम् । हृदयस्थलमेव हि उरस्स्थलम् । गाथायाः अस्याः पूर्वार्धे पूतनावधवृत्तान्तः अनुसन्धीयते । मथुरायां कंसप्रक्लृप्तकारागृहे अवतीर्णः भगवान् वासुदेवः तदानीमेव निशीथे वसुदेवेन व्रजं नीतः इति ज्ञातवान् कंसः **'मनीषितं कैतवमानुषस्य श्रुत्वा भयक्रोधपरिप्लुतात्मा । कंसश्चिरं प्राग्भवकालनेमिश्चिन्तार्णवे मग्न इवावतस्थे' ।।** (याद.४-१) इत्युक्तरीत्या इतिकर्तव्यतामुग्धः चिरं स्थित्वा, अथ **'स दुर्दमानासुरसत्वभेदान् नेता समाहूय नृशंसचेताः । प्रस्थापयामास परैरधृष्यं नन्दास्पदं नाथविहारगुप्तम् ।।** (याद.४-२) इत्युक्तरीत्या व्रजे वर्धमानस्य वासुदेवशिशोर्जिघांसया भूयसः आसुरप्रकृतीन् प्राहिणोत् गोकुलं प्रति । तेषु अन्यतमो वनितावर्ष्म परिगृह्य' **कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल काऽपि माया । निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिराविवेश ।।** (याद.४-३)

इत्युक्तरीत्या कृष्णशिशौ परमप्रेमशालिन्याः जनन्याः यशोदायाः भावनया 'अयि वत्स किशोर ! काले स्तन्यम् अपीत्वैव निद्रासि हन्त ! उत्तिष्ठोत्तिष्ठ स्तन्यं पिबतात्' इति परमप्रीत्यभिनयेन प्रजल्पन्ती शिशुं डोलिकातः समुत्थाप्य निजकटितटे निषाद्य विषदिग्धं स्तनं तद्वदने निदधे 'स्वकीया जिघांसा सद्यः फलेग्रहिः भवित्री' इति प्रत्याशया । अथ किं वृत्तम् ? **'स्तन्येन कृष्णस्सह पूतनायाः प्राणान्पपौ लुप्तपुनर्भवायाः'** (याद.४.४) इत्युक्तरीत्या स्तन्यं तत्प्राणांश्च पपौ कृष्णः । कृष्णसन्निधानबलात् तस्याः पुनर्भवश्च लुप्यते स्म । न केवलमेतावदेव ; **'यदद्भुतं भावयतां जनानां स्तनंधयत्वं न पुन र्बभूव** (याद.४-४) इत्युक्तरीत्या पूतनास्तन्यपानवार्तामिमाम् अनुसंदधानानां जनानामपि **'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः । त्यक्त्वा देहं पुनर्जन्म नैति'** (भ.गी.४-९) इति गीतोक्तरीत्या पुनर्जन्म लुप्यते । कृष्णः इदानीं मुनिवरस्य कटितटे निषण्णस्सन् 'भो मुनिसार्वभौम! पुराऽहं व्रजे कस्याश्चित् विप्रलम्भविदग्धायाः कटितटे निषद्य यदकार्षं तत्किमु जानाति भवान्' ? इत्यनुयुज्य तदवबोधयामासेव ; अत एव तदनुसन्धानं प्राप्तं मुनेरिह। अथ पशुपतिप्रजापतीत्यादिना सद्वारकाद्वारकसर्वस्रष्टृत्वरूपः प्रभावातिशयः प्रोच्यते ।।

[प्रतिपदार्थ]

**हिंदी - कमर पर अपने को बिठाकर 'यह स्तन्य पी लो' कहती हुई स्तन्य पिलाने वाली पूतना का मनोरथ व्यर्थ बनाते हुए, स्तन्य के साथ उसके प्राण भी पीनेवाले प्रभु, पशुपति प्रजापति शचीपति इत्यादि समस्त देवों की भी सृष्टि करनेवाले और अत्याश्चर्य गुणचेष्टितवाले स्वामी हृदयप्रदेश पर विराजमान हैं ।।**

**[श्रीशठकोपसूरि के वक्षपर बैठना]**

इस गाथा में यों कहा जा रहा है कि भगवान आळवार के कमर से ऊपर चढकर उन के वक्ष पर विराजमान हुए । यद्यपि मूलगाथा में भगवान को आळवार अपने 'हृदयस्थ ' ही कहते हैं, जिसका साधारण अर्थ यही होगा कि भगवान उन के मन में विराज रहे हैं । परंतु यह प्रकरण के अनुगुण नहीं । इस दशक में आळवार भगवान को अपने श्रीविग्रह के एकैक अवयव पर ही विराजमान बता रहे हैं । अतः एतदनुगुणतया, यहाँ हृदय शब्द से हृदय का आश्रय वक्ष ही समझना उचित होगा । इस गाथा के प्रारंभ में पूतनावध वृत्तांत का वर्णन किया जाता है । मथुरापुरी में कंस के कारागृह में रात को अवतीर्ण श्री कृष्ण को उन की आज्ञा के अनुसार वसुदेव जी ने तुरंत व्रज पहुंचा दिया ।

यह रहस्य जानकर कंस बहुत चिंताक्रांत हुआ । फिर बहुत सोच कर उस ने श्री कृष्ण का संहार करने के लिए अनेक दुष्ट असुरों को व्रज भेजा । उन में से एक, पूतना, यशोदाजी के वेष से रात को व्रज आयी । पालने में सोते हुए श्री कृष्ण शिशु को उठाकर, गोद में बिठा कर उस ने कहा **'अरे लाल ! दूध पिये विना ही तू सो गया; अभी भूख लगती होगी ; उठ, यह स्तन्य पी ले'** और उस के मुँह में विष लगाया हुआ अपना स्तन रखा । उस की आशा थी कि यह स्तन्य पीकर श्रीकृष्ण मर जायगा। पंरतु श्रीकृष्ण ने स्तन्य के साथ उस के प्राण भी पी लिये । फलत: वह मर गई और श्री कृष्ण के सांनिध्य के बल से उत्तम लोक पहुंच गयी । इतना ही नहीं; इस वृत्तांत का अनुसंधान करनेवाले भक्तलोग भी पुनरावृत्ति शून्य उत्तमलोक पहुंचेंगे । **'जन्म कर्म च मे दिव्यम्'** (भ.गी.४-९) इत्यादि गीता पद्य में भी यह अर्थ बताया गया । इस पद्य का यह अर्थ है कि भगवान के जन्म व चेष्टितों का अनुसंधान करनेवाले भक्त, शरीर छोडने के बाद उन्हीं को प्राप्त करते हैं ; फिर इस संसार में जन्म नहीं लेते । मालूम होता है कि श्री कृष्ण, आळ्वार के कमर पर बैठ कर उन से बोले - 'हे मुनिवर ! क्या आप जानते हैं कि पूर्वकाल में मैं व्रज में ठगनेवाली पूतना के कमर पर बैठ कर क्या किया' ? अत: आळ्वार उस वृत्तांत का वर्णन कर रहे हैं । **पशुपति प्रजापति** इत्यादि से भगवान का अद्वारक व सद्वारक स्रष्टृत्वरूप वैभव बताया जाता है।।

**मायन् एन्नेञ्जिल् उळ्ळान् मत्तुम् यवर्क्कुं महदे**
**कायमुम् जीवनुम् ताने कालु मेरियु मवने**
**शेयन् अणियन् यवर्क्कुम् शिन्दैक्कुम् कोशर मल्लन्**
**तूयन् तुयक्कन् मयक्कन् एन्नुडैत्तोळिणैयाने ।। ६ ।।**

**(गाथा) - मायी मे हृदयस्थितः किमितरैरेवंविधस्स्यादसौ ?**
**देहे चात्मनि मे शरीर्यनिलवह्न्यात्माऽपि दूरेऽसताम् ।**
**भक्तानां सुलभश्च दृप्तमनसां चिन्ताद्यतीतस्स्वयं**
**शुद्धस्संशयमोहकृच्च जगतां बाहूपरिष्ठो मम ।। ६ ।।**

[प्रतिपदार्थः]

**विवरणम् - अद्भुतशीलस्स भगवान् मम हृदयमधितिष्ठति । किमेवमन्यस्य कस्यापि जनस्य करोत्यनुग्रहम् । शरीरे तिष्ठन् आत्मनि तिष्ठन् अनिलानलादि-**

**भूतात्मकश्च सन् केषाञ्चित् दवीयान् केषाञ्चित् नेदीयान् महाज्ञानिनामपि चिन्तापथवैदेशिकः परमपावनः केषांचित् संशयविपर्ययात्मकविषमज्ञानजनकश्च स एष मम दोर्द्वन्द्वम् अध्यास्ते ।**

**[श्रीशठकोपसूरेः भूजयुगळमध्ये वलनम्]**

सर्वान्तरात्मा भगवान् मम भुजद्वन्द्वमवलम्ब्य अवतिष्ठते इत्युच्यतेऽत्र । भगवान् स्ववक्षस्स्थलम् आशिश्रियदिति अधस्तादुक्तं पुनरनुभाषमाणः 'मदितरजनदुर्लभं हि मम सुलभमासीत्' इति मध्ये महान्तं विस्मयम् आविष्करोति मुनिवरः । **किमेवमन्यस्य कस्यापि जनस्य करोत्यनुग्रहम्** इत्येतत् मध्यमदीपन्यायेन पूर्वत्र उत्तरत्र च अन्वेति । भगवान् स्ववक्षस्स्थलं समाश्रितः इत्येतदपि मुनेः हर्षप्रकर्षाय भवति, स्वभुजद्वन्द्वमाश्रितः इत्येतदपि तथा । वक्षो भुजश्च इत्यवयवद्वितयं दिव्यमहिष्याः खलु स्वम् । **'लक्ष्मीचरणलाक्षाङ्कसाक्षिश्रीवत्सवक्षसे, स्वस्ति श्रीस्तनकस्तूरीमकरी मुद्रितोरसः, वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति'** इत्यादिपरश्शतप्रमाणैः श्रियः श्रीचरणस्य च अवसथभूतं तस्य वक्षः इति हि प्रख्यापितम् ; तादृशप्रभावशाली स इदानीं मम वक्षस्स्थलमाश्रित्य लब्धसत्ताकम् आत्मानं मन्यते इति प्रथमो विस्मयः । अथ च **'आश्लेषे वरद ! भुजास्तवेन्दिरायाः गोपीनामभिमतरासबन्धने वा । बन्धे वा मुदमधिकां यशोदयाऽऽहो संप्राप्तास्तव नवनीतमोषदोषात्'?** (श्रीवरदराजस्तवे-४३) इति श्रीवत्साङ्कमिश्रकृतप्रश्नरीत्या श्रीमहालक्ष्म्याः आश्लेषेण, रासोत्सवकालिकगोपीजनाश्लेषेण, नवनीतस्तेयापराधनिमित्तं यशादाकृतदामबन्धनेन च मोदितुमर्हौ अदसीयौ भुजौ मदीयभुजाश्लेषकाङ्क्षिणौ अभूतामिति द्वितीयो विस्मयः । कालिदासो विक्रमोर्वशीये नाटके पुरूरवसः ऊर्वश्याश्च रथयात्रां निबध्नन् रथसंक्षोभकाले ऊर्वश्याः अंसः पुरूरवसोंऽसश्च मिथो न्यपीड्येतामिति कथयन् **'यदयं रथसंक्षोभादंसेनांसो निपीडितः । एकः कृती मदङ्गेषु शेषमङ्गं भुवो भरः'** ।। (१-११) इति पुरूरवाः प्राहेति निबबन्ध । परमहेयः प्राकृतानन्दः एतादृशश्चेत् अथ किमुच्यतां भगवद्दिव्यमङ्गलविग्रहैकसंश्लेषसमुत्सुकस्य मुनिवरस्य आनन्दम् अधिकृत्य । भरताक्रूरमारुतीनां परिष्वङ्गेणेव मत्परिष्वङ्गतोऽपि प्रमुमुदे भगवान् बतेति विस्मयते मुनिवरः । विस्मयनिदानभूतो हर्षप्रकर्षः एव **'किमेवमन्यस्य कस्यापि जनस्य करोत्यनुग्रहम्'** इति वाचं व्याहारयति स्म । ननु एतादृशानुग्रहभागिनो भरताक्रूरमारुतिप्रभृतयः सन्त्येव खलु ; तर्हि कथम् अनन्यसुलभत्वोक्तिः इति नाशङ्कनीयम् । केनापि एतादृशोऽनुभवो न प्राप्तः इति सुदृढं ब्रूमः ।

**'शरीरे तिष्ठन् आत्मनि तिष्ठन्'** इत्यादिकं सुबालोपनिषत्प्रक्रियया प्रोक्तमिति ध्येयम् । **केषाञ्चिद्दवीयान् केषाञ्चिन्नेदीयान् -** अभक्तानां भक्तानामिति शेषः ; यदाहुः कूरेशमिश्राः **'समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं, भक्तजनैरदुर्लभम्'** इति (श्रीवरदराजस्तवे-१०१) । अथ पृच्छ्येत सनन्दनादयः किमभक्ता? इति । स्वोद्यमेन लिप्सन्ते स्म ते इति हेतोस्तथा नाम वक्तव्यमासीत् । **महाज्ञानिनामपि चिन्तापथवैदेशिकः** इत्येतत् अप्रमेयविभूतिविस्तारशालित्वकथनपर्यायः । **केषाञ्चित्संशय विपर्ययात्मकविषम-ज्ञानप्रदः** इत्यत्र श्री पराशरभट्टार्यकालिकं कमपि इतिहासविशेषम् उदाहरन्ति टिप्पणीकाराः । स चैवम् । श्रीभट्टारकप्रवचनगोष्ठ्यां नित्यशः प्रवर्तमानायां सत्याम् शास्त्रज्ञः एकः पण्डितः, सामान्यज्ञानी परमैकान्ती एकः इति द्वौ पुरुषौ वीथ्याम् उञ्छवृत्तिपरौ नियतमागच्छन्तौ आस्तां कालभेदेन । उभावपि स्वागमनसूचकस्तोत्रविशेषोच्चारणकर्तारौ चास्ताम् । भट्टार्यः पण्डितोत्तमस्य स्वभवनसविधोपस्थितिम् अवगत्य कमपि शिष्यम् आज्ञापयेत् अस्मै तण्डुलभिक्षा प्रदीयतामिति । तथैव दीयमानां भिक्षां स्वीकृत्य स प्रयायात् । अन्यः सामान्यज्ञानी यदा समायाति तदा स्वप्रवचनं विरमय्य स्वयमुत्थाय तमुपसृत्य अभिवाद्य कुशलप्रश्नादिकं च कृत्वा सत्कृत्य प्रत्यावृत्य अथ प्रवचनमुपक्रमेत भट्टार्यः । प्रत्यहमेवं प्रवर्तमानम् अवलोकमानाश्शिष्याः 'पण्डितोत्तमे अनादरणं अल्पज्ञे अत्यादरणं च किमेतन्नाम'! इति विह्वलचेतसो भूत्वा कदाचित् भट्टार्यमेवात्र हेतुम् अपृच्छन् । आचार्यवर्यस्तु तदानीं किमप्यनुक्त्वा, परेद्यवि समागतम् उञ्छवृत्तिपरं पण्डितप्रवरं स्वसविधमानाय्य योगक्षेमादिविचारं च विधाय बद्धाञ्जलिपुटस्सन् अनुयुयुजे - 'तत्त्वहितपुरुषार्थेषु तत्र भवतः प्रतिपत्तिः कीदृशी ?' इति । सद्यः एव स प्रत्युवाच - 'भगवन्! शास्त्राणि तावत् नैकविधानि ; क्वचित्' **हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्** ' (तै.सं.४-१-१) इति हिरण्यगर्भस्य प्रजापतेः परत्वं श्रूयते ; अन्यत्र तु **'न सन्न चासच्छिव एव केवलः,'** (श्वे.उ.४-१८) **'एक एव रुद्रो न द्वितीयाय तस्थे'** (श्वे.उ.३-१) इति रुद्रस्य परत्वं श्रूयते । अपरत्न तु **'न किरिन्द्र ! त्वदुत्तरः'** इतीन्द्रस्य परत्वं श्रूयते । **'एको ह वै नारायण आसीत्'** (महो.१-१) इत्येवंविधाऽपि श्रुतिरस्ति नाम । एवमेवम् अनिर्णयेन कथयन्तीं श्रुतिमवलम्ब्य किं वयं तत्वं निर्णेतुं प्रभवामः ? हिते पुरुषार्थे' चैवमेव हि इति कथयन् स्वकीयाम् अनिष्कृष्टज्ञानतां प्राचीकशत् । पुनः पप्रच्छ भट्टार्यः - 'महाविद्वांसो भवन्तः किमहो स्वपाण्डित्यबलेन श्रुतीनां समन्वयं संपाद्य कमपि निर्णयं कर्तुं न प्रभवन्ति'? इति । अथ स प्रत्यब्रूत् 'ते ते विद्वांसः

स्वस्वाभिनिवेशानुरूपं कमपि कमपि निर्णयं कुर्वन्त्येव किल ; स पन्थाः मह्यं न रोचते' इति । अथ गम्यतामिति तं विससर्ज भट्टार्यः । प्रत्यहं लभ्यमानाऽपि भिक्षा तस्मिन्दिने तेन न लब्धा हन्त ! अवनतमुखः एव रा उत्थाय प्रतिनिववृते । अथ कतिपयघटिकातः परं स आजगाम भिक्षार्थम् यः खलु अल्पज्ञः सत्कारानर्हश्च इति शिष्यैः भाव्यमानः आसीत् । यथायथं तमुपसृत्य भट्टार्यः अन्तरानाय्य सिंहासने निषाद्य 'स्वामिन् ! यद्यप्यत्र अहं प्रवचनं कुर्वन्नस्मि, तथाऽपि तत्वहितपुरुषार्थेषु निष्कर्षविधुराः यद्वा तद्वा कथयन्तः कालं क्षिपामः ; निष्कर्षो भवद्भिः अनुग्राह्यः इति प्रार्थये' इति सविनयं व्यजिज्ञपत् । एतच्छ्रवणमात्रेण स महान् बाष्पपर्याकुलमुखस्सन् 'अल्पीयान् अहम् उत्तरवीथीषु भैक्ष्यं विहाय अस्याम् एकस्यामेव वीथ्यां भैक्ष्यपरो वर्ते ; शास्त्रार्थेषु सर्वथा निष्कृष्टनिर्धारणशालिनः महान्तः भवादृशाः अस्यामेव वीथ्यां विराजन्ते इति प्रतिपत्त्या । हन्त ! भवन्तोऽपि एवमनुगृह्णन्ति नाम ; भवत्तातपादप्रवचनगोष्ठ्याम् भगवद्रामानुजगोष्ठ्यां च परस्सहस्रकृत्वो हि मया श्रुतम् - श्रीमन्नारायणः एक एव परं तत्वम् ; तच्चरणारविन्दशरणागतिरेकैव हितम् ; तत्कैङ्कर्यमेव परमपुरुषार्थः इति । कोऽत्र विपर्यासः ? कः पुनरत्र संदेहः ? भवन्तोऽपि एवमनुयुञ्जते स्म इति हा बत ! मम विस्मयो विषादश्च बोभवीति' इत्याम्रेडयन् नैव विरराम । तदात्वे भट्टपादाः परमप्रहर्ष- प्रफुल्लमनसः तदीयश्रीपादतीर्थं निर्बध्य स्वीकृत्य पीताम्बरहिरण्यादिप्रदानेन च परितोष्य गम्यतामिति विसृज्य, अथ शिष्याणां सकाशेऽनुजगृहुः - 'कच्चिदवगतो युष्माभिरुभयोः प्रतिपत्तिविशेषः ? बह्वधीतम् इत्येतावता को लाभः ? न किमप्यधीतम् इत्येतावता का हानिः'? इत्यादि । सुतराम् अनुरूपोऽयम् इतिहासः प्रकृतस्थले ।।

**[प्रतिपदार्थ]**

**हिन्दी - अत्याश्चर्यचेष्टित भगवान मेरे वक्ष पर विराजमान हैं । क्या वे दूसरे किसी पर कभी ऐसा अनुग्रह करते हैं ? समस्त शरीरों व चेतनों में रहनेवाले, पवन अनल इत्यादि पंचभूतरूपी, किन्हीं से दूर और दूसरे किन्हीं के समीप रहनेवाले, महान ज्ञानियों के चिंतन के भी परे रहनेवाले, परमपावन और किन्हीं को संशय व विपर्यय रूप ज्ञान देनेवाले भगवान अब मेरे दोनों भुजों पर विराजमान हैं ।।**

**[आळवार के भुज पर भगवान की उपस्थिति]**

इस गाथा में कहा जाता है कि सर्वान्तरात्मा भगवान आळवार के भुजों का अवलंबन कर विराज रहे हैं । अत्यंत आनंद व आश्चर्य के साथ पूर्वगाथोक्त अर्थ का

(अर्थात् भगवान के आळ्वार के वक्ष पर विराजने का) अनुवाद करते हुए आळ्वार पूछते हैं - 'इस संसार मंडल में क्या भगवान ने दूसरे किसी पर ऐसा अनुग्रह किया हैं '? आगे के वाक्य से भी इस वाक्य का संबंध हो सकता है । अर्थात् आळ्वार अपने वक्ष पर भगवान के विराजने के कारण जैसे आनंद पाते हैं, वैसे अपने भुजों पर उन के विराजने से भी आनंद पा रहे हैं । भगवान का वक्ष तथा भुजद्वंद्व दिव्यमहिषियों की संपत्ति हैं । श्रीवक्ष पर लक्ष्मीजी नित्यनिवास करती हैं और उस पर उन का पादचिह्न भी विराजता है । अब आळ्वार को इस बात का आश्चर्य है कि ऐसे प्रभाववाले भगवान अब मेरे वक्ष पर विराज कर अपने को कृतकृत्य मान रहे हैं । एवं भगवान के भुजों का वैभव भी अपार है ; यथा श्रीकूरेशस्वामीजी ने पूछा- **'आश्लेषे, वरद भुजास्तवेन्दिरायाः'** (श्री वरदराजस्तव ४३) इत्यादि । यह भाव है - 'हे भगवन्! आप के बाहुओं को कब अधिक आनंद मिला, लक्ष्मीजी के आलिंगन के समय, अथवा गोपियों के इष्ट रासमंडल बांधने के समय अथवा मक्खन चोरी के अपराध में यशोदाजी से बांधे जाने के समय'? अब आळ्वार इस बात का भी आश्चर्य पा रहे हैं कि भगवान के ऐसे विलक्षण भुज अब अपने (आळ्वार के) भुजों का आलिंगन करके स्वयं कृतार्थ होना चाह रहे हैं । कालिदास विरचित विक्रमोर्वशीय नाटक के एक दृश्य में राजा पुरूरव ऊर्वशी के साथ रथ पर बैठकर जब यात्रा कर रहे हैं तब पुरूरव का भुज ऊर्वशी के भुज से वारंवार दबाया जा रहा था । तब इस से आनंदित होकर पुरूरव ने कहा - **'यदयं रथसंक्षोभादंसेनांसो निपीडितः । एकः कृती मदङ्गेषु शेषमङ्गं भुवो भरः'** ।। (१-११) (अर्थात् रथ के हिलने के कारण ऊर्वशी के भुज से दबाया जानेवाला यह मेरा भुज कृतार्थ हुआ ; इस शरीर के दूसरे सभी अंग भूभार मात्र हैं, माने उन का जन्म व्यर्थ है'।) यदि अतिहेय व प्राकृत यह आनंद ही ऐसी प्रशंसा का पात्र हो, तो परम विलक्षण (भगवान के) दिव्यमंगल विग्रह का आलिंगन, उस की चिरात् आशा करनेवाले आळ्वार को, कितना आनंद देता होगा ? अब आळ्वार यह भी आश्चर्य पा रहे हैं कि ऐसे विलक्षण भुजवाले भगवान, भरत-अक्रूर-मारुतियों की भांति मुझ से भी मिलकर सीमातीत आनंद पा रहे हैं । ऐसे विलक्षण आश्चर्य व आनंद के परवशचित्त होकर ही वे कह रहे हैं - **क्या वे दूसरे किसी पर कभी ऐसा अनुग्रह करते हैं ?** यह सुनकर कोई पूछेगा कि भरत, अक्रूर व मारुति, इन को भी भगवान का आलिंगन मिला था ; जो आळ्वार को मिला, उस में कौन-सी विशेषता है ? इस का प्रत्युत्तर यही है कि उन को आळ्वार का जैसा

विलक्षण आलिंगन नहीं मिला था । यदि मिला होता, तो वे भी आळ्वार की भांति परवशचित्त होकर उस की खूब प्रशंसा करते । परंतु उन की प्रशंसावाणी कहीं सुनी नहीं जाती । अतः यह स्पष्ट है कि उन्हें ऐसा आनंद नहीं मिला । **शरीरों व चेतनों में रहनेवाले** इत्यादि सुबालोपनिषद के अनुसार कहा गया है । **किन्हीं से दूर और दूसरे किन्हीं के समीप रहने वाले** भगवान अभक्तों से दूर रहते हैं और भक्तों के समीप। यथा श्रीकूरेश स्वामीजी ने कहा - **'समाहितैस्साधु सनंदनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम्'** (वरदराजस्तव १०१) इस का यह भाव है - सनक सनंदनादि योगी भी भगवान को प्राप्त नहीं कर सकते, परंतु भक्तजन अनायास उन को प्राप्त करते हैं । यद्यपि सनकादि भी बडे भक्त हैं । तथापि वे भक्ति से नहीं, परंतु अपने तपोबल से भगवान को पाना चाहते हैं ; अतः भगवान उन्हें नहीं मिलते और अभक्तों में उन की गिनती होती है । **महान ज्ञानियों के चिंतन के भी परे रहनेवाले** कहने का तात्पर्य यह है कि भगवान अप्रमेय विभूतियुत हैं । **किन्हींको संशय व विपर्ययरूप ज्ञान देनेवाले 'मत्तः स्मृतिर्ज्ञानमपोहनं च'** (भ.गी.१५-१५) इत्यादि में भगवान स्पष्ट बताते हैं कि 'मैं ही सब को स्मरण, ज्ञान व अज्ञान देता हूं' । यहां पर भगवद्विषय के टीकाकार, श्री भट्टरस्वामीजी के समय की एक घटना का वर्णन करते हैं । वह इस प्रकार है : - श्री पराशरभट्टार्यस्वामीजी के यहां प्रतिदिन भगवद्विषयादि का प्रवचन चलता था । उस समय वीथी में भिक्षा माँगनेवाले दो महात्मा (एक के बाद दूसरे) आते थे । उन में से एक थे नानाशास्त्रों के प्रकांड विद्वान् और दूसरे साधारण, परंतु परमैकान्ती । दोनों अपने आगमन की सूचना देने के लिए ऊंचे स्वर से किसी स्तोत्र का पाठ करते आते थे । श्री पराशरभट्टार्यस्वामीजी अपने मकान के पास विद्वान् के आने की सूचना पाते ही किसी शिष्य से कह देते कि उसे मुष्टि भर चावल दे दो । पंडित भी वह भिक्षा लेकर चला जाता । फिर दूसरे महात्मा आते । उन के आते ही स्वामीजी अपना प्रवचन रोक कर, स्वयं उठकर, उन से मिलकर, स्वागत, प्रणाम व कुशलप्रश्न पूर्वक उन्हें भिक्षा देकर, फिर स्वस्थान लौटकर प्रवचन चालू करते । यह काम रोज ऐसा ही चलता । यह देख कर शिष्यों ने विचार किया - 'गुरुजी यह क्या कर रहे हैं, विद्वान् का तिरस्कार और मूर्ख का सत्कार' ? एक दिन किसी ने उन से इस का कारण पूछा । गुरूजी तब चुप रह गये । दूसरे दिन सबेरे जब पंडित भिक्षा माँगने आये, तब स्वामीजी ने उन्हें अंदर बुलाया और स्वागत सत्कार पूर्वक हाथ जोडकर सविनय पूछा - 'मान्य विद्वद्वर ! कृपया बताएँ कि तत्व-हित-पुरुषार्थों के बारे में आप

का क्या मत है' । विद्वान् ने उत्तर दिया - 'भगवन् ! मैं क्या कहूं । शास्त्र तो एक प्रकार के नहीं । एकैक शास्त्र एकैक अर्थ बता रहा है । एक वेदवाक्य कहता है कि **'हिरण्यगर्भस्समवर्तताग्रे'** (तै.सं.४-१-१) (अर्थात् प्रलयकाल में हिरण्यगर्भ ही रहा), जिस से चतुर्मुख ब्रह्मा को परतत्व बताया जाता है । दूसरा वाक्य शिव को परतत्व बताता है - **'न सन्न चासच्छिव एव केवलः'** (श्वे.उ.४-१८) (केवल शिव के सिवा दूसरा कोई चेतन या अचेतन नहीं रहा), **'एक एव रुद्रो न द्वितीयाय तस्थे'** (श्वे.उ.३-१) (रुद्र एक ही था, दूसरा कोई नहीं) इत्यादि । तीसरा वाक्य तो इंद्र को ही परतत्व घोषित करता है - **'न किरिन्द्र त्वदुत्तरः'** (हे इंद्र ! तुम से श्रेष्ठ दूसरा कोइ नहीं) । **'एको ह वै नारायण आसीत्'** (महो.१-१) इत्यादि नारायण को परतत्व बतानेवाले वाक्य भी बीच में हैं ही । इस प्रकार, स्पष्टता के विना, जो मन में आया, उसे कहनेवाली श्रुति का अध्ययन कर हम कैसे कोई निश्चय पा सकेंगे ? हित व पुरुषार्थ के बारे में भी इसी प्रकार परस्पर विरुद्ध ही वेद वचन मिलते हैं । अतः मैं निश्चित रूप से क्या कहूं ? किसी प्रकार का निश्चय हो सकता नहीं । 'भट्टर स्वामीजी ने फिर पूछा -' यह बात तो ठीक है । परंतु आप विद्वान हैं और अपनी विद्वत्ता से इन श्रुतियों को समरस बनाकर एक निश्चित अर्थ निकाल सकते हैं । अतः हमें यही बतला दें कि आप का अपना अभिप्राय क्या है । 'विद्वान् बोले -' हां ; वे वे विद्वान् अपने अपने अभिनिवेश के अनुगुणतया कोई कोई निश्चय कर डालते है ; फलतः इतने मतभेद हो गये हैं । परंतु यह मार्ग मुझे पसंद नहीं' । यह सुनकर स्वामीजी ने उन्हें विदा कर दिया । उस दिन उन्हें रोज की भिक्षा भी न मिली । खिन्न होकर वह निकल गया । थोडी देर में दूसरे महात्मा आये, जिसे लोग अल्पज्ञ मानते थे । स्वामीजी ने उन का स्वागत किया, अंदर बुलाकर दिव्य आसन पर बिठाया और सविनय पूछा - 'स्वामिन्! यद्यपि यहां पर रोज प्रवचन के नाम से कुछ चलता है । परंतु तत्व-हित-पुरुषार्थों के विषय में हम ने कुछ निश्चय नहीं कर पाया । अतः आप हमें इस विषय का निर्णय सुनाने की कृपा करें'। यह सुनकर उस महात्मा ने अश्रुपूर्णाक्ष होकर गद्गद कंठ से प्रत्युत्तर दिया - 'सर्वथा अज्ञ मैं दूसरी वीथियाँ छोडकर इस एक वीथी में भिक्षा लेता रहता हूं क्योंकि यहीं निष्कृष्ट शास्त्रार्थ ज्ञानवाले आप जैसे महान पुरुष विराजमान हैं । परंतु अब आप ऐसा विलक्षण प्रश्न पूछ रहे हैं । मैं क्या कहूं ? आप के पिताजी की तथा श्री रामानुजस्वामीजी की प्रवचनगोष्ठी में मैं ने बहुत बार सुना है कि भगवान श्रीमन्नारायण ही परतत्व हैं, उन के

पादारविंद में की जानेवाली शरणागति ही हित है और उन की सेवा ही परमपुरुषार्थ है । इस विषय में शंका कौन-सी है ? परंतु मुझे इसी बात का आश्चर्य व खेद हो रहा है कि आप मुझ से यह पूछ रहे हैं' । और उन्हों ने वारंवार इस अंतिम वाक्य को ही दोहराया । यह सुनकर भट्टर स्वामीजी आनंद सागर निमग्न हुए और सनिर्बंध उन का श्रीपादतीर्थ लेकर, पीतांबर दक्षिणा आदि से खूब सत्कार कर, विदा देकर तृप्त हो गये । बाद में उन्होंने अपने शिष्यों से कहा, 'तुम ने स्पष्ट देख लिया न कि इन दोनों का निश्चय कैसा है ? अनेक शास्त्रों का अध्ययन करने मात्र से क्या लाभ है ? और कुछ भी नहीं पढने से कौन-सी आपत्ति आवेगी ? शास्त्र पढना और तत्व निश्चय पाना ये दोनों अलग अलग बात हैं' इत्यादि । यह एतिह्य प्रकृत स्थल का अत्यंत अनुरूप है ।।

**तोळिणै मेलुम् नन्मार्बिन् मेलुम् शुडर्मुडि मेलुम्**
**ताळिणै मेलुम् पुनैन्द तण्णन्तुळाय् उडै यम्मान्**
**केळिणै योन्रु मिलादान् किळरुम् शुडरोळि मूर्ति**
**नाळणैन्दु ओन्रु महलान् एन्नुडै नाविन् उळाने ।। ७ ।।**

**(गाथा) - बाहूनामुपरि प्रियोरसि शुभे मौळिस्थले चोज्ज्वले**
**पादाम्भोजयुगे च रम्यतुलसीमालाञ्चितश्श्रीधरः ।**
**स्वामी निस्समवैभवस्स्वमहसा दीप्रस्वमूर्तिस्सदा**
**संश्लिष्यापि मया सहानवरतं जिह्वां प्रविष्टो मम ।। ७ ।।**

**[प्रतिपदार्थः]**

**विवरणम् - भुजयुगले विलक्षणे वक्षसि प्रदीप्ते मकुटे चरणद्वन्द्वे च शिशिररुचिरतुलसीस्त्रगलङ्करणशाली अनुरूपोपमानरहितः तेजसामूर्जितो राशिरिवावभासमानो वियोगगन्धरहितनित्यसंश्लेषशीलश्च भगवान् मम रसनामवजगाहे ।।**

**[शठकोपसूरेः जिह्वाप्रवेशवर्णनम्]**

लोके कामिनीसकाशमागच्छन् कान्तो यथा स्वात्मानं दिव्यालङ्कारालंकृतम् आकलय्य पुंसां दृष्टिचित्तापहारी सन्नागच्छति, तथैव मां रञ्जयितुं सर्वाङ्गीणालङ्कारसंभृतः

समागत्य रसनामध्यतिष्ठत् इत्याह मुनिवरोऽत्र । प्रथमप्रबन्धे तिरुविरुत्ते मुनिवरोऽसौ भूयसीषु गाथासु तुलसी तुलसीत्येव प्रलपति स्म इति स्मरन् भगवान् अस्य परिपूर्णतृप्तये दिव्यतुलसीमालिकाभिरेव स्वकीयमखिलमङ्गम् अलंकृत्य रसनाम् आविवेश 'स्वामिन् शठारिमुने ! अविरलतुलसीदामसंजातभूमानं मां यावद्रसनाबलं संकीर्तयतु भवान्' इति कथयन्निव । जिह्वाग्रसिंहासनमभ्युपेयुषि भगवति संकीर्तनस्वारस्यं किमु वक्तव्यम् ! तुलसीस्रगलङ्क्रियाम् अधिकृत्य एतादृशी गाथा न कुत्रापि द्रष्टुं शक्या इति नातिशयोक्तिः । सत्यम् एतादृशाद्वितीयगाथावतारणार्थमेव भगवानधुना शब्दसंदर्भाविर्भावभूमिं रसनाम् अध्यास्त । तुलसीमालां प्रथमतो भुजयुगले विभर्ति स्म **'सुगाढं परिषस्वजे'** इत्याद्युक्तरीत्या गाढपरिष्वङ्गोपकरणभूतकरणालञ्चिकीर्षया । अथ तामुरसि बिभर्ति स्म स्वपुरुषकारकृत्यम् अद्वितीयमप्रमेयं च फलति स्मेति प्रमोदमाना पद्मा विशेषतः शोभताम् इति । अथ तां मौलौ बभार मुनिवरस्यास्य वाग्विशेषैरेव खलु शिखरवान् अहम् अजनिषि, ततः तदलङ्करणम् आवश्यकमिति । अन्ततः चरणारविन्दम् अलञ्चकार शठकोपमुनिवरस्यास्य नाम्नैव हि मम चरणयोः प्रथा भवित्री, तदलङ्करणम् अत्यावश्यकमिति । अथवा, अदसीयोपदेशमहिम्ना एव खलु प्रायः सर्वे जना इमं चरणमाश्रयिष्यन्तीति विश्वासद्रढिम्ना तत्र अलङ्करणसंविधानम् । रसिकाग्रगण्यानां श्रीपराशरभट्टपादानां निर्वाहस्तु - 'जगति महावीराः प्रथमतः स्वविजयोपकरणदिव्यहेत्यलङ्करणे समुत्सुका भवन्ति ; तथाऽसौ महावीरो निजदिव्यहेतिस्थानभूतं भुजं पुरस्तात् अलञ्चकार । अथ रासिक्यभूम्ना महिष्यै प्रयच्छति अलङ्करणम् । दशकेऽस्मिन् प्रथमगाथाचरमचरणोक्तरीत्या रसिको रमापतिश्चासौ निजदिव्यमहिषीस्थानम् अलञ्चकार पश्चात् । महिष्यै दत्त्वाऽथ स्वयम् उपभुञ्जते हि ; एवं स्वशिखां विभूषयन् स्वयम् उपबुभुजे । अन्ततोऽवशिष्टदासेभ्यः खलु ददति ; दासभूतानां निपतनस्थानभूते चरणे विन्यासयत्' इति ।

**अनुरूपोपमानरहितः - 'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः'**।। इत्युक्तरीत्या स्वस्य स्वयमेव उपमानभूमिरिति यावत् । सर्वाङ्गीणदिव्यतुलसीस्रगलङ्करणजनित-शोभाविशेषस्य सर्वथाऽपि सदृशदरिद्रता किमु वक्तव्या । आगन्तुकालङ्करणविरहेऽपि नैसर्गिकी सुषमैव हि पर्याप्तेति द्योतयन्नाह - **तेजसामूर्जितो राशिरिवावभासमानः** इति । **'महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः'** (स्तो.र.५६) इति स्तोत्ररत्नानुगृहीतरीत्या महात्मनां क्षणमात्रविश्लेषमपि सोढुम् अशक्नुवन् नित्यसंश्लेषसमुत्सुको भवति इत्यभिप्रायकं चरमविशेषणम् अतिचारु ।।

[प्रतिपदार्थ]

**हिन्दी - अपने दोनों भुजों, श्रेष्ठ वक्ष, उज्ज्वल मुकुट व उभय पादों पर सुंदर व सुशीतल तुलसी का धारण करनेवाले, अपने योग्य उपमान से विरहित, जाज्वल्यमान तेजोराशि के सदृश और वियोग के विना नित्यसंश्लेष करने के स्वभाववाले भगवान मेरी जीभ में विराजमान हैं ।।**

**[आळ्वार की जीभ में भगवान का प्रवेश]**

प्रकृत गाथा का यह तात्पर्य है कि जैसे कामिनी से मिलना चाहनेवाला नायक अपने को दिव्यालंकारों से सजाकर, पुरुषों के भी मनोनेत्रों का अपहरण करने में समर्थ वेष से जाता है, इसी प्रकार, भगवान भी आळ्वार को प्रसन्न कराने के लिए अपना सारा विग्रह सजाकर, उन की जिह्वा पर विराजमान हो गये । आळ्वार ने अपने पहले प्रबंन्ध **तिरुविरुत्तम्** में वारंवार तुलसी का नाम लेते ही प्रलाप किया था । इस का स्मरण कर अब भगवान इन की परिपूर्ण तृप्ति के लिए अपने सभी अंगों को तुलसी से सजा कर इन की जीभ पर विराजमान हो गये मानों कह रहे हों कि ' हे मुनिवर ! अब आप अपनी जिह्वा की शक्ति के अनुसार दिव्य तुलसी से अलंकृत मेरी स्तुति कर लें,' । जिस जिह्वातल पर साक्षात् भगवान ही विराजमान हो, उस से निकलनेवाली श्रीसूक्तियों के माधुर्य के बारे में कहना क्या ? तुलसी का ऐसा मनोहर वर्णन करनेवाला वचन, सत्य ही, और कहीं नहीं मिलेगा । यह तो सर्वथा सत्य है कि ऐसा मधुर श्रीसूक्ति निकालने के लिए ही भगवान अब आळ्वार की वागिंद्रिय, जिह्वा पर विराजमान हुए । अस्तु अब भगवान के चार अवयवों पर तुलसी का अलंकार उपवर्णित किया गया है । इस का एक कारण है । पहले भुजों पर धारण करने का यह तात्पर्य है कि भक्तों का आलिंगन करने के अंग भुजों को पहला सन्मान देना आवश्यक है । बाद में श्रीवक्ष में विराजमान, अपने पुरुषकार को सफल होते देखकर प्रसन्न होती श्रीलक्ष्मीजी को सजाने के लिए श्रीवक्ष पर तुलसी माला का धारण होता है । फिर आळ्वार से स्तोत्र किये जाने से सार्थक बने हुए मुकुट का अलंकार करने के लिए सिर पर तुलसी का धारण होता है । अंत में चरणारविंद सजाने का भाव साक्षात् आळ्वार को ही सजाना है ; क्योंकि भगवान के श्रीपादों का नाम ही श्री शठकोप होता है । अथवा आळ्वार के उपदेश सुननेवाले जन सुधरकर भगवान के श्रीचरणों का आश्रय लेते हैं ; अतः सर्वजन शरण्य उन का अलंकार करना आवश्यक है ।

रसिकचक्रवर्ती श्री पराशरभट्टार्य स्वामीजी दूसरे प्रकार इसका तात्पर्य बताते हैं । तथाहि - लोक में हम देखते हैं कि विजय पानेवाले वीर जन पहले अपनी विजय के हेतु आयुधों का अलंकार करते हैं ; इसी प्रकार भगवान ने भी पहले अपने बाहुओं का अलंकार करने बहाने बाहु पर विराजमान शंखचक्रों का ही अलंकार किया । फिर रसिकता से अपनी प्रेयसी को अलंकार देना आवश्यक होता है । इस दशक की पहिली गाथा के अंत में बताया गया कि भगवान बडे रसिक हैं । अत: उन्हों ने आयुधों के बाद श्रीलक्ष्मीजी को सजाया (माने श्रीवक्षपर तुलसी पहना) महिषी को देने के बाद स्वयं उपयोग करना रसिकों का संप्रदाय है ; इस न्याय से भगवान ने तुलसी को श्रीवक्ष के बाद अपने सिर पर रखा । अंत में प्रसाद तो दासों को दिया जाता है ; इस प्रकार तुलसी इतने उपयोग होने के बाद भक्तों के स्थान (अर्थात् भक्तों से प्रणाम किये जाते) चरणकमलों पर रखी गयी ।

**अपने योग्य उपमान से विरहित -** श्रुति कहती है कि भगवान **'एकमेवाद्वितीयम्'** (छां.उ.६-२-१) हैं । फिर उन का उपमान दूसरा कौन हो सकता है ? तदुपरांत आपादचूड तुलसीमाला से अलंकृत हो जाने के बाद, कहने की बात ही नहीं । वस्तुतस्तु भगवान को अपनी शोभा बढाने के लिए कोई आभूषण पहनने की आवश्यकता ही नहीं है, जब वे स्वयं आभूषणों के भी आभूषण हैं ? (अर्थात् आभूषण के विना भी शोभायमान हैं ) यह अर्थ कहा जाता है **जाज्वल्यमान तेजोराशि के सदृश** कहने से । अंतिम विशेषण का यह तात्पर्य है कि भगवान इतने सुकुमार हैं कि वे अपने भक्तों के एक क्षण मात्र के विरह का भी सहन नहीं कर सकते और अत एव उन से नित्यसंश्लिष्ट ही रहना चाहते हैं । यथा स्तोत्ररत्न में गाया गया - **'महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः'** (स्तो.र.५६) ।।

**नाविनुळ् निन्रु मलरुम् ज्ञानक्कलैहळुक्कु एल्लाम्**
**आवियुम् आक्कैयुम् ताने अळिप्पोडु अळिप्पवन् ताने**
**पूवियल् नाल्तडन् तोळन् पोरुपडै याळि शङ्गेन्दुम्**
**काविनन्मेनि क्कमलक्कण्णन् एन् कण्णिन् उळाने ।। ८ ।।**

**(गाथा) - विद्यास्वप्यखिलासु चात्मतनुरूपोऽयं स्वयं तज्जनि-**
**ध्वंसादेरपि कारणं च कुसुमावळया चतुर्बाहुधृत् ।**
**वैरिध्वंसकचक्रशङ्खभृदसौ नीलोत्पलश्यामलः**
**पद्माक्षोऽद्य चकास्ति चोज्ज्वलतमो मन्नेत्रयुग्मे हरिः ।। ८।।**

**[प्रतिपदार्थः]**

**विवरणम् - (गाथायाः अस्याः भगवद्रामानुज - दिव्याज्ञावतीर्णषट्सहस्त्रिका-व्याख्यानं परमभोग्यं संस्कृतवाक्यजटिलमिति प्रायः तद्वाग्भिरेव पूर्यते प्रतिपदार्थटीका ।) साङ्गसकलवेदप्रतिपाद्यः तत्स्वरूपस्थितिप्रवृत्तिहेतुभूतः निखिलजगदुदयविभवलयलीलः पुष्पहाससुकुमारः चतुर्भुजः शङ्खचक्रगदाधरः इन्दीवरदलश्यामः कमलपत्राक्षो भगवान् मम चक्षुषि प्रविष्टः।।**

**[शठकोपसूरेः चक्षुषि भगवतः प्रवेशः]**

गाथायामस्यां भगवतः स्वचक्षुर्निष्ठत्वकथनेन अत्र प्रयुज्यमानैः सर्वैरपि विशेषणैः प्रतिपन्नाः अर्थाः मुनिवरस्यास्य स्वचक्षुर्विषयभूतास्सन्तो वाचो निस्सरन्तीति प्रतिपत्तव्यम् । जिह्वाग्रतः समुज्जृम्भमाणानां ज्ञानसाधनभूतानां सर्वासामपि कलानां अर्थस्य शब्दस्य च निर्वाहको भगवानिति स्थितं मूलगाथायाम् ; एतत्सारसंक्षेपः **साङ्गसकलवेदप्रतिपाद्यः** इति । अयमर्थः कथमिव चक्षुषा वीक्षितुमर्हो भवति मुनिवरस्येति चेत् उच्यते । **'प्रत्यक्षमेकं चार्वाकः'** इत्युक्तरीत्या प्रत्यक्षमात्रप्रामाण्यस्वीकर्तृचार्वाकमतेऽपि वेदप्रामाण्यम् अनपायमिति सुनिपुणम् उपपादयद्भिः श्रीपराशरभट्टार्यैः (श्रीरङ्गराजस्तवोत्तरशतके - ५) **'प्रत्यक्षा श्रुतिरर्थधीश्च, न तथा दोषः, तदर्थः पुनर्धर्माधर्मपरावरेश्वरमुखः प्रत्यक्षबाध्यो न च । तच्चार्वाकमतेऽपि रङ्गरमण! प्रत्यक्षवत्सा प्रमा'** इति पादत्रितयेन वेदवेदार्थयोः कयाचन विधया प्रत्यक्षतामुपपाद्य, अथ चतुर्थचरणेन **'योगोन्मीलितधीस्तदर्थमथवा प्रत्यक्षमीक्षेत सः'** (श्रीरङ्ग.उ.५) इत्यनेन योगिनाम् अव्यवधानेन वेदार्थसाक्षात्कर्तृत्वम् अभ्यधायि । मुनिवरश्चासौ योगिनामग्रेसरः । अत एव ते एव भट्टपादाः - **'ऋषिं जुषामहे कृष्णतृष्णातत्वमिवोदितम् । सहस्रशाखां योऽद्राक्षीद् द्राविडीं ब्रह्मसंहिताम्'** ।। (श्रीरङ्गराजस्तवे - १-६) इत्यभितुष्टुवुः मुनिवरमेनम् । अत्र ऋषित्वेन व्यपदेशः अद्राक्षीदिति क्रिया चावधीयेताम् । अतश्च सर्वमर्थं न केवलं मनसा, अपितु चक्षुषा च साक्षात्कृत्यैव व्याहरति मुनिवरोऽसौ इत्यवधारणम् अनर्गलम् ।। सर्वप्रमाणगतानां शब्दानामर्थानां च

भगवानेव निर्वाहकः इत्युक्त्या फलितमिदमेव यदुत वैदिकेषु शब्देषु अर्थेषु च स एव निविष्टः इति । **'वचसां वाच्यमुत्तमम्'** इत्येतत् पुनरपि स्मार्यते । यद्वा, 'अस्मात् पदादयमर्थो बोद्धव्यः' इतीश्वरसंकेतः खलु शक्तिः । तस्याः शक्तेः यदस्ति तादधीन्यं तदिहोच्यते इत्यप्याहुः आचार्याः ।

**तत्स्वरूपस्थितिप्रवृत्तिहेतुभूतः -** तच्छब्दः पूर्वोक्तज्ञानसाधनीभूतसकलकलापरः । जगतां स्वरूपस्थितिप्रवृत्तीरिव शब्दराशीनां स्वरूपान्यपि स एव निर्वहति इत्यर्थः । 'मन्दमतीनां चेतनानां प्रतिपत्तिदोषैः लेखकदोषैः पाठभेदादिभिश्च विकारेषु संभवत्सु तदुपसंहारकर्ता, अपेक्षावसरेषु पुनः तदाविष्कर्ता' इति व्याचक्षते गुरुचरणाः ।। अथ पुष्पहाससुकुमारतरत्वं चतुर्भुजत्वं शङ्खचक्रगदाधरत्वं इन्दीवरदलश्यामत्वं कमलपत्राक्षत्वं च स्वचक्षुषा साक्षात्कृत्यैव कथयति मुनिवरोऽसाविति तदेतद्विवरणनिरपेक्षम् । **'यमेवैष वृणुते तेन लभ्यः'** (मुं.उ.३-२-३) इत्युक्त्यनन्तरम् **'तस्यैष आत्मा विवृणुते तनूं स्वाम्'** (मुं.उ.३-२-३) इत्यपि खल्वाह 'नायमात्मा'श्रुतिः । **'स्वां तनूं तस्य विवृणुते'** - स्वदिव्यावयवविशेषान् सर्वानपि स्वयमेव सुविशदं साक्षात्कारयति परमात्मा इति किल तदर्थः ।।

**[प्रतिपदार्थ]**

**हिन्दी - जीभ से निकलनेवाले, ज्ञानसाधनभूत सांगवेदादि समस्त शास्त्र व तदर्थरूपी, उन के स्वरूपस्थितिप्रवृत्तिहेतु, समस्तजगत के सृष्टिस्थितिसंहारों के कर्ता, पुष्पहास, सुकुमार, चार भुजवाले, शंखचक्रगदाधर, नीलोत्पलश्याम विग्रहवाले और कमलनयन भगवान मेरे नेत्र में विराज रहे हैं ।।**

इस गाथा में आळ्वार बता रहे हैं कि भगवान उन के नेत्र में प्रविष्ट हुए हैं ; इस से यह सूचित किया जाता है कि इस गाथा में प्रयुक्त सभी विशेषणों के अर्थ आळ्वार के अपने नेत्रों से साक्षात्कृत है ; अर्थात् आळ्वार अपनी आँखों से भगवान की कतिपय विशेषताओं को साक्षात्कार कर, अब उन्हीं का वर्णन कर रहे हैं । भगवान को **वेदादि समस्तशास्त्र व तदर्थरूपी** कहने का यह भाव है कि भगवान उन सब के प्रवर्तक और उन के वेद्य हैं । यहां पर यह शंका हो सकती है कि आळ्वार ने इस अर्थ का कैसे साक्षात्कार पाया ; क्योंकि यह तो आँखों से नहीं देखा जा सकता । इस का

यह समाधान है कि योगिश्रेष्ठ महात्मा अतींद्रिय अर्थों का भी साक्षात्कार पा सकते हैं ; अत एव कितने ही महर्षि मंत्र द्रष्टा, मंत्रार्थ द्रष्टा इत्यादि नामों से निर्दिष्ट होते हैं । श्रीशठकोपसूरि भी भगवत्कृपा से सिद्ध ऋषि हैं ही ; सहस्रगीति भी उन से 'दृष्ट' द्राविडी ब्रह्मसंहिता (अर्थात् द्राविडवेद) है । यथा श्री पराशरभट्टार्य स्वामीजी ने कहा - **'ऋषिं जुषामहे कृष्णतृष्णातत्वमिवोदितम् । सहस्रशाखां योऽद्राक्षीत् द्राविडीब्रह्मसंहिताम् ।।** (श्रीरङ्गराजस्तवे- १-६) (हम श्रीशठकोप ऋषि के शरण में जाते हैं जो साक्षात् श्रीकृष्णप्रेम का अपरावतार रूप और सहस्रगीति नामक द्राविड उपनिषद के द्रष्टा हैं '। ) तथाच यह अर्थ निश्चित हुआ कि आळवार समस्त अर्थों को अपने, मन से नहीं किंतु, नेत्रों से देखकर ही दिव्यप्रबंध गा रहे हैं । अब भगवान स्वयं वेदादि समस्त शास्त्र रूपी, उन के नियामक, उन के प्रतिपाद्य, शब्द व अर्थों के संबंध के नियामक इत्यादि रूप से प्रतिपादित किये जा रहे हैं । अर्थात् लोक में (तथा वेद में) शब्दार्थों का जो नियत संबंध है कि 'अमुक शब्द का अमुक अर्थ है' वह भगवदधीन बताया गया । **उन के स्वरूपस्थिति प्रवृत्ति हेतु)** कहने का यह तात्पर्य है कि भगवान ही समय पर समस्त शास्त्रों को प्रकाशित करते हैं, उन का पालन करते हैं और अंततः एक समय उन का उपसंहार भी करते हैं । यहाँ पर पूर्वाचार्यों का यह व्याख्यान है - 'मंदमतियों के बुद्धिदोषों, लेखकदोषों तथा पाठ भेदादियों से जब शास्त्र बहुत विकृत हो जाते हैं, तब भगवान उन का उपसंहार और, बाद में योग्य अवसर पाकर, पुनः आविष्कार करते हैं । 'यह कहने की आवश्यकता नहीं है कि आळवार भगवान के दिव्यमंगलविग्रह के साक्षात् दर्शन पाकर ही उन्हें पुष्पहास सुकुमार, चार भुजवाले, शंखचक्रगदाधर, नीलोत्पलश्याम और कमलनयन कह रहे हैं । प्रसिद्ध **'नायमात्मा'** श्रुति कहती है कि **'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'** । (मुं.उ.३-२-३) अर्थात् भगवान जिस पर कृपा करते हैं, उस को अपने सारे दिव्यमंगल विग्रह के सुविशद दर्शन देते हैं, जिस से वह समस्त अंगोपांग, अस्त्र भूषण आदियों का पूर्ण अनुभव कर सके ।।

**कमलक्कण्णन् एन्कण्णिन् उळ्ळान् काण्बन् अवन् कण्गळाले**
**अमलङ्गळाह विळिक्कुम् एम्पुलनुम् अवन्मूर्ति**
**कमलत्तु अयन् नम्बि तन्नै कण्णुदलानोडुम् तोत्ति**
**अमलत् तेय्वत्तोडु उलह माक्कि एन्नेत्तियुळाने ।। ९ ।।**

**(गाथा) -** **पद्माक्षो मम नेत्रगोचरतया भाति स्वयं ! यश्च मां**
**कृत्वा दिव्यकटाक्षपात्रमपि मे पञ्चेन्द्रियाणां प्रभुः ।**
**आविर्भाव्य सरोजसम्भवमजं फालाक्षयुक्तं विधिं**
**देवानप्यमलांश्च लोकसरणिं सृष्ट्वा ललाटेऽस्ति मे ।। ९ ।।**

[प्रतिपदार्थः]

**विवरणम् - पुण्डरीकाक्षो मम चक्षुर्विषयः आसीत् ; सम्यगवलोकयामि तमहम् ; सोऽपि सर्वथा माम् अनवद्यम् आकलयन् अवेक्षते । मदीयपञ्चेन्द्रियवृत्तिरपि तत्परैव । सः कः इति चेत्, सरसिजासन-ललाटनेत्रादिदेववर्गसनाथं सकलमेतज्जगतीतलम् उत्पादितवान् । स इदानीं मम ललाटस्थानमधितिष्ठति ।।**

**[शठकोपसूरेः ललाटाधिरोहणम्]**

चक्षुःप्रदेशात् निटिलप्रदेशम् अधितस्थौ भगवान्, तदिहोच्यते । 'ब्रह्मादिस्थावरान्त-सकलजगत्स्रष्टा कमलनयनो भगवान् यदा मम चक्षुःप्रदेशम् अवजगाहे तदा तमहं सम्यगेव साक्षात्कृतवानस्मि । सोऽपि स्वकीयशिशिरकटाक्षवीक्षाप्रसारणेन मम सकलानि दुरितानि दूरीकुर्वन् सन् मामेव अवलोकते' - इति कथनेन मुनिवरोऽयं विशिष्टाधिकारी इत्यवधार्यते । कथमिति चेत् ; **'न चक्षुषा गृह्यते, न संदृशे तिष्ठति रूपमस्य, न मांसचक्षुरभिवीक्षते तम्'** (महा.ना.उ.११) इत्यादिश्रुतिप्रतिपादिता प्रक्रिया सामान्यप्राकृतजनताविषया एव केवलम्, न तु श्रीशठकोपसूरिप्रभृतिविलक्षणाधिकारिविषया इति प्रतिपत्तिं द्रढयति गाथेयम् । अथ च, **मम दुरितानि दूरीकुर्वन् स भगवान् मामवलोकते -** इत्यत्र श्रमणीविदुरादयः स्मृतिपथं नेतव्याः । 'श्रमणीं धर्मनिपुणामभिगच्छ' इति कबन्धवाचा **'सोऽभ्यगच्छन्महातेजाः शबरीम्'** (रामा.बा.कां. १-५७) इत्युक्तरीत्या भगवता दाशरथिना स्वयमेव समुपेत्य विषयीकृता सदाचार्यसेवानिरता श्रमणी **'चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन'!** (रामा.अर.कां.७४-१२) - 'भगवन् ! तव दिव्यकटाक्षपातेनत्वत्प्राप्तिप्रतिबन्धक-सकलदुरितविमुक्ताऽहम् अभूवम्' इति कथितवती । अभिजनाद्यहङ्कार-योग्यतागन्धेनापि विधुरं विदुरं महात्मानं भगवान् वासुदेवः स्वकटाक्षवीक्षाप्रसारणेन पुनीते स्म इत्ययं विषयो महाभारते अत्यन्तविलक्षणप्रक्रियया समसूचि ; **'निवासाय ययौ वेश्म विदुरस्य महात्मनः'** (महा.भा.उ.प.९१-३४) इत्युक्तरीत्या स्वयमेव तस्य भवनमुपसृप्य **'विदुरान्नानि**

**बुभुजे शुचीनि गुणवन्ति च'** (महा.भा.उ.प.९१-४१) इत्युक्तरीत्या तदुपहृतमन्नम् आश्नात् । भगवतः कृष्णस्य कटाक्षवीक्षणेन अयं परिपूतोऽभूत् इति व्यासो महर्षिश्च न अकथयत्; शबरीवत् विदुरोऽपि स्ववाचा नाचचक्षे । परंतु विदुरवेश्मनि भुक्त्वा समागतोऽयमिति ज्ञात्वा तमिम् अधिक्षिपन् दुर्योधनः **'भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन ! किमर्थं पुण्डरीकाक्ष ! भुक्तं वृषलभोजनम्'** ।। (महा.भा.उ.प.८५-९२) इत्यनुयुञ्जानः पुण्डरीकाक्षेति संबोधयामास इति अवलोक्यते । गर्हणकाले हे जाल्म ! हे मूर्खेति वक्तव्ये पुण्डरीकाक्षेति पूजोक्तिकथनम् अवशाद्धि समजनि ; भवदीयपुण्डरीकदलामलायतेक्षणवीक्षणेन विदुरः स पवित्रितोऽभूदिति स्वयमेव समुदघाटयदिव । एवमेव भगवतः कटाक्षवीक्षाप्रसरः पापनिबर्हणनिपुणः इति इतिहाससिद्धम् । अनयैव प्रक्रियया मुनिवरोऽत्र स्वस्यापि तत्कटाक्षपातपरिपूततां स्वयं प्राहेति ध्येयम् ।

**मदीयपञ्चेन्द्रियवृत्तिरपि तत्परैव -** चक्षुर्व्यतिरिक्तेन्द्रियाणाम् अन्यपरत्वे सति चक्षुषः केवलं भगवत्प्रवणता न कस्मै अपि फलाय कल्पेत । न तादृशमवद्यम् इत्यभिधीयते इव । इदानीम् अनुभूयमानसौलभ्यप्रतिकोटिभूतः परत्वगुणोऽनुभूयते सरसिजासनेत्यादिना ।।

**[प्रतिपदार्थ]**

**हिन्दी - कमलनयन भगवान मेरी आँखो के विषय हुए ; अतः मैं ठीक उन के दर्शन कर रहा हूं । वे भी मुझ को सर्वथा दोषदूर बनाते हुए देख रहे हैं । मेरी पांचों इंद्रियों के भी वे विषय हैं । वे हैं जिन्होंने कमलासन (ब्रह्मा), ललाटलोचन (शिव) इत्यादि देववर्ग के साथ सकल जगत की सृष्टि की । ऐसे भगवान अब मेरे ललाट पर विराजमान हैं ।।**

**[शठकोपसूरि का ललाटपर अधिरोहण]**

इस गाथा में आळ्वार कह रहे हैं कि भगवान मेरे नेत्र से ऊपर चढकर ललाट पर विराजमान हुए ; जब ब्रह्मादि स्थावरांत जगत की सृष्टि करनेवाले कमलनयन मेरे नेत्र में विराजमान थे, तब मैं ने उन के परिपूर्ण दर्शन किये और उन्हों ने भी मुझ पर अपना सुशीतल कटाक्ष डाल कर मेरे समस्त पापों को दूर कर दिया । इस से आळ्वार की एक असाधारण विशेषता बतायी जाती है । तथाहि - वेदादिशास्त्र वारंवार घोषणा करते हैं कि भगवान मांसचक्षु के गोचर नहीं होते ; अर्थात् कोई भी मानव अपनी

भौतिक आँखों से उन के दर्शन नहीं कर सकता । अब तो आळ्वार कह रहे हैं कि मैं ने अपनी आँखों से उन के खूब दर्शन किये । इस से यह अर्थ सूचित किया जाता है कि पूर्वोक्त शास्त्र साधारण मानवों की ही बात कह रहे हैं और आळ्वार उन का अपवाद है ; अर्थात् वे ऐसे एक विशिष्ट व्यक्ति हैं जो भगवान की विशेष कृपा का पात्र होकर उन के साक्षात् दर्शन कर सकते हैं । **वे भी मुझको सर्वथा दोषदूर बनाते हुए देख रहे हैं** । यह वाक्य शबरी विदुर आदियों का स्मारक है । इन के चरित्र से यह अर्थ स्पष्ट विदित होता है कि भगवान का कटाक्ष पात मानव के समस्त पापों को भी दूर करनेवाला होता है । तथाहि - श्रीरामचंद्र भगवान कबंध के उपदेश से शबरी को ढूंढते हुए उस के यहां पधार कर, जब उस से मिले, तब सदाचार्य सेवानिरत वह भक्ता बोल उठी कि **'चक्षुषा तव सौम्येन पूताऽस्मि रघुनंदन'** (रामा.अर.कां.७४-१२) (अर्थात् हे रामचंद्र! मैं आप के सौम्य कटाक्ष पात से परिशुद्ध बन गयी, माने सद्गति प्राप्त करने में विघ्न करनेवाले समस्त पापों से मुक्त हो गयी)। एवं कुलमद धनमद इत्यादि दोषों से दूर विदुरजी पर श्रीकृष्ण भगवान ने केवल अपनी विशेष कृपा से विलक्षण अनुग्रह किया ; अर्थात् संधि कराने के उद्देश्य से हस्तिनापुर पधारने के समय, अपनी प्रतीक्षा करते बैठे हुए भीष्म, द्रोण, दुर्योधन आदियों की उपेक्षा कर, वे अचानक विदुरजी के घर पधारे । विदुरजी की सपने में भी यह कल्पना नहीं थी कि भगवान उन के घर पधारेंगे । वे थे सर्वथा गरीब । तथापि उन्हों ने कल्पनातीत प्रेम के साथ भगवान की सेवा की ; अन्न का अर्पण किया । भगवान ने भी **'विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च '** (महा.भा.उ.प.९१-४१) (माने विदुरजी से समर्पित पवित्र व रसपूर्ण अन्न खाया)। यहां पर प्रश्न यह है कि इस वाक्य में विदुरान्न को कैसे शुचि कहने में आया, जब विदुर नीच जाति के थे । आचार्य इस का समाधान देते हैं कि भगवान के कटाक्ष का लक्ष्य होकर विदुर का अन्न पवित्र हुआ । यह अर्थ ऐसे स्पष्ट शब्दों से महाभारत में उपवर्णित नहीं ; परंतु एक विलक्षण ढंग से सूचित हुआ । दुर्योधन भगवान की खुशामद करने के लिए धूमधाम से उन का स्वागत करना चाहता था । भगवान को उस की यह चालबाजी पसंद न थी ; अत: वे उस को धोखा देकर विदुरजी के यहां चले गये । इस से रुष्ट दुर्योधन ने उन से पूछा कि **'भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन । किमर्थं पुण्डरीकाक्ष ! भुक्तं वृषलभोजनम्'** ।। (महा.भा.उ.प.८५-९२) (अर्थात् भीष्म, द्रोण और मुझ को छोडकर, हे मधुसूदन ! कमलनयन ! तुम ने क्योंकर शूद्र का अन्न खाया ? इस में यह विचारार्ह है कि भगवान की निंदा करनेवाला दुर्योधन, क्योंकर उन्हें

'कमलनयन' नाम से संबोधित कर रहा है । इस का यह तत्व है कि यह वचन दुर्योधन की स्वबुद्धि से प्रयुक्त नहीं ; परंतु अंतर्यामी की प्रेरणा से उस के मुख से निकला हुआ शब्द है । कहने का यह तात्पर्य है कि जब दुर्योधन को भगवान का तिरस्कार करने का विचार हुआ, तब उसी समय भगवान ने उसके मन में यह समाधान बताया कि मैं ने अपने कमल-सदृश नेत्र के कटाक्षों से विदुर को परिशुद्ध बना कर बाद में उसका अन्न खाया । अतः दुर्योधन के मुँह से अचानक यह वाणी निकली - 'पुंडरीकाक्ष' । तथाच इन दोनों इतिहासों से यह अर्थ सिद्ध किया जाता है कि भगवान का कटाक्ष पाप विनाशक होता है । अतः यहाँ आळवार कहते हैं कि ऐसे भगवान के कटाक्ष से मेरे पाप भी नष्ट हुए । **मेरी पांचो इंद्रियों के भी वे विषय हैं** कहने का यह भाव है कि यदि दूसरी इंद्रिय दूसरी वस्तु के अनुभव करें और केवल नेत्र भगवान के दर्शन करें, तो उस में कोई रस नहीं मिलेगा ; अतः आळवार कह रहे हैं कि मुझ से ऐसा दोष नहीं हुआ, मेरी सभी इंद्रिय एक मात्र भगवान पर लग्न हैं और मैं उन का परिपूर्ण अनुभव कर रहा हूं । कमलासन इत्यादि गाथा के अवशिष्ट भाग से भगवान के प्रसक्त सौलभ्य के प्रतिद्वंद्वी परत्व का वर्णन किया गया है ।।

**नेत्तियुळ् निन्रु एन्नै याळुम् निरैमलर्प्पादङ्गळ् शूडि**
**कत्तैत्तुळाय् मुडिक्कोलक् कण्णपिरानै त्तोळुवार्**
**ओत्तैप्पिरै यणिन्दानुम् नान्मुहनुमिन्दिरनुम्**
**मत्तै यमररुमेल्लाम् वन्दु एनदु उच्चि युळाने ।। १० ।।**

**(गाथा) - भक्तानां शिरसि प्रयुक्तचरणं मौळौ तुळस्याऽञ्चितं**
**कृष्णं देवमिमं भजन्ति हि सुरास्सर्वेऽपि भक्त्या स्वयम् ।**
**रुद्रश्चन्द्रकलाधरोऽपि च चतुर्वक्त्रोऽपि चेन्द्रादयः**
**प्रत्यक्षो मम मस्तकेऽद्य नितरां भाति स्वयं तादृशः ।। १० ।।**

**[प्रतिपदार्थ]**

**विवरणम् - मदीयललाटस्थले निविश्य मच्छेषभावं सुप्रतिष्ठितमादधानं चरणारविन्दद्वन्द्वम् अवतंसपदे निधाय दिव्यतुलसीस्रगलंकृतमूर्धानं परमपुरुषं प्रणमन्तो**

**महानुभावाः चन्द्रशेखरः चतुर्मुखः शचीपतिरन्ये च सर्वेऽमराः, एतादृशप्रभावशाली स एष भगवान् मम मूर्धानमधिरुरोह ।।**

**[शठकोपसूरेः शिरसि अधिरोहणम्]**

ब्रह्मादयो महाभागाः यमुपसृप्य सत्तां लब्धुम् अवसरप्रतीक्षाः सन्ति, तत्तादृशवैभवशेवधिः महापुरुषो मम मूर्धानमधिरोढुम् उत्कण्ठितो भूत्वा सात्म्यभोगप्रदित्सया क्रमेण मम मूर्धानमधिरुरोह इत्यमन्दानन्दसंदोहघनम् उच्यते गाथयाऽनया । चन्द्रशेखरचतुर्मुख-शचीपतिप्रभृतयो देवाः भगवत्पादारविन्दद्वन्द्वम् अवतंसयति इति भगवत्प्रभावप्रख्यापनार्थम् एतावदिह विवक्षितम् । तस्य चरणारविन्दद्वन्द्वस्य यद्विशेषणं दत्तमुपक्रमे तदत्यन्तम् अवधेयम् । 'मदीय ललाटस्थले निविश्य मच्छेषभावं सुप्रतिष्ठितमादधानम्' इति यदस्ति भगवच्चरणद्वन्द्वविशेषणम् तत् मुनिवरस्यास्य परमवैष्णवतां प्रकाशयति । हरिपादद्वन्द्वाकारम् ऊर्ध्वपुण्ड्रं धारयित्वा स्वयं स्वशेषत्वप्रतिष्ठां प्रतिपेदे इति स्पष्टं हि प्रकाशितं भवति । स्वललाटे भगवदवस्थानम् अधस्तनगाथायाम् अभिहितम् । अत्र तु तच्चरणार-विन्दद्वन्द्वावस्थानम् अभिधीयते । एतच्चावस्थानम् ऊर्ध्वपुण्ड्राकारत्वेन इति ध्येयम् ।

विशेषतोऽवधेयम् । गाथायामस्यां वाक्यभेदो वर्तते । चन्द्रशेखराद्यमरप्रणत-पादारविन्दद्वन्द्वः इति वाक्यसन्निवेशम् अनाकलय्य 'परमपुरुषं प्रणमन्तो महानुभावाः चन्द्रशेखरादयोऽमराः' इति पृथग्वाक्यविन्यसनं हि वर्ततेऽत्र । एवंविधवाक्यसन्निवेशेन कमपि रहस्यतमम् अर्थविशेषम् अभ्यूहन्ति आचार्यचरणाः - महाप्रभुषु अवरोधे एकस्मात् अङ्गणादङ्गणात् अन्तरं प्रविशत्सु यथा ह्यन्तरङ्गभूतः तत्र उपसृत्य स्वाभिलषितफलविशेषं लब्ध्वा कृतकृत्याः भवन्ति, तथा सर्वेश्वरे मुनिवरस्य ललाटतलात् मूर्धानम् अवगाहमाने ब्रह्मादयो मध्ये मुखं प्रदर्श्य स्वकार्यसाधनप्रवणाः भवन्ति इति । वाक्यभेदमन्तरा विशेषणतया प्रयोगे कृते सोऽयमर्थविशेषः उपन्यसितुम् अशक्यो भवेदिति सारस्वतसारज्ञाः विजानीयुः ।।

**[प्रतिपदार्थ]**

**हिन्दी - मेरे ललाटपर विराजकर मेरे शेषत्व को सुदृढ बनानेवाले भगवान के उभय पादारविंदों को चंद्रशेखर, चतुर्मुख, शचीपति इत्यादि देवगण, अपने सिर पर धारण कर दिव्यतुलसी माला से अलंकृत मकुटवाले उन का प्रणाम कर रहे हैं । ऐसे प्रभाववाले भगवान अब मेरे सिर पर विराजमान हो गये ।।**

**[शठकोपसूरि के मस्तक पर बैठना]**

इस गाथा में आळ्वार सानंद यह उद्गार कर रहे हैं कि ब्रह्मादि बडे बडे देवता, जिन की सेवा कर धन्य बनने योग्य अवसर की प्रतीक्षा कर रहे हैं, ऐसे महामहिम भगवान मेरे सिर पर चढने को उत्कंठित हुए और फिर मुझे सात्म्यभोग का प्रदान करने की इच्छा से धीरे धीरे ऊपर चढते हुए अंततः अब सिर पहुंच कर वहां पर सुदृढ प्रतिष्ठित हो गये । भगवान का वैभव बताने के लिए चंद्रशेखर आदियों की बात की गयी है । भगवान के चरणारविंदों का जो विशेषण दिया गया है 'मेरे ललाट पर विराजकर मेरे शेषत्व को सुदृढ बनानेवाले,' यह आळ्वार की परमवैष्णवता का प्रतिपादक है । इस का यह अर्थ है कि आळ्वार ने पहले भगवान को ही अपने ललाट पर विराजमान बताया; अब तो उन के चरणारविंदो को अपने ललाट पर विराजमान बता रहे हैं । इस का यही अर्थ समझना चाहिए कि भगवान के उभय पादारविंद, आळ्वार के भाल पर, अपने समान आकारवाले ऊर्ध्वपुंड्र तिलक के रूप में विराजमान है । इस गाथा में और एक वाक्य ध्यान देने योग्य है । गाथार्थ को 'चंद्रशेखरादि देवों से संसेवित और मेरे भाल पर विराजमान उभय पादारविंदवाले...'इत्यादि रूप से एक वाक्य में कहना सरल था । परंतु यहां दो वाक्य बनाये गये हैं । इन में से एक वाक्य यह है कि 'चंद्रशेखरादिदेवता भगवत्सेवा करने के लिए योग्य अवसर की प्रतीक्षा कर रहे हैं' । इस वाक्यसंनिवेश से हमारे पूर्व आचार्य एक अद्भुत अर्थ निकालते हैं - जैसे, जब कोई महाप्रभु विशाल व सुमनोहर अपने प्रासाद में एक कमरे से दूसरे कमरे में जाता है, तब वह अवसर पाकर अंतरंग भक्त जन उस से मिलकर, योग्य सेवा कर, उस से अपने इष्ट पुरुषार्थ पाते हैं ; अर्थात् कमरे के अंदर रहने पर प्रभु से मिलना कठिन होगा, और प्रभु के अंतःपुर छोड कर बाहर आस्थान मंटप आने में बहुत देर लगेगी जब तक ये लोग उन की राह देखते नहीं बैठ रह सकते ; अतः दूसरे कमरे में जाने के लिए उस के बाहर आते ही ये लोग उस से मिलने को उत्कंठित होते हैं ; इसी प्रकार जब भगवान आळ्वार के एक अवयव का अनुभव करने के बाद, दूसरे अवयव पर चढने का प्रयत्न करते हैं, ठीक यह अवसर पाकर चंद्रशेखरादि देवता भगवान की सेवा कर उन से अपने अपेक्षित पुरुषार्थ माँग लेते हैं ।।

**उच्चियुळ्ळे निर्कुम् देवदेवर्कु कण्ण पिरार्कु**
**इच्चैयुळ् शेल्ल वुणर्त्ति वण्कुरुहूर्च्चडकोपन्**
**इच्चोन्न वायिरत्तुळ् इवैयुमोर् पत्तु एम्बिरार्कु**
**निच्चलुम् विण्णप्पम् शेय्य नीळ्कळल् शेन्नि पोरुमे ।।११।।**

**।। इति सहस्रगीत्यां प्रथमशतके नवमं दशकम् ।।**

**(गाथा) - एवं मस्तकसुप्रतिष्ठितमिमं देवाधिदेवं हरिं**
**कृष्णं प्रेमभरेण शंसितुमयं भक्तश्शठारिर्मुनिः ।**
**साहस्रं कुरुकेश्वरस्समतनोद्भक्ता निवेद्य स्वयं**
**तत्रेदं दशकं वहन्ति शिरसा तत्पादयुग्मं सदा ।।११।।**

**।। इति सहस्रगाथारत्नावल्यां प्रथमशतके नवमं दशकम् ।।**

**[प्रतिपदार्थः]**

**विवरणम् - मूर्धन्येव अवतिष्ठमानस्य देवाधिदेवस्य श्रीकृष्णपरमात्मनः स्वस्मिन् संजातमभिनिवेशं सम्यगवबोध्य श्रीकुरुकापुराधिनाथ-श्रीशठकोपमुनीन्द्रेण कीर्तिते सहस्रे अद्वितीयमेतद्दशकं भगवदग्रे विज्ञापयतां वैष्णवानां भगवत्पादारविन्दम् अवतंसपदे स्यात् ।।**

**[एतद्दशकसङ्कीर्तनस्य फलम्]**

फलकीर्तनेन सह समाप्यते इदं दशकम् । मुनिवरोऽयं क्रमशो यदलभत फलमुत्तुङ्गं तत् एतद्दिव्यसूक्तिविज्ञापनप्रवणानां सताम् अनायासलभ्यं स्यादिति कथ्यते । एकैकम् अवयवविशेषं विहाय क्रमशः उपर्युपरि अवयवान्तरेषु स्पृहातिशयेन संगतस्य भगवतः इतः परं गन्तव्यस्य स्पृहणीयस्य वा स्थलान्तरस्य अभावेन मूर्धन्येव अवस्थितिः उच्यते । **'श्रुतिशिरसि विदीप्ते ब्रह्मणि'** (श्रीभाष्यमङ्गळश्लोकः) इत्युक्तरीत्या श्रुतिशिरसि विभ्राजमानस्य भगवतः परमश्रुतिमूलभूतस्य मुनिवरस्य शिरसि संप्रति विभ्राजमानता भगवतो धिया भाग्यानामुपरि परिगणनीया सत्यम् । (परमश्रुतिः - सहस्रगीत्यात्मिका द्रमिडश्रुतिः ; तन्मूलभूतः स एष शठकोपमुनिरिति ध्येयम् ।।) **मूर्धन्येवावतिष्ठमानस्य देवाधिदेवस्ये**ति समभिव्याहारबलात् मुनिवरमूर्धनि अवस्थानतः एव स्वयं देवाधिदेवत्वम्

अन्वविन्दत् इति कथितं भवति इति रसिकमणीनाम् आचार्याणां व्याख्या । स्वतो देवाधिदेवो भगवान् हन्त ! मन्मूर्धनि अवस्थानात् आत्मानं कृतकृत्यं मन्यते इति विस्मयते मुनिवरः इत्यपि सुवचम् । मुनिसार्वभौमेऽस्मिन् एतादृशमभिनिवेशं प्रदर्शयितुमुत्सुकः परमपुरुषो गोपीजनवल्लभः एव भवितुमर्हति इति द्योतयन्नाह **श्रीकृष्णपरमात्मनः** इति । दशकेऽस्मिन् स्वावयवेषु व्यासक्तोऽभूदिति कथनं स्वप्रशंसार्थं न, अपितु भक्तजनेषु भगवतोऽभिनिवेशः एवंविधः इति प्रख्यापनेन तस्य अन्तःकरणम् आह्लादयितुमिति द्योत्यते **अभिनिवेशं सम्यगवबोध्य** इत्येनेन ।।

**।। इति प्रथमशतके नवमदशकविवरणम् ।।**

**[एतद्दशकसारार्थसङ्ग्राहकः द्रमिडोपनिषत्संगतिश्लोकः]**

**आत्मार्जवानुभवकौतुकिनोऽस्य शौरि-**
**रात्मोपभोगरुचिमभ्यधिकां ददानः ।**
**देव्यादिवद्रसयिता क्रमतोऽखिलाङ्गा-**
**न्याशिश्रियत्तदवदन्नवमे शठारिः ।।**

[प्रतिपदार्थ]

**हिन्दी - अपने सिर पर ही विराजनेवाले देवाधिदेव श्री कृष्ण भगवान के, अपने प्रति समुत्पन्न, उत्कट अभिनिवेश को ठीक समझाते हुए, श्री कुरुकापुरी में अवतीर्ण श्री शठकोपसूरी से अनुगृहीत इस सहस्रगीति के अंतर्गत इस दशक की भगवत्संनिधि में विनती करनेवाले भक्तों के सिर पर भगवान के पादारविंद नित्य ही विराजेंगे ।**

**[इस दशक का सङ्कीर्तन का फल]**

फलश्रुति के साथ यह दशक समाप्त किया गया है । इस गाथा में यह फलश्रुति गायी गयी है कि आळ्वार ने धीरे धीरे जो फल पाया, वह महान फल भगवत्संनिधि में इस दशक की विनती करनेवाले भक्तों को अनायास और नित्य ही मिल जायगा । आळ्वार के एक अवयव के बाद दूसरे अवयव के अनुभव करने के इच्छुक भगवान जब उन के सिर पहुंच गये, तब इसे भी छोडकर आगे बढने की उन की इच्छा न हुई

और जगह भी न मिली ; अतः वे उधर ही स्थिरप्रतिष्ठित हो गये । महापुरुषों के **'श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे'** (श्रीभाष्यमङ्गलश्लोकः) इत्यादि कथन के अनुसार जो भगवान श्रुतियों के सिर पर विराजते हैं, उन का परमश्रेष्ठ श्रुतिमूल श्रीशठकोपसूरी के सिर पर विराजना भी अत्यंत उचित है, और उन के अभिप्राय से यह उन के अहोभाग्य की बात है । (परमश्रेष्ठ श्रुति-सहस्रगीति नामक द्राविडवेद ; उस का मूलगायक श्री शठकोपसूरी हैं ।) **सिरपर ही विराजनेवाले देवाधिदेव** कहने से यह अर्थ सूचित किया जाता है कि भगवान आळवार के सिर पर विराजने से देवाधिदेव बने । अथवा आळवार को इस बात का आश्चर्य हो रहा है कि स्वयं देवाधिदेव भगवान मेरे सिर पर विराज कर ही अपने को कृतार्थ मान रहे हैं । श्रीकृष्ण भगवान का नाम लेनेवाले आळवार का यह भाव है कि ऐसी विलक्षण रसिकता का प्रकाशन करने में समर्थ देव, गोपीजनवल्लभ नंदनंदन श्रीकृष्णचंद्र ही हो सकते हैं । इस दशक में आळवार ने अपने एकैक अवयव में भी भगवान से प्रदर्शित अभिनिवेश का जो वर्णन किया, यह आत्मश्लाघा करने नहीं, वरन् भगवान के आश्रितजन व्यामोह का वर्णन कर, उस से उन को प्रहृष्ट करने के लिए है ; अर्थात् भगवान सीमातीत वात्सल्य के कारण भक्तों के एकैक अवयव पर भी व्यामुग्ध बनते हैं ; उन के इस अभिनिवेश को ठीक समझकर इस का वर्णन करने पर वे बहुत प्रसन्न होते हैं ; इसलिए आळवार ने प्रकृत दशक में इस अर्थ का विस्तृत वर्णन किया । इस भावना के सूचक शब्द हैं - **भगवान के समुत्पन्न उत्कट अभिनिवेश को ठीक समझाते हुए ।।**

**।। पहले शतक का नवां दशक का हिन्दी व्याख्यान समाप्त हुआ ।।**

**।। आळवार तिरुवडिगळे शरणम् ।।**

## प्रथमशतके दशमं दशकम्

**[तादृशसंश्लेषहेतुं विचार्य स्वस्याऽकिञ्चनत्वात् ईश्वरस्य निर्हेतुकम् उपकर्तृत्वं प्रतिपादयति]**

**अवतारिका**

अधस्तनदशके मुनिसार्वभौमस्य यस्तावदनुभवः समजनि स एषः सत्यम् असमाभ्यधिकः । ततोऽधिकमनुभवं प्रदातुं सर्वशक्तेनापि सर्वेश्वरेण नैव पार्यते इति वस्तुस्थितिः । तादृशोऽनुभवः सत्यं नैवास्ति खलु यो हि अनुभवम् इमम् अतिशयीत ।

अस्यैव अनुभवस्य अविच्छेदेन अनुवर्तनं तु कर्तव्यं स्यात् । तद्भगवदिच्छाधीनमिति तदास्तां नाम । अतीतानुभवजनितो हर्षप्रकर्षः इदानीम् अस्मिन्दशके स्वानुभवमुखेन प्रकाश्यते इति पूर्वाचार्याः निर्वहन्ति स्म । गवां रोमन्थः इह स्मर्तव्यः । गावो हि तृणपर्णादिकम् आहारं चरन्तः तदानीमेव नास्वादयन्ति ; स्वीकृतमाहारं तालुमूले कपोलमूले वाऽवस्थाप्य परस्तात् अनोकहच्छायायां निषद्य शनैश्शनैः अन्तः प्रवेशयन्ति । एतदेव रोमन्थपदाभिलप्यं प्रथते । एवमेव मुनिवरः पूर्वदशके स्वस्य संघटितमनुभवमेव केवलम् उदघाटयत् । तदुपजनितः आनन्दस्तु तदात्वे न सम्यग्विवृतः ; तद्विवृतिस्तु दशकेऽस्मिन् संपद्यते इति प्राचाम् आचार्याणां निर्वाहपद्धतिः । श्रीपराशरभट्टार्यास्तु एतेनार्थेन सह विशेषतोऽन्यमपि कञ्चिदर्थम् आयोजयन्ति स्म । स एवम् ; अधस्तनदशकानुभवं मुनिवरः पुनः पुनः आत्मनो हृदयेऽनुसंदधानः 'आः ! कीदृशोऽयमनुभवः ! अपारकृपाकूपारस्य भगवतः कृपाप्रवाहः कीदृशो नाम ! इतोऽभ्यधिकः कृपाप्रवाहः भगवताऽपि कर्तुं न शक्यते, नास्माभिरपि धारयितुं शक्येत । ईदृशी कृपा कथं नु तस्य संजाता ! कञ्चिदस्ति तस्याः किमपि मूलम्' ? इति सुबहु विमृशन् (मुनिवरः) सर्वथा निर्हेतुकप्रसरा सेयं कृपा इत्येव निर्धारणीयं भवति इति निश्चित्य तमेव निर्हेतुककृपाभूमानम् अनुसंधत्ते दशकेऽस्मिन् इति । स एष निर्वाहः श्रीकुरुकेशार्यानुगृहीतषट्सहस्रिकायां नास्ति । 'पेरियवाच्चान्पिळ्ळै' समाख्यश्रीमत्कृष्णगुरूत्तमानुगृहीतचतुर्विंशतिसहस्रिकायां प्रप्रथमम् आरूढः । व्याख्यायाम् अस्याम् अवतारिकावसाने अनर्घा श्रीसूक्तिरेका विराजते - **'निर्हेतुककृपाविषये श्रीपराशरभट्टार्याणाम् अनुपमवाग्विलसितप्रकाशकं खलु दशकमिदम्'** इति । वेदान्तदेशिककाले षट्सहस्रिकाव्याख्यायाः प्रचारप्राचुर्ये सत्यपि अतिसंक्षिप्ता व्याख्या सेति हेतुना चतुर्विंशतिसहस्रिकाव्याख्यायाः एव प्रवचनप्राचुर्यम् उदभूत् । वेदान्तदेशिकोऽपि इमामेव व्याख्याम् अधीत्य एतदनुसारेणैव स्वकीयां द्रमिडोपनिषत्तात्पर्यरत्नावलीम् अवातीतरत् इति भूयोभिः पद्यैः अवसीयते । तदिदम् अस्मदीये ग्रन्थान्तरे सुविशदमुपपादितम् । तदास्ताम् । प्रकृतदशकसारार्थसंग्राहकतया तत्प्रणीते (तात्पर्यरत्नावलीश्लोके -२१) **'स्ववितरणमहौदार्यतुष्टोऽभ्यचष्ट'** इति, अथ दशकानां प्रमेयसंग्राहकत्वेन प्रणीते पद्ये **'अव्याजोदारभावात्'** (२२) इति च निवेशितमिह अनुसन्धेयम् ।

भगवत्कृपायाः निर्हेतुकतामिह अनुसंदधानो मुनिवरः यद्यपि स्वविषये प्रसृतां तत्कृपाम् अधिकृत्यैव प्राह, तथाऽपि भगवत्कृपायाः स्वरूपम् एतादृशमिति प्रतिपादयति इत्येव प्रतिपत्तव्यम् । सत्संप्रदायाध्वनि स एष विषयः प्रधानतमः समिन्धे इति हेतुना,

श्रीवचनभूषणे आचार्यहृदये च स्थितानि विपुलतमानि निरूपणानि अनुसृत्य सारमिह प्रपञ्चयामः । **'चेतनानामस्मादृशां सद्गुणान् सच्चरितविशेषान् वा निमित्तीकृत्य भगवान् दयते'** इत्यभ्युपगमे सति कृपायाः सहेतुकत्वं सिध्यति ; स्वयमेव प्रसर्पति भगवत्कृपा इत्यङ्गीकारे तस्याः निर्हेतुकत्वं निष्पद्यते । ननु हेतुमन्तरेण स्वयमेव समुन्मिषति भगवतः कृपा इति कथमिदं संघटेत ? तथा सति सर्वदा सर्वेऽपि जनाः भगवत्कृपालक्ष्यभूताः एव हि भवेयुः । नैवमुपलभ्यते जगति । कालविशेषेषु अधिकारिविशेषेषु एव भगवत्कृपायाः प्रसरं पश्यामः। हेतुविशेषपुरस्कारेणैव एवं भवति इत्यवधार्यते । तथा च तत्कृपायाः सहेतुकत्वाभ्युपगमः एव साधीयान् ; निर्हेतुकतावादः निरालम्बनः इति तावत् परेषां प्रत्यवस्थानम् ।

अत्रोच्यते । भगवत्कृपा नाम गरिष्ठं वस्तु ; असमाभ्यधिकं वस्तु । तत्प्रसरं प्रति अपराधैकनिरूपणीयेषु अस्मादृशेषु हेतुत्वेन व्यपदेशार्हं यत्किमपि लघिष्ठं कर्म लघीयान् गुणो वा स्यान्नाम । तथा नाम अस्मासु संभवितुमर्हान् कतिपयान् कृत्यविशेषान् प्रदर्शयाम इह । क्रमशः अष्टौ विषयाः प्रदर्श्यन्ते ।

(१) परहिंसैकपराणाम् अस्माकम् वध्यमानव्यक्तिमध्ये कदाचित् भगवद्भागवतविरोधिजनाः अपि अन्तर्भूताः भवेयुः ; सामान्यतः प्राणिवधस्य दुष्कृतत्वेऽपि भगवद्भागवतविरोधिजनहिंसनम् सुकृतमेव । परंतु इदं सुकृतमिति विदित्वा वा तच्चिकीर्षया वा न वयम् आचरामः ; प्राणिहिंसनात्मकदुश्चरितैकनिष्ठया तत्कुर्वताम् अस्माकं कर्मणि यदृच्छया भगवद्भागवतविरोधिजनहिंसनं संघटितं भवति । (२) अन्यदपि पश्यत । विषयप्रावण्यभूम्ना गणिकासु चपला भवामः ; ताश्च कैङ्कर्यार्थं भगवदालयं गताः इति विदित्वा तद्दिदृक्षया केवलं वयं भगवदालयं प्रविशामः । एवम् असकृत् तत्र गतागतं भवति नः । भगवन्मन्दिरसेवनं सुकृतमेव यद्यपि तथाऽपि तदार्जनकुतूहलेन न वयं तत्कुर्मः ; वेश्यालोलुपतया बहुत्र पर्यटताम् अस्माकम् यदृच्छया भगवन्मन्दिरपर्यटनमपि संघटितम् । (३) अपरं च पश्यत ; अस्मदीयकेदारे काचन धेनुः प्रविश्य सस्यजग्धिम् अकरोत् ; तां प्रहर्तुं वयम् आग्रहेण धावामः ; कान्दिशीकी सा अर्थात् कमपि देवालयं प्रविश्य प्रादक्षिण्येन प्रधावति ; तत्प्रजिघृक्षासंभ्रमेण ताम् अनुधावताम् अस्माकम् यदृच्छया भगवत्प्रदक्षिणीकरणं संघटितम् । (४) संसारिणः वयम् पुत्रान् पुत्रीश्च प्रसूय नानादेशेषु सम्बन्धं कुर्मः ; सम्बन्धिनां वासस्थानेषु अर्थात् श्रीरङ्गम्, वेङ्कटाद्रिः, काञ्ची, यादवाद्रिः इत्यादयो दिव्यदेशाः अपि अन्तर्भवन्ति । सांसारिककार्यनिर्वहणाय एव केवलं तत्र तत्र जिगमिषवः, गत्वा प्रतिनिवृत्ताश्च वयम् 'श्रीरङ्गं गमिष्यामः...वेङ्कटाद्रेः प्रतिनिवृत्तास्स्मः...

